किं तद्द्वयमित्यत्राह—शास्त्रेषु व्यापृता बुद्धिः धनुषि आतता मौर्वी च इति। व्यापृता प्रवृत्ता। आतता आरोपिता। 'आततमारोपितं च' इति सज्जनः। मौर्वी धनुर्गुणः। अत्र बाणमपहाय धनुर्गुणोपादानेन तन्निनादश्रवणादेव प्रतिपक्षिणां भयेन करप्रदानं ध्वन्यते॥

तस्य संवृतमन्त्रस्य गूढाकारेङ्गितस्य च।
फलानुमेयाः प्रारम्भाः संस्काराः प्राक्तना इव ॥ २०॥

**प्रका**—अथ प्रसङ्गात् मन्त्रशक्तिं वर्णयति—तस्येति। इदमत्राकूतम्। मन्त्रे तावत्प्रधानमितिकर्तव्यतासंवरणम्। तत्र चेङ्गिताकारगूहनम्। फलं च गूढतयार्थानां पक्तिरिति। वक्ष्यति च 'गर्भशालिसधर्माणः' इत्यादि। अयं च महाशास्त्रार्थो मन्त्राधिकारे द्रष्टव्यः। संस्काराः धर्माधर्मरूपाः॥

**पदा**—मन्त्रशक्तिमाह—तस्येति। तस्य प्रारम्भाः फलानुमेयाः। प्रारम्भाः व्यापाराः। फलैरनुमेयाः अनुमातुं शक्याः। फलप्राप्तिदर्शनानन्तरमेतदनुगुणः कोऽपि व्यापारोऽस्य सञ्जात इति जनैरनुमितमभूत्। तत्र हेतुमाह—संवृतमन्त्रस्येत्यादिना। संवृतो गूढो मन्त्रो गुप्तवादो यस्य। 'वेदभेदे गुप्तवादे मन्त्र' इत्यमरः। गूढाकारेङ्गितस्य च। गूढे अत्यन्तमावृते आकारेङ्गिते येन। 'इङ्गितं हृद्गतो भावो बहिराकार आकृतिः' इति सज्जनः। अत्रोपमामाह—प्राक्तनाः संस्कारा इवेति। पूर्वजन्मभवा वासना इव। ते हि फलमात्रावगम्याः। अत्र कामन्दकः। 'यस्य मन्त्रः सुविहितो यस्याकारः सुसंवृतः। तस्य छिद्रं न पश्यन्ति नित्योद्युक्ताश्च शत्रवः' इति॥

जुगोपात्मानमत्रस्तो भेजे धर्ममनातुरः।
अगृध्नुराददे सोऽर्थमसक्तः सुखमन्वभूत् ॥ २१॥

**प्रका**—अथ प्रकृतमेवोत्थानं सप्रभेदं निर्दोषतया दर्शयति—जुगोपेति। आत्मगोपनमात्मरक्षितादिप्रकरणोक्तं द्रष्टव्यम्। अगृध्नुः 'त्रसिगृधिधृषिक्षिपेः क्नुः' इति ताच्छील्ये क्नुप्रत्ययः। अयमर्थः—उत्साहस्तावदात्मरक्षणे त्रिवर्गसम्पादने चोपयुज्यते। स चोपयोगः सामान्यपुरुषेषु अभिसन्धिदूषितत्वात्तथा न श्लाघ्यः। तस्मिंस्तु तद्दोषाभावाल्लोकोत्तरतां प्राप्तः। विभावना चात्रालङ्कारः। 'क्रियायाः

प्रतिषेधेऽपि फलव्यक्तिर्विभावना' इति। अत्र त्रासादिपर्युदासेन गोपनादि विधीयते। अनातुरपदेऽपि अत्र क्रियार्थः कश्चिदूह्यताम्। कारणान्तराणि च शास्त्रप्रामाण्यं सहजन्मास्तिक्यं लोकयात्रातात्पर्यं पुरुषार्थबहुमानश्च क्रमाद्व्यज्यन्ते॥

**पदा—जुगोपेति।** सः आत्मानं जुगोप। आत्मानं देहं रक्षितवान्। अर्थशास्त्रेष्वात्मरक्षितकप्रकरणोक्तप्रकारेणात्मरक्षणं कृतवान् इत्यर्थः। किं प्रतिपक्षात् भयं तत्र कारणम्? नेत्याह—अत्रस्त इति। त्रस्तत्वान्नेत्यर्थः। शास्त्रप्रामाण्यादिति भावः। सः धर्मं भेजे अनुष्ठितवान्। अनातुरः आतुरो रोगी। आस्तिक्यादिभिरिति भावः। स अर्थं आददे आर्जितवान्। अगृध्नुः। 'गृधु अभिकाङ्क्षाया'मित्यस्माद्धातोः 'त्रसिगृधिधृषिक्षिपेः क्नु'रिति ताच्छील्ये क्नुप्रत्ययः। अलुब्ध इति यावत्। लोकयात्रार्थमिति भावः। सः सुखं अन्वभूत्। असक्तः सक्तत्वान्न। पुरुषार्थबहुमानादिति भावः। अत्र त्रासादिपर्युदासेन गोपनादिविधानात् विभावनालङ्कारः। 'क्रियायाः प्रतिषेधेऽपि फलव्यक्तिर्विभावना' इति॥

**ज्ञाने मौनं क्षमा शक्तौ त्यागे श्लाघाविपर्ययः।**
**गुणा गुणानुबन्धित्वात्तस्य सप्रसवा इव ॥ २२ ॥**

**प्रका**—अथ केषांचिद्गुणानां मिथोविरोधे सत्यपि समावेशं दर्शयन् सिद्धाश्रमस्येव तस्य कश्चिदेवानुभाव इति दर्शयति—**ज्ञान** इति। मौनमुचितावसरे भाषणम्। श्लाघाविपर्ययोऽविकत्थनम्। गुणा इत्याद्यो गुणशब्दः विषयभूतानाह। द्वितीयस्तु तेषु सत्स्वसम्भविनो मौनादीनाह। अनुबन्धित्वात् साहचर्यात्। सप्रसवाः सह प्रसवो जन्म येषाम्। समानजन्मान इति यावत्। ज्ञानादयो मौनादिभिर्भ्रातर इव सङ्गता बभूवुरित्यर्थः। मौनादीनां च गुणत्वमनुसन्धेयम्। यथाह कामन्दकः 'नान्योपतापि वचनं मौनव्रतचरिष्णुता' इति। यथा च भारतीयः—'महासत्त्वोऽतिगम्भीरः क्षमावानविकत्थनः' इति॥

**पदा**—परस्परविरुद्धानामपि गुणानां तस्मिन् समावेशमाह—**ज्ञान** इति। ज्ञाने मौनम्। आसीदिति शेषः। ज्ञाने सत्यनवसराभाषणमासीत्। शक्तौ क्षमा बले सति क्षमासीत्। त्यागे श्लाघाविपर्ययः दाने सत्यविकत्थनत्वमासीत्। इत्थमहं दत्तवानित्युद्घोषणं श्लाघा। अत्रोत्प्रेक्षामाह—तस्य गुणाः गुणानुबन्धित्वात्

सप्रसवाः इवेति। गुणा ज्ञानादयः। गुणान् मौनादीन् अनुबन्धुं शीलं येषां तेषां भावस्तत्त्वं तस्मात्। गुणसाहचर्यादित्यर्थः। सह प्रसवो जन्म येषाम्। सोदरा इवेति यावत्। ज्ञानादयो मौनादिभिः सोदरा इव परस्परमविरुद्धाः संगताश्च बभूवुरिति भावः॥

अनाकृष्टस्य विषयैर्विद्यानां पारदृश्वनः।
तस्य धर्मरतेरासीद्वृद्धत्वं जरया विना ॥ २३ ॥

प्रका—अथात्मीयस्यैव कालेन प्रधानगुणत्रयसम्पत्त्या प्रमाणभूतो लोके सोऽभवदित्याह—अनाकृष्टस्येति। वृद्धत्वमिति। चतुर्विधम्। हि वृद्धत्वं तत्र वैराग्येणैकम्। यथा स्कान्दपुराणे—'वैराग्येणापि वृद्धस्ते सूनुः पर्वतकन्यके' इति। ज्ञानशीलवयोभिस्त्रीणि। तत्र वाल्मीकिः—'ज्ञानवृद्धैर्वयोवृद्धैः शीलवृद्धैश्च सज्जनैः। कथयन्नास्त वै नित्य'मिति। प्रथमे पादे वैराग्यम्, द्वितीये ज्ञानम्, तृतीये शीलं चोक्तम्। चतुर्थे च चतुर्थस्यापोहः वृद्धश्च प्रमाणभूतः। यथा वृद्धोपसेवी'ति॥

पदा—अनाकृष्टस्येति। तस्य जरया विना वृद्धत्वं आसीत्। जरा वार्धक्यम्। वृद्धत्वं प्रमाणभूतत्वम्। यथा वृद्धोपसेवीत्यत्र। वैराग्यवृद्धत्वं ज्ञानवृद्धत्वं शीलवृद्धत्वं वयोवृद्धत्वं चेति चतुर्विधं हि वृद्धत्वम्। तत्र वयोवृद्धत्वप्राप्तेः पूर्वमेव तस्याल्पेनैव कालेन वृद्धत्वत्रयमासीदित्यर्थः। अत्र त्रयाणामपि वृद्धत्वानां प्राप्तिं क्रमेण विशेषणत्रयेणाह—अनाकृष्टस्येत्यादिना। आकृष्टो वशीकृतः। शब्दादिभिरनाकुलितेन्द्रियस्येत्यर्थः। विद्यानां पारदृश्वनः अवधिं दृष्टवतः। 'दृशेः क्वनिबि'ति भूतकाले क्वनिप्। धर्मे रतिस्तात्पर्यं यस्य॥

प्रजानां विनयाधानाद्रक्षणाद्भरणादपि।
स पिता पितरस्तासां केवलं जन्महेतवः ॥ २४ ॥

प्रका—अथ प्रधानभूतानुष्ठानत्रयसम्पत्त्या तस्य वर्णाश्रमगुरुत्वमप्यासीदित्याह—प्रजानामिति। विनयाधानं हि मुख्यं राजर्षिवृत्तम्। श्रूयते हि कश्चि

---

1 सा।

दविनीतं पुत्रमादाय मैथिलमुपातिष्ठत्। स च तं प्रतिगृह्यात्मविद्यायां व्यनीनयत् इत्यादि। पितर इत्यादिना व्यतिरेक उक्तः। केवलमिति। विनयाधानादि न तदायत्तमित्यर्थः॥

पदा—प्रजानामिति। सः प्रजानां विनयाधानात् रक्षणात् भरणात् अपि पिता। विनयस्याधानात् निधानात्। अत्र वाचस्पतिः—'एष सद्भिः सदा कार्यो बालेषु विनयो गुणः' इति। भरणात् भोजनादिदानैः पोषणात्। अपिः समुच्चये। पितृकर्तव्यानां विनयादीनां विधानात् जनानां पितैवासीदित्यर्थः। तासां पितरः केवलं जन्महेतवः। जननस्यैकस्यैव हेतवः। केवलमिति। 'त्रिलिङ्गं त्वेककृत्स्नयोः' इति सिंहः। अनेन पुत्रवदेव पालनमुक्तम्। तदुक्तम्, 'तस्य पालयतः सम्यक् प्रजाः पुत्रानिवौरसान्' इति॥

**स्थित्यै दण्डयतो दण्ड्यान् परिणेतुः प्रसूतये।**
**अप्यर्थकामौ तस्यास्तां धर्म एव मनीषिणः ॥ २५ ॥**

प्रका—अथ धर्मरतेरिति प्रेमविषयो यो धर्म उक्तः तस्य मुखान्तरेणापि निष्पत्तिं दर्शयति—स्थित्यै इति। स्थितिर्मर्यादा। प्रसूतिः प्रजा। अर्थकामौ भिन्नस्वभावावित्यर्थः। ननु दण्डेरकथितं कर्म किं न श्रूयते, विशेषाविवक्षया। तदुक्तम्—'धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसङ्ग्रहात्। प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया' इति। तद्विवक्षायां तु श्रूयत एव, यथा गर्गान् शतं दण्डयतीति। तर्हि दण्ड्यानिति गतार्थम्। नैवम्, अदण्ड्यदण्डनस्यापि प्रामादिकत्वात्। तदुक्तम्—'अदण्ड्यदण्डने राज्ञो दण्डस्त्रिंशद्गुणोऽम्भसि। वरुणाय प्रदातव्यो ब्राह्मणेभ्यस्ततः पर'मिति। एवं च दण्ड्यानेव दण्डयति स्म इति विधिगर्भोऽयमनुवाद इत्यवसेयम्। अत्र स्थित्यै न तु संचयाय इति परिसंख्या। अपीति विरोधः। 'विरोधः सोऽविरोधेऽपि विरुद्धत्वेन यद्वचः' इति। मनीषिण इति काव्यलिङ्गम्। एते च मिथः सङ्कीर्यन्ते। तत्र परिसंख्या काव्यलिङ्गेनोपक्रियते, मनीषाफलत्वात् परिसंख्यानस्य। सा च तद्भावापत्तिलक्षणमन्वयमुत्थापयन्ती विरोधमुन्मीलयतीत्ययं संकरः। तदुक्तम्—'अविश्रान्तिजुषामात्मन्यङ्गाङ्गित्वं तु संकरः' इति। तेन च यो मनीषी तस्यान्यदारसमाणस्यापि स्वाभिलषितसिद्धिर्भवति इति समर्थकं सामान्यमन्वितमन्यत् तात्पर्येण प्रकाश्यते। पदप्रकाश्यश्चायमर्थः शक्त्युद्भवोऽर्थान्तरन्यासध्वनिः॥

पदा—धर्मप्रधानत्वमाह—स्थित्या इति। तस्य अर्थकामौ अपि धर्म एव आस्ताम्। अपिशब्दस्तयोः धर्मत्वप्राप्तेरसंभावनामाह। आस्ताम् 'अस भुवि' इत्यस्माल्लङ्। धर्मत्वप्राप्तिमेवाह—विशेषणाभ्याम्। दण्ड्यान् दण्डयतः। दण्डार्हानेवार्थाद्दण्डं कुर्वतः। प्रामादिकमदण्ड्यदण्डनमत्र निवार्यते। 'अदण्ड्यदण्डने राज्ञो दण्डस्त्रिंशद्गुणोऽम्भसि। वरुणाय प्रदातव्यो ब्राह्मणेभ्यस्ततः परम्' इति वचनात्। किमर्थमित्यत्राह—स्थित्यै इति। मर्यादायै। न संचयायेत्यर्थः। परिणेतुः विवाहकर्तुः। प्रसूतये प्रजायै। न तु कामाय। अत्र परिसङ्ख्यालङ्कारः। अपिशब्दो विरोधालङ्कारमाह। 'विरोधः सोऽविरोधेऽपि विरुद्धत्वेन यद्वचः' इति। एवमनुष्ठाने हेतुमाह—मनीषिण इति। अत्र काव्यलिङ्गमलङ्कारः। तेषां चात्र संकरः। 'अविश्रान्तिजुषामात्मन्यङ्गाङ्गित्वं तु सङ्करः' इति॥

दुदोह गां स यज्ञाय सस्याय मघवा दिवम्।
सम्पद्विनिमयेनोभौ दधतुर्भुवनद्वयम् ॥ २६ ॥

प्रका—इत्थं तस्य परार्थैकपरत्वेन धर्मपर्यवसायितामुक्त्वा पुनरावापव्यापितामाह—दुदोहेति। गां भुवम्। 'परिवृत्तिर्विनिमयो योऽर्थानां स्यात्समासमै'रिति परिवृत्तिरलङ्कारः। उपमायास्तु व्यज्यमानाया धर्मवीरं प्रत्यङ्गभूतायाः प्राधान्याद्ध्वनित्वम्। यथा देवः परमकारुणिको मघवा दिवो वृष्टिं दुहानः सस्यसम्पदा क्षितिमाप्याययति तथायमपि तत्तुल्यः क्षितेर्धनमाहरन् यज्ञेन देवलोकमिति॥

पदा—दुदोहेति। सः यज्ञाय गां दुदोह। यागाय भूमिं दुग्धवान्। राजभ्यः करं गृहीतवानित्यर्थः। मघवा सस्याय दिवम् इन्द्रो व्रीह्यादिसम्पदे दिवन्दुदोह। वृष्टिं कृतवानित्यर्थः। उभौ सम्पद्विनिमयेन भुवनद्वयं दधतुः। उभौ राजमघवानौ सम्पदो विनिमयेन परिवृत्त्या। 'परिवृत्तिर्विनिमयो योऽर्थानां स्यात् समासमैः'। भुवनद्वयं गां दिवं च। दधतुः राजा यज्ञैः स्वर्गस्थान् प्रीणयामास। इन्द्रो वृष्ट्या भूमिस्थानित्यर्थः। अत्र परिवृत्तिः॥

न किलानुययुस्तस्य राजानो रक्षितुर्यशः।
व्यावृत्ता यत्परस्वेभ्यः श्रुतौ तस्करता स्थिता ॥ २७ ॥

**प्रका**—अथ तथा धर्मे वर्तमानस्य यशोऽपि निस्साधारणमवर्जनीयतया फलमभूदित्याह—**न किलेति**। किल सम्प्रधारणे। 'किल नन्वोः सम्प्रधारणायाम्' मिति निरुक्तवचनात्। तच्चावधारणम्। रक्षितुरिति सम्यग्रक्षणादित्यर्थः। अननुयानमुपपादयति—व्यावृत्तेत्यादिना। परस्वेभ्यः परधनेभ्यः। श्रुतौ स्वशब्दे। तस्करतया तत्कर्म अपहारो लक्ष्यते। अन्यदापि राजन्वतीषु प्रजासु योऽपहारः परधनानि न विषयीचकार स तस्य तु राज्ञः काले स्ववाचकमेव विषयीकृतवान्। तस्करताशब्द एवास्तमितोऽभूदित्यर्थः। अत्र तस्करताशब्दतदभावयोर्विषयविषयिभावसंबन्धाभावेऽपि सम्बन्धः सिद्धत्वेनाध्यवसित इत्यतिशयोक्तिप्रकारत्वम्॥

**पदा**—उक्तस्यार्थस्य फलमाह—**न किलेति**। राजानः तस्य यशः न अनुययुः किल। किलशब्दः संप्रधारणे। 'वार्तायां किलशब्दः स्यादैतिह्ये संप्रधारणे' इत्युत्पलमाला। अन्ये राजानस्तस्य कीर्तिं नानुजग्मुरेव। हेतुमाह—रक्षितुरिति। सम्यग्रक्षितुः। 'तत्साधुकारिणि तृन्'। तस्करता परस्वेभ्यः व्यावृत्ता श्रुतौ स्थिता यत्। तस्करता तस्करकर्म। अपहार इत्यर्थः। परस्वेभ्यः परधनेभ्यः व्यावृत्ता निवृत्ता सती श्रुतौ स्ववाचकभूततस्करताशब्द एव स्थिता यत् तस्मात्। दिलीपे रक्षितरि तस्करताशब्द एवापहृतः। नाश्रुयतेत्यर्थः॥

**द्वेष्योऽपि सम्मतः शिष्टस्तस्यार्तस्य यथौषधम्।**
**त्याज्यो दुष्टः प्रियोऽप्यासीदङ्गुलीवोरगक्षता ॥ २८ ॥**

**प्रका**—अथ रागद्वेषपरिहारेणापि धर्मपरत्वं दर्शयति—**द्वेष्य इति**। शिष्टः धार्मिकः। आर्तस्य व्याधिपीडितस्य। अत्रोपमानाभ्यां प्रकृतोपपादनं कृतम्॥

**पदा**—रागद्वेषयोरप्यभावमाह—**द्वेष्य इति**। तस्य शिष्टः सम्मतः आसीत्। शिष्टः धार्मिकः। सम्मतः माननीयः। द्वेष्यः अपि शत्रुरपि धार्मिकश्चेत्तस्य माननीय एवाभूत्। अत्रोपमामाह—आर्तस्य औषधं यथा इति। आर्तस्यौषधमिव। दुष्टः त्याज्यः आसीत् उपेक्षणीयोऽभूत्। प्रियोऽपि इष्टोऽपि उरगक्षता अङ्गुली इव। सर्पदष्टा अङ्गुली इवेत्युपमा॥

**तं वेधा विदधे नूनं महाभूतसमाधिना।**
**तथा हि सर्वे तस्यासन् परार्थैकफला गुणाः ॥ २९ ॥**

प्रका—अधुना तु 'प्रजानामेव भूत्यर्थं'मित्युपक्रान्तं यत्परार्थैकपरत्वं तदेवेयत्पर्यन्तं यावद्भङ्ग्यन्तरैर्बहुभि[1]: प्रपञ्चितमिति निर्वाहयन्नाह—तमिति। नूनं निश्चये। 'तर्कनिश्चययोर्नून'मिति यादवः। समाधिर्ध्यानम्। 'समाधिस्तु पुमान् ध्यान' इति केशवः। तत्सृष्टिसमयध्यानेनेत्यर्थः। कथमित्याह—तथाहीति। परार्थैकफलाः। उक्तप्रकारेण इति शेषः। गुणाः सन्ध्यादयः शौर्यादयश्च। महाभूतगुणानां च शब्दादीनामखिलगुँण[2]भोक्तृभोगसाधनता प्रसिद्धा॥

पदा—उक्तं परार्थैकपरत्वमुपसंहरति—तमिति। वेधाः तं महाभूतसमाधिना विदधे नूनम्। वेधाः ब्रह्मा तं राजानं महाभूतानां पञ्चभूतानां समाधिना ध्यानेन। 'समाधिस्तु पुमान् ध्यान' इति केशवः। तत्सृष्टिसमयध्यानेनेत्यर्थः। नूनंशब्दो निश्चये। 'नूनं तर्केऽर्थनिश्चये' इति सिंहः। यथा महाभूतसृष्टौ तद्गुणाः परार्थैकफलाः भूयासुरिति समाधिः तथास्य सृष्टावपीति भावः। तथात्वनिश्चये हेतुमाह—तथा हि तस्य सर्वे गुणाः परार्थैकफलाः आसन्निति। तथा हि उक्तप्रकाराद्धेतोः। गुणाः शौर्यादयः परप्रयोजनमेकमेव फलं येषाम्। महाभूतगुणानां च शब्दादीनामखिलोपभोगसाधनत्वं प्रसिद्धम्॥

स वेलावप्रवलयां परिखीकृतसागराम्।
अनन्यशासनामुर्वीं शशासैकपुरीमिव ॥ ३० ॥

प्रका—अथ तथा परार्थवृत्तेः स्वसुखनिरभिसन्धिकस्य तस्याजिताभिगमाय भूमण्डले न किञ्चिदप्यवशिष्टमित्याह—स वेलेति। वेलैव वप्रवलयो यस्या इति रूपकम्। अनन्यशासनामुर्वीं अन्यशासनरहिता यथा भवति तथा कृत्वेत्यर्थः। एकशब्दस्य केवलार्थत्वे यथा पुरीमात्रं राजमात्रस्याप्यनन्यशासनं भवति तथास्योक्तविशेषणविशिष्टं भूमण्डलमेवेत्यर्थः। प्रधानार्थत्वे तु कुलराजधानीमिवानन्यशासनां शशासेत्यर्थः। अत्र च वेलेत्यादिविशेषणद्वयोपक्रान्तोपमा अनन्यशासनशासनेन निर्व्यूढेति मन्तव्यम्। इदं तु कर्मविशेषणमप्यर्थतः क्रियाविशेषणम्। इत्थं तावदनेन प्रकरणेन विविधराजवृत्ते प्रवृत्तस्य विजिगीषोः फलयोगो दर्शितः। तदुक्तम्—'विद्याविनीतो राजा तु प्रजानां विनये रतः। अनन्यां पृथिवीं भुङ्क्ते सर्वभूतहिते रत' इति। एवं चात्र नायकस्य वीरो रसः गुणीकृतार्थो

1 बहुभिरिति क्वचिन्नास्ति। 2 गुणेति क्वचिन्नदृश्यते।

धर्मश्च पुरुषार्थः काममपि प्रकर्षमुपमासादितौ । यथाह—'वीरः प्रभावविनयाध्यवसायसत्त्वामोहाविषादनयविस्मयविक्रमाद्यैः । उत्साहभूः स च दयारणदानयोगात्त्रेधा किलात्र धृतिगर्वमतिप्रहर्षाः' इति ॥

**पदा**—स इति । सः उर्वीं अनन्यशासनां शशास । उर्वीं भूमिम् । अविद्यमानं अन्यशासनं यस्याम् । 'नञोऽस्त्यर्थानां बहुव्रीहिर्वा चोत्तरपदलोपश्चे'ति समासः । इदमर्थात् क्रियाविशेषणम् । अन्यशासनरहिता यथा भवति तथा कृत्वेत्यर्थः । वेलैव वप्रवलयः वलयाकारेण वप्रः प्राकारो यस्याः इति रूपकम् । परिखीकृताः सागरा यस्याः ॥

**तस्य दाक्षिण्यरूढेन नाम्ना मगधवंशजा ।**
**पत्नी सुदक्षिणेत्यासीदध्वरस्येव दक्षिणा ॥ ३१ ॥**

**प्रका**—अथ रघोरुत्पत्तिं वर्णयितुं तदुपोद्धातभूतदिलीपचरितोपवर्णनेनारभते—**तस्येति** । दाक्षिण्यं परच्छन्दानुवर्तित्वम् । 'दक्षिणस्त्रिषु विदग्धे च परच्छन्दानुवर्तिनी'ति केशवः । रूढेन प्रसिद्धेन । अध्वरस्य पत्नी दक्षिणेत्यागमसिद्धम् । तत्पक्षे दाक्षिण्यमृत्विजां सामर्थ्याधानमागमसिद्धम् । अत्र विशिष्टोपमानबलादन्योन्यानुरूपताद्यसंख्यं व्यङ्ग्यजातमुन्नेयम् । अत एवास्या विशिष्टवंशप्रसूतत्वमुक्तम् ॥

**पदा**—**तस्येति** । तस्य नाम्ना सुदक्षिणा इति पत्नी आसीत् । मगधवंशजा मगधवंशजाता । अध्वरस्य दक्षिणा इवेत्युपमा । यागस्य दक्षिणा भार्येति श्रुतिप्रसिद्धिः । नाम्नोऽन्वर्थताप्रतिपादनद्वारेण साधारणधर्ममाह—दाक्षिण्यरूढेनेति । दाक्षिण्येन परच्छन्दानुवर्तित्वेन । अन्यत्र वैदग्ध्येन । ऋत्विजां सामर्थ्याधानमत्र वैदग्ध्यम् । तेन रूढेन प्रसिद्धेन । 'दक्षिणस्त्रिषु विदग्धे परच्छन्दानुवर्तिनी'ति केशवः ॥

**कलत्रवन्तमात्मानमवरोधे महत्यपि ।**
**तया मेने मनस्विन्या लक्ष्म्या च वसुधाधिपः ॥ ३२ ॥**

**प्रका**—आनुरूप्यमेवासाधारणकार्यमुखेन प्रकटयति—**कलत्रवन्तमिति** । अवरोधेनान्तःपुरिकासमूहो लक्ष्यते । लक्षणाप्रयोजनं च प्राभूत्यातिशयः ।

यथा "यस्यावरोधस्तनचन्दनाना"मिति। महति प्रशस्ते । मनस्विन्येति वक्ष्यमाण-गुरुधेनुपरिचर्याक्लेशसहत्वाभिप्रायः । तथा मननं प्रति काव्यलिङ्गत्वम् चास्य । तया लक्ष्म्या चेति समुच्चयालङ्कारः । "तत्सिद्धिहेतावेकस्मिन्यत्रान्यत्तत्करं भवेत् । समुच्चयोऽसा'विति । अत्र च कळत्रवत्ताभिमानहेतुभूतायां स्थितायां लक्ष्मीरपि तद्धेतुतयोपन्यस्ता । उपमा चात्र व्यङ्ग्या गुणीभूता । मनस्विन्या च तया च तथा मननं तस्यापि वक्ष्यमाणप्रकारेणोपयोगिनीं मनस्वितामभि-व्यञ्जयति ॥

प्रका— कळत्रवन्तमिति । वसुधाधिपः तया लक्ष्म्या च आत्मानं कळत्रवन्तं मेने। कळत्रवन्तं प्रशस्तभार्यायुक्तम् । अवरोधे महति अपि। अवरोधशब्दः स्त्रीणां निवासगृहवाचक एव। तेन तद्गताः स्त्रियो लक्ष्यन्ते । महति प्रशस्तेऽपि । अन्तःपुरस्त्रीषु सर्वासु प्रशस्तास्वपीत्यर्थः । मनस्विन्या प्रशस्तमनसा । तया लक्ष्म्या चेति समुच्चयोऽलङ्कारः । तस्यां कळत्रवत्ताभि-मानहेतुभूतायां लक्ष्म्या अपि तद्धेतुत्वेनोपन्यासात् । 'तत्सिद्धिहेतावेकस्मिन् यत्रान्यत्तत्करं भवेत् । समुच्चयोऽसा'विति ॥

तस्यामात्मानुरूपायामात्मजन्मसमुत्सुकः ।
विलम्बितफलैः कालं स निनाय मनोरथैः ॥ ३३ ॥

प्रका—अथ पुत्रोत्पत्तिलक्षणकार्यसंपादके पञ्चसन्धिके नेतुः इतिवृत्ते "मुखं बीजसमुत्पत्तिर्नानार्थरससम्भवा" इति मुखसन्धेर्बीजन्यासरूपमुपक्षेपाख्यमङ्ग-माह—**तस्यामिति ।** आत्मजन्मा पुत्रः तत्रोत्सुकः । तस्यामित्यात्मजन्मना सम्बन्धः । यथा 'सुदक्षिणायां तनयमि'ति । सापेक्षत्वेऽपि समासो गमकत्वात् । विलम्बितफलैरित्यग्राम्यरूपमुदारम् अलब्धफलैरित्यस्मिन्नर्थे । मनोरथाः सङ्कल्पाः पुत्रस्य मुखंद्रक्ष्यामीत्यादयः । फलं च दर्शनादि । अत्रात्मानुरूपायामिति तदौत्सुक्ये हेतुः । तच्चौत्सुक्यं प्रीतेर्व्यभिचारि । मनोरथाश्चानुभावाः । तत्र बीजभूतो नायकोत्साह औत्सुक्यात्मनोपक्षिप्तः । तदिदमुपक्षेपाख्यमङ्गम् ॥

पदा— **तस्यामिति ।** सः मनोरथैः कालं निनाय । मनोरथैः संकल्पैः । तस्याम् आत्मजन्मनि पुत्रे समुत्सुकः सम्यक् साभिलाषः । पुत्रमुखं द्रक्ष्यमित्यादिभिः सङ्कल्पैः कालं निनायेत्यर्थः । आत्मनोऽनुरूपा सदृशी तस्याम् । विळम्बित-

फलैः विलम्बितं विलम्बनमेव फलम्। 'चिन्ता हि कार्यप्रतिबन्धहेतुः' इति न्यायादिति भावः। कर्तरि वा निष्ठा। विलम्बितं फलं दर्शनादि येषां अलब्धफलैरित्यर्थः॥

संतानार्थाय विधये स्वभुजादवतारिता।
तेन धूर्जगतो गुर्वी सचिवेषु निचिक्षिपे ॥ ३४ ॥

प्रका—अथ बीजबाहुल्यरूपं परिकरमाह—सन्तानेति। धूर्भारः। पालनमित्यर्थः। गुर्वीति प्रस्तुतकार्यस्य गुरुतरत्वं द्योतयति। सचिवेषु वैषयिकी सप्तमी। निचिक्षिपे पुनरादानाय न्यस्तेत्यर्थः। अत्र पर्यायोऽलङ्कारः। 'एकं क्रमेणानेकस्मिन् पर्याय' इति। अत्र धूः स्वभुजेषु कृता सचिवेषु क्रियते। स कार्यार्थी सचिवायत्तसिद्धित्वमङ्गीकृतावानित्यर्थः॥

पदा—सन्तानार्थायेति। तेन जगतः धूः सचिवेषु निचिक्षिपे। तेन राज्ञा। धूः भारः। पालनमित्यर्थः। सचिवेषु मन्त्रिषु। निचिक्षिपे पुनरादानाय न्यस्ता। गुर्वी महती। तेन च प्रकृतस्य कार्यस्य महत्तरत्वं द्योत्यते। सन्तानार्थाय विधये स्वभुजात् अवतारिता। सन्तानं सन्ततिः अर्थः प्रयोजनं यस्य। विधये विधिं कर्तुम्। अवतारिता अवरोपिता॥

अथाभ्यर्च्य विधातारं प्रयतौ पुत्रकाम्यया।
तौ दम्पती वसिष्ठस्य गुरोर्जग्मतुराश्रमम् ॥ ३५ ॥

प्रका—तमेवंविधं प्रस्तौति—अथेति। विधातारमिति सृष्टिकर्तृत्वात्। प्रयतौ शुद्धौ। पुत्रकाम्ययेत्यौत्सुक्योपदर्शितायाः प्रीतेरनुवादः। तेन च तस्या एव विभावादिसम्पत्त्या प्रकर्षः प्रक्रान्त इति दर्शयति। तौ दम्पती तथाविधलोकोत्तरमिथुनमित्यर्थः। वसिष्ठस्येति श्रुत्यादिप्रसिद्धान् गुणान् द्योतयति, गुरोरिति पूर्वसम्बन्धम्। एतौ चाभिगमनं प्रयोजयतः। आश्रमं भौमं स्थानम्। बीजनिष्पत्तिरूपः परिन्यासोऽयम्॥

पदा—अथेति। अथ तौ दम्पती पुत्रकाम्यया विधातारम् अभ्यर्च्य वसिष्ठस्य गुरोः आश्रमं जग्मतुः। तौ दम्पती लोकोत्तरौ भार्यापती। पुत्रकाम्यया पुत्रेच्छया। काम्यचेतीच्छार्थे काम्यच्। अप्रत्ययादित्याकारप्रत्ययः।

विधातारं ब्रह्माणम् । तस्य सृष्टिकर्तृत्वात् पुत्रार्थिभिरर्चनीयत्वम् । गुरोः आश्रमं भौमस्थानम् । प्रयतौ शुद्धौ ॥

स्निग्धगम्भीरनिर्घोषमेकं स्यन्दनमास्थितौ ।
प्रावृषेण्यं पयोवाहं विद्युदैरावताविव ॥ ३६ ॥

प्रका — स्निग्धेति । स्निग्धत्वमेकत्वं च श्रुतिसुखत्वमङ्गसुखं च द्योतयतः । ऐरावतो मेघः यत्संबन्धादैरावती विद्युत् । 'चम्पाशतह्रदाह्रादिन्यैरावत्यः क्षणप्रभे'त्यमरः । 'मेघेषु मेघाः प्रतिभान्ति सक्ता' इति वाल्मीकिना मेघोपरि मेघस्य स्थितिरुक्ता । अथवैरावतगजस्यापि मेघरूपत्वं तदुपरि संचारश्च भवति । 'ऐरावतोऽभ्रमातङ्ग' इति हलायुधः । 'ऐरावतं विजानीयान्नागमम्बुदगोचरम्' इति-कात्यायनः । इन्द्रधनुर्वाचित्वे नपुंसकता स्यात् । प्रावृषेण्यमिति विशिष्टकालिकत्वाभिधायी स्निग्धेत्यादिसामान्यान्वयस्य मेघोपरि मेघस्य च सिद्धये भवदुपमानस्वरूपमेव संपादयति । अन्यथा तदुपादानं दोषः । यथा 'स पीतवासा' इत्यादौ । अत एव दृष्टान्तपरिकर इति केचिदाहुः । यथा 'मंझंठिअधरणिहरं जंजळअसमुंदमंडळंतंवेळम् । रविरहवेअविअळिअं पडिअंपिवळंकडंखकोडचिंका' ॥

पदा — अथ दशभिः श्लोकैः तावेव दम्पती विशिनष्टि — स्निग्धेत्यादिना । अत्र च नियमार्थं वनं गच्छतोरपि तयोः पुरनिवासोचित उपचारो दर्शयिष्यते । एकं स्यन्दनम् आस्थितौ एकं साधारणं रथमधिष्ठितौ । अनेन मार्गेऽपि परस्पराङ्गसङ्गसुखमुक्तम् । विद्युदैरावतौ प्रावृषेण्यं पयोवाहमिव । विद्युदैरावतौ तटिन्मेघौ । ऐरावतसम्बन्धादेव विद्युदैरावतीत्युच्यते । 'चम्पाशतह्रदाह्रादिन्यैरावत्यः क्षणप्रभा' इत्यमरः । प्रावृषेण्यं प्रावृषि भवम् । 'प्रावृष एण्य' इत्येण्यप्रत्ययः । पयोवाहं मेघमिवेत्युपमा । मेघस्योपरि मेघस्थितिः सम्भवतीत्युक्तं रामायणे — 'मेघेषु मेघाः प्रतिभान्ति सक्ताः' इति । अत एव नोत्प्रेक्षा । साधारणं धर्ममाह — स्निग्धगम्भीरनिर्घोषमिति । स्निग्धो मधुरः गम्भीरश्च निर्घोषः शब्दो यस्य ॥

मा भूदाश्रमपीडेति परिमेयपुरस्सरौ
अनुभावविशेषात्तु सेनापरिगताविव ॥ ३७ ॥

1 वृ ।

**प्रका—मा भूदिति ।** परिमेया अल्पा इत्यर्थः । अनुभावोऽनभिभवनीयताप्रतिपत्तिहेतुः प्रभावः । यथाह केशवः—'अनुभाववाक् । सूचके चापि भावस्य सतां च मतिनिश्चये । प्रभावे' चेति । न त्वानुभावः । प्रमाणाभावात् । तस्य विशेषोऽतिशयः ॥

**पदा—मा भूत्** इति आश्रमपीडा मा भूत् इति । परिमेयपुरस्सरौ । इतिशब्दो हेतौ । परिमेयाः अल्पाः पुरस्सराः पुरोगा ययोः । अनुभावविशेषात्तु सेनापरिगतौ इव । अनुभावविशेषात् प्रभावातिशयात् । 'अनुभाववाक् । सूचके चापि भावस्य सतां च मतिनिश्चये । प्रभावे चे'ति केशवः । अनभिभवनीयताहेतुभूतात् प्रभावातिशयात्तु चतुरङ्गसैन्यपरिवृताविवेत्यर्थः । अत्रोत्प्रेक्षा । अत्र श्लोकद्वये चिरातीतस्य नायकवृत्तान्तस्य वाग्भङ्ग्या प्रत्यक्षायमाणतया दर्शितत्वात् भाविकमलङ्कारः । 'प्रत्यक्षा इव यत् भावाः क्रियन्ते भूतभाविनः । तद्भाविकमि'ति ॥

**सेव्यमानौ सुखस्पर्शैः सालनिर्यासगन्धिभिः ।**
**पुष्परेणूत्किरैर्वातैराधूतवनराजिभिः ॥ ३८ ॥**

**प्रका—सेव्यमानाविति ।** उत्किरतीत्युत्किरः । 'इगुपधज्ञाप्रीकिरः कः' । अत्र 'विशेषणैर्यत्साकूतैरुक्तिः परिकरस्तु सः' इति वातविशेषणानां स्पृहणीयताभिप्रायत्वात्परिकरालङ्कारः ॥

**पदा—सेव्यमानाविति ।** वातैः सेव्यमानौ । सुखः सुखकरः स्पर्शो येषाम् । सालस्य सर्जतरोः निर्यासस्य रसस्य गन्धोऽस्त्येषामितीनिः । उत्किरन्तीत्युत्किराः । 'इगुपधे'त्यादिना कः । पुष्परेणूनामुत्किरैः पुष्परेणून् प्रसारयद्भिरित्यर्थः । आधूता ईषत्कम्पिता वनराजयो वनसमूहा यैः । अनेन श्लोकेन व्यजनसुखमुक्तम् । अत्र विशेषणैः वातानां शैत्यादिगुणयोगात् स्पृहणीयत्वमुक्तम् । अत एव विशेषणानां स्पृहणीयताभिप्रायत्वात् परिकरोऽलङ्कारः । 'विशेषणैर्यत् साकूतैरुक्तिः परिकरस्तु सः' इति । अत्र च स्वभावोक्त्या सहैकवाचकानुप्रवेशलक्षणः सङ्करः । 'स्वभावोक्तिस्तु डिम्भादेः स्वक्रियारूपवर्णन'मिति ॥

**मनोभिरामाः शृण्वन्तौ रथनेमिस्वनोन्मुखैः ।**
**षड्जसंवादिनीः केका द्विधा भिन्नाः शिखण्डिभिः ॥ ३९ ॥**

प्रका—मनोभिरामा इति । रथनेमिस्वनोन्मुखत्वं मेघगर्जितशङ्कया भवत् केकानिमित्तम् । षड्जसंवादिनी षड्जसदृशी । 'षड्जं वदति मयूर' इति वचनात् । केकाशब्दस्य निर्वचनं क्षीरस्वामिना कृतम् । 'के मूर्ध्नि कायतीति केका' इति । 'कै गै शब्दे' इति । अतश्च तारत्वम् । 'तारः शिरसि गीयत' इति । स च द्विविधः । स्निग्धो विस्मयादिषु । दीप्तो भयादिषु । तत्र चादृष्टपूर्वमहाराजदर्शनजनितविस्मयभयवशेन तारद्वयभेदसम्भव इत्यवसेयम् । भिन्ना भेदेनोच्चारिता इत्यर्थः ॥

पदा—मनोभिरामा इति । केकाः शृण्वन्तौ । 'केका वाणी मयूरस्ये'त्यमरः । मनोभिरामाः मनोहराः । षड्जसंवादिनीः, षड्जः स्वरविशेषः । षड्भ्यः स्थानेभ्यो जायते षड्जः । तदुक्तम् 'उरःकण्ठं तालुजिह्वानासादन्तांश्च संस्पृशन् । षड्भ्यः संजायते यस्मात् तस्मात् षड्ज इति स्मृतः' । षड्जं संवदितुं सदृशीकृत्य वदितुं शीलमासामिति तथा । षड्जसदृशीरित्यर्थः । 'सदृक्सदृशसंवादिसजातीयानुजीविनः' इति दण्डी । 'षड्जं मयूरो वदति ऋषभं चातको वदेत् । अजा वदन्ति गान्धारं क्रौञ्चो वदति मध्यमम् । पुष्पसाधारणे काले कोकिलो वक्ति पञ्चमम् । प्रावृट्काले तु संप्राप्ते धैवतं दर्दुरो वदेत् । सर्वदा तु तथा देवि निषादं ब्रुवते गजाः' इति मातङ्गे । शिखण्डिभिः मयूरैः द्विधा भिन्नाः भेदेनोच्चारिताः । के मूर्ध्नि कायति स्वनतीति केकाः । 'कै गै शब्दे' इति धातुः । 'नृणामुरसि मन्द्रस्तु द्वाविंशतिविधो ध्वनिः । स एव कण्ठे मध्यः स्यात् तारः शिरसि गीयते' इति सङ्गीतमणौ । तारोऽत्युच्चध्वनिः 'उच्चैस्तरो ध्वनिस्तारः' इति हलायुधः । स च द्विविधः । स्निग्धो विस्मयादिषु । दीप्तो भयादिषु । अत्र चादृष्टपूर्वमहाराजादिदर्शनेन जनितेन विस्मयेन भयेन च द्वैविध्यसम्भवः । रथनेमिस्वनेनोन्मुखैःउन्नतमुखैः । मेघध्वनिशङ्कयेति शेषः । अनेन श्लोकेन वन्दिभिः क्रियमाणस्य गीतरागस्यानुभवो दर्शितः । अत्र स्वभावोक्तिः ॥

पवनस्यानुकूलत्वात्प्रार्थनासिद्धिशंसिनः ।
रजोभिस्तुरगोत्कीर्णैरस्पृष्टालकवेष्टनौ ॥ ४० ॥

प्रका—पवनस्येति । 'वेष्टनं मुकुटोष्णीषकबाटेष्विति' केशवः ॥

**पदा**—**पवनस्येति**। पवस्य अनुकूलत्वात् तुरङ्गोत्कीर्णैः रजोभिः अस्पृष्टालकवेष्टनौ। अनुकूलत्वात् गमनानुकूलत्वाद्धेतोः। रथतुरगैः उत्कीर्णैः उत्क्षिप्तैः अस्पृष्टे अळकवेष्टने ययोः। अळको नायिकायाः, वेष्टनं नायकस्येति क्रमः। वेष्टनमुष्णीषम्। न मकुटम्। तस्य तपोवनप्राप्तावनुचितत्वात्। 'वेष्टनं मकुटोष्णीषकवाटेष्वि'ति केशवः। अनुकूलत्वादेव प्रार्थनासिद्धिशंसिनः प्रार्थनायाः सिद्धिं कार्यसिद्धिं शंसितुं शीलमस्येति तथा। पवनविशेषणमिदम्। अनुकूलत्वविशेषणमिति केचित्। पवनस्यानुकूलत्वं सुशकुनं प्रतिकूलत्वं दुश्शकुनम् इति शकुननिर्णये। 'प्रतीपवनाशकुनान्न जग्मुः' इति नैषधकाव्ये च। अनेन छत्रकार्यं दर्शितम्। छत्रस्य रजोवारणेऽप्युपयोगात्। वक्ष्यति च 'रजो विश्रामयन् राज्ञां छत्रशून्येषु मौलिषु'॥

परस्पराक्षिसादृश्यमदूरोज्झितवर्त्मसु।
मृगद्वन्द्वेषु पश्यन्तौ स्यन्दनाबद्धदृष्टिषु ॥ ४१ ॥

**प्रका**—**परस्परेति**। नायिकामृगीलोचनयोरन्योन्योपमां नायकः पश्यति, सापि नायकमृगयोरित्यर्थः। एष च द्वन्द्वशब्दो मिथुनपर्यायः। तद्विशेषणे दर्शनसौकर्यहेतू॥

**पदा**—**परस्परेति**। मृगद्वन्द्वेषु परस्पराक्षिसादृश्यं पश्यन्तौ। मृगद्वन्द्वेषु एणमिथुनेषु परस्परस्य अन्योन्यस्य अक्षिसादृश्यं नायिकामृगीनयनयोरन्योन्योपमां नायकः पश्यति, सा तु नायकमृगनयनयोरित्यर्थः। अदूरे समीपे। उज्झितं त्यक्तं वर्त्म मार्गो यैः। राज्ञो विश्वसनीयत्वबुद्ध्या दूरापसर्पणाभावः। वक्ष्यति च—'धनुर्भृतोऽप्यस्य दयार्द्रभाव'मिति। स्यन्दने रथे आबद्धा नितरां बद्धा दृष्टयो यैः। अनेन विशेषणद्वयेन सादृश्यदर्शनसौकर्यमुक्तम्। अत्र स्वभावोक्तिः॥

श्रेणीबद्धां वितन्वद्भिरस्तम्भां तोरणस्रजम्।
सारसैः कलनिर्ह्रादैः क्वचिदुन्नमिताननौ ॥ ४२ ॥

**प्रका**—**श्रेणीति**। तोरणं बहिर्द्वारम्। तेन च तत्प्रतिरूपं दार्वादिनिर्मितं लक्ष्यते। तत्र च मङ्गळार्थं स्रक् बध्यते। अस्तम्भां तोरणस्रजमिति एक-

गुणहानिकल्पनायां साम्यदार्ढ्ये विशेषोक्तिरिति केचित्। इह तु काव्यप्रकाशकृतो दर्शने द्योतकशून्येयं तोरणस्रङ्निर्माणोत्प्रेक्षा। सा त्वस्तम्भामिति सव्यतिरेका ॥

पदा—श्रेणीति। क्वचित् सारसैः उन्नमिताननौ। क्वचित् कस्मिंश्चित् प्रदेशे। सारसैः पक्षिविशेषैः। हेतौ तृतीया। उन्नमितमाननं ययोः। उन्नमिताननत्वे हेतुमाह—कलनिर्ह्रादैरिति। मधुरनिनदैः। अस्तम्भां तोरणस्रजं वितन्वद्भिः कुर्वद्भिः। 'तोरणोऽस्त्री बहिर्द्वारमिति' सिंहः। बहिर्द्वारे मङ्गलार्थं माला बध्यते। द्योतकरहितेयमुत्प्रेक्षा। अस्तम्भामिति व्यतिरेकः। श्रेणीबद्धां श्रेण्या पङ्क्त्या बद्धां रचिताम् ॥

ग्रामेष्वात्मनिसृष्टेषु यूपचिह्नेषु यज्वनाम् ।
अमोघाः प्रतिगृह्णन्तावर्घ्यानुपदमाशिषः ॥ ४३ ॥

प्रका—ग्रामेष्विति। 'न्यस्तं निसृष्टम्' इत्यमरसिंहः। एतच्च प्रीतिविशेषं द्योतयति। यूपचिह्नेष्विति बुद्धिपूर्वं विलम्बं ध्वनति। यज्वनामित्यमोघत्वे हेतुः। अमोघा इत्यादरणीयत्वं दर्शयति। प्रतिगृह्णन्तावित्यादरम्। अर्घः पूजा तदर्थं जलमर्घ्यं तस्यानुपदं तत्प्रतिगृह्येत्यर्थः।

पदा—ग्रामेष्विति। आत्मनिसृष्टेषु ग्रामेषु अर्घ्यानुपदम् आशिषः प्रतिगृह्णन्तौ। आत्मनैव न्यस्तेषु 'न्यस्तं निसृष्टमिति' सिंहः। एतच्च प्रीत्यतिशयद्योतकम्। ग्रामेषु देशेषु, अर्घः पूजा तदर्थं जलमर्घ्यं तस्यानुपदं पश्चात्। पश्चादर्थेऽव्ययीभावः 'अर्घ्यं प्रतिगृह्य तदनन्तरमित्यर्थः। 'यज्वा तु विधिनेष्टवान्' इत्यमरः। एतच्च आशिषाममोघत्वे हेतुः। यूपा यज्ञस्तम्भा एव चिह्नानि येषु। अमोघाः सफलाः ॥

सरसीष्वरविन्दानां वीचिविक्षेपशीतलम् ।
आमोदमुपजिघ्रन्तौ स्वनिश्वासानुवादिनम् ॥ ४४ ॥

प्रका—सरसीष्विति। सरसीषु तत्परिसराध्वसु। शीतलमिति गन्धे उपचारात्। गन्धो हि स्वाश्रयपरमाणुगत एव घ्राणमुपसर्पति। ते च शीतलत्वयोगिनो भवन्तीति। स्वनिश्वासानुवादिनमिति औपमानिकी प्रीतिरुक्ता।

पदा—सरसीष्विति । सरसीषु अरविन्दानाम् आमोदम् उपजिघ्रतौ ॥ सरसीषु तत्परिसराध्वसु इत्यर्थः । गङ्गायां घोष इतिवत् । अरविन्दानां पद्मानाम् आमोदं सौरभ्यम् । उपजिघ्रन्तौ उपघ्राणं कुर्वाणौ । वीचीनां विक्षेपेण शीतलं शीतम् । अत्र पद्मरजःपरमाणुभिः सह जलपरमाणूनामपि पवनेनोपनीतत्वात् गन्धस्यापि शीतळत्वप्रतीतिरुपपन्नेत्यवसेयम् । स्वनिश्वासानुवादिनम् । आत्मनो निश्वासमनुवदितुं शीलमस्येति तथा । अत्र नायकस्य नायिकानिश्वासगन्धसाम्यप्रतीतिरित्यवगन्तव्यम् । तेन च प्रीत्यतिशय आमोदे । 'निश्वास इव सीतायाः वाति वायुर्मनोरमः' इति रामायणे । अत्र शीतोपचारसुखम् ॥

हैयङ्गवीनमादाय घोषवृद्धानुपस्थितान् ।
नामधेयानि पृच्छन्तौ वन्यानां मार्गशाखिनाम् ॥ ४५ ॥

प्रका—हैयङ्गवीनमिति । 'तत्तु हैयङ्गवीनं यद्ध्योगोदोहभवं घृत'मिति सिंहः । 'घोष आभीरपल्ली स्यादिति' च । पृच्छन्तौ सुलभकुतूहलत्वेन राज्ञी राजानं पृच्छति । सोऽपि तदर्थं तान् पृच्छति । अथवा तस्यापि कुतूहलं सम्भवतीति । यथा चन्द्रापीडं प्रति महाश्वेतायाः 'अपूर्वदर्शनकुतूहलिवा चेत' इत्युक्तिः । दृष्टे तु जिज्ञासा च भवति । क्वचित् उपयोगस्य संभवात् ॥

अत्र कुळके स्वभावोक्तिभाविकयोर्यथायोगं समावेशः । तयोश्च लक्षणम् 'स्वभावोक्तिस्तु डिम्भादेः स्वक्रियारूपवर्णनम्' इति । 'प्रत्यक्षा इव यद्भावाः क्रियन्ते भूतभाविनः । तद्भाविक'मिति च । तत्र सेव्यमानावित्यादिषु स्वभावोक्तिः । स्निग्धगम्भीर इत्यादिषु भाविकम् । तस्य तु भूयःप्रबन्धव्यापित्वं द्रष्टव्यम् । अत्र च नियमार्थं गच्छतोरपि तयो राजोपचाराणां निष्पत्तिः दर्शिता । अत्र स्निग्धेत्यादौ चोद्यानगमनादिसमयसमुचितस्य व्यवहारस्य । सेव्यमानावित्यादौ व्यजनस्य । मनोभिरामा इत्यादौ गीतस्य । पवनस्येति छत्रकार्यस्य । छत्रस्य रजोनिवारणेऽप्युपयोगात् । वक्ष्यति च 'रजो विश्रामयन् राज्ञां छत्रशून्येषु मौलिषु' इति । श्रेणीबद्धामिति तोरणस्रजः । ग्रामेष्विति त्रैविद्योपस्थानस्य । सरसीष्विति शिशिरोपचारस्य । हैयङ्गवीनमिति जानपदोपस्थानस्य । यथा विक्रमोर्वश्याम् ।—'विद्युल्लेखाकनकनिकषश्रीवितानं ममाभ्रं व्याधूयन्ते निचुळतरुभिर्मञ्जरीचामराणि । घर्मच्छेदात्पटुतरगिरो वन्दिनो नीलकण्ठा धाराहारोपनयनपरा

वैगमाः सानुमन्तः' इति। यत्र चैवं कुळकादिनिबन्धः तत्र विप्रकीर्णानां वाक्यार्थानां पिण्डीकरणं प्रयोजनम्। तच्च क्वचिद्वाच्यौचित्येन। क्वचिद्रसौचित्येन। तत्र वाच्यौचित्येन यथानन्तरोक्तकलापके। रसौचित्येन तु निरूप्यते। इह खलु भावादिवर्गानन्तःपातित्वेन रसानुपयोगिनामनुपादानमेव। तदन्तःपातित्वादुपयोगिनां तु द्वयी गतिः। आवश्यकतयानावश्यकतया च। अवश्योपयोगिनामपि द्वैधम्। परस्परया साक्षाच्च। तत्र साक्षादुपयोगिनां विधेयतया वर्णनम्। अन्येषां तु उभयेषामनुवाद्यत्वेन। अनुवादे च पिण्डीकरणम्। यदि हि विधेयतया वर्ण्येरन् तदा वाक्यार्थीभूतेषु तेषु विश्राम्यन्त्याः प्रतीतेर्दुरासदो रसः स्यात्। 'मुख्यार्थहतिर्दोष' इति दोषलक्षणम्। रसश्च मुख्योर्थः। उक्तं चान्येन दोषपर्यायमनौचित्यं प्रस्तुत्य। 'तस्य च विवक्षितरसादिप्रतीतिव्यवधानविघ्नविधायित्वं नाम सामान्यलक्षणमिति'। कथं तर्हि शिशुपालवधादौ पर्वतादेर्महता प्रबन्धेन वर्णनम्? एतच्च दत्तोत्तरमेव ध्वनिकृता 'विस्तरेणान्वितस्यापि वस्तुनोन्यस्य वर्णनम्। रसस्य स्याद्विरोधाया' इति वदता। तथा च तत्र जगच्छासितुमिति प्रथमोपक्षिप्तस्य प्रबन्धव्यापिनः कार्यसाधकस्य वीरस्य तावद्दूरविच्छेदो दुरपह्नव एव। प्रयत्नविच्छेदोऽपिसुलक्षः। अथवा महाकवीनामभिसन्धयोऽस्माभिर्दुरवगाहाः। अत एवात्र रसावहितचेतसा कविनार्चनादिरनूद्यमानत्वेनोपनिबद्धः। गमनादिस्तु नायकव्यापारो विधेयत्वेन। स चानुभावरूपो रसस्य साक्षादङ्गम्। अन्यस्तु न तथा॥

पदा—हैयङ्गवीनमिति। हैयङ्गवीनम् आदाय उपस्थितान् घोषवृद्धान् वन्यानां मार्गशाखिनां नामधेयानि पृच्छन्तौ। 'तत्तु हैयङ्गवीनं यद्ध्योगोदोहभवं घृतम्' इति सिंहः। उपस्थितान् प्राप्तान्। घोषेषु वृद्धान्। 'घोष आभीरपल्ली स्यादि'त्यमरः। वन्यानां वने भवानाम्। मार्गे स्थितानां शाखिनां वृक्षाणाम्। नामधेयानि नामानि। पृच्छेर्दुह्यादित्वाद्द्विकर्मकत्वम्। राज्ञी कुतूहलातिशयाद्राजानं पृच्छति। सोऽपि तानिति भावः। अत्र ज्ञानपदोपदासुखम्॥

काप्यभिख्या तयोरासीद्व्रजतोः शुद्धवेषयोः।
हिमनिर्मुक्तयोर्योगे चित्राचन्द्रमसोरिव ॥ ४६ ॥

प्रका—कापीति। अव्यपदेश्या। अभिख्या शोभा। व्रजतोः तत्समयसंभविनीत्यर्थः शुद्धो नियमोचितो वेषः परिधानादिः। हिमनिर्मुक्तयोः। शिशिरा-

स्यय इत्यर्थः। योगे चैत्रपौर्णमासीसम्भविनि। अत्र तयोर्यत्तथा व्रजनमुपमानयोश्च यो विशिष्टकालानुभावी योगः तदुभयमपूर्वशोभासंपादनेन परस्परसादृश्यं निर्वहतीत्यनुसन्धेयम्। उपमाने निरावरणत्वमुक्तम्। उपमेये तु परिमेयपुरस्सरत्वादिना लभ्यते॥

पदा—कापीति। व्रजतोः तयोः कापि अभिख्या आसीत्। व्रजतोः कापि अनिर्देश्या। अभिख्या शोभा। 'किं शब्दस्त्वपि साद्येऽर्थमात्रेऽवागोचरेपि च' इति केशवः। 'अभिख्या नामशोभयोरित्य'मरः। शुद्धो नियमोचितो वेषः परिधानादिर्ययोः। हिमनिर्मुक्तयोः चित्राचन्द्रमसोः इव शिशिरात्यये हिमेभ्यो निर्मुक्तयोः चित्राचन्द्रमसोः चित्रायाश्चन्द्रमसश्च चैत्रपौर्णमासीसंभवे योगे सङ्गमे इव। उपमालङ्कारः॥

तत्तत् भूमिपतिः पत्न्यै दर्शयन् प्रियदर्शनः।
अपि लङ्घितमध्वानं बुबुधे न बुधोपमः ॥ ४७ ॥

प्रका—तत्तदिति। सवीप्सेन तच्छब्देन तत्प्रथमदर्शनोक्तानुक्तपदार्थजातपरामर्शः क्रियते। दर्शयन्निति हेतौ शता। हेतुत्वं चाबोधनं प्रति तत्र प्रयोजकव्यापारेणैतदाह। सा तावदेतद्दर्शनेनैव तृप्ता। तद्दर्शनं चैतन्नियोगादेवेति। अत एवोक्तं प्रियदर्शन इति। यथा कुमारसम्भवे "ध्रुवेण भर्त्रा ध्रुवदर्शनाय नियुज्यमाना प्रियदर्शनेन" इत्यादि। लङ्घितमतिक्रान्तम् अपि लङ्घितत्वेन न ज्ञातवान्। तत्तद्दर्शयतोऽस्यापरामृष्ट एवाध्वातीत इत्यर्थः। बुधः सोमसुतः। तदुपमित्या महतो राजर्षिवंशस्य प्रवर्तकत्वं द्योत्यते। अत्र सात्त्विकनायकगुणेषु माधुर्यमुपनिबद्धम्। तस्य च लक्षणम् 'श्लक्ष्णो विकारो माधुर्यं संक्षोभे सुमहत्यपि' इति। यथा 'कपोले जानक्या' इत्यादि। अत्र च गुरुदिदृक्षालक्षणे महति विकारहेतौ सत्यपि मार्गलङ्घनविकारस्योचितनायिकोपलालनपरिहाणेन माधुर्यमुपनिबद्धम्। नत्वत्र वीरोपमर्दकः शृङ्गार इति मन्तव्यम्। यतः पत्न्यै इत्युक्तम्। पत्नीशब्दश्च धर्मसाधनभूतायां रूढः, न कान्तादितुल्यकक्ष्यः॥

पदा—तत्तदिति। भूमिपतिः पत्न्यै तत् तत् दर्शयन् तत्तत्पदार्थप्रदर्शनाद्धेतोरित्यर्थः। लङ्घितमपि न लङ्घितत्वेन बुबुधे। सा तु न पदार्थसार्थदर्शनोत्सुका राजदर्शनमात्रापेक्षिणीत्याह— प्रियदर्शन इति प्रियमिष्टं दर्शनं

यस्य । अत एव दर्शयन्नित्युक्तम् । तन्नियोगादेवान्यदर्शनमिति भावः । बुधेन सोमसुतेनोपमा सादृश्यं यस्य । अनेनास्य महतो राजवंशस्य प्रवर्तकत्वं ध्वनितम् ॥

स दुष्प्रापयशाः प्रापदाश्रमं श्रान्तवाहनः ।
सायं संयमिनस्तस्य महर्षेर्महिषीसखः ॥ ४८ ॥

प्रका—अथाध्वलङ्घनफलमाह—स इति ॥ दुष्प्रापयशाः । कथमन्यथा तादृशं यशो लभ्यत इति भावः । श्रान्तबाहन इति त्वरा सूचिता । एतच्च वक्ष्यमाणधुर्यविश्रामणादेशाभिप्रायम् । सायमित्यविलम्बं त्वराफलं द्योतयति । संयमिन इति ज्ञानशक्तिं द्योतयद्वक्ष्यमाणायाम्सन्ततिस्तम्भकारणसाक्षात्कारशक्ते-र्मार्गपरिशोधकम् । महर्षेराशिषैवाभिलषितसंपादनशक्तस्येत्यर्थः । यथाहुः—'लौकिकानां हि साधूनामर्थं वागनुवर्तते । ऋषीणां पुनराद्यानां वाचमर्थोऽनुवर्तते ॥' इति । अत एवामोघाः प्रतिगृह्णन्तावित्यत्रार्थानुसारित्वं वाचोऽनुसन्धेयम् । एते च विशेषणे अभिगम्यताभिप्राये । महिष्याः कृताभिषेकायाः सखा । महिषीसहाय इति यावत् । तत्पुरुषसमासः । बहुव्रीहौ समासान्ताभावात् । एतच्च विशेषणमाश्रमप्राप्तौ तस्याः प्राधान्यं प्रतिपादयन्न्यग्भावनिवृत्तिपरम् । सः तथाविधलोकोत्तरव्यवसायशालित्वान्निस्साधारणयशःपात्रभूतः श्रान्तैरपि वाहनैः कार्यगौरवात् त्वरमाणो गच्छन् राज्याभिषेकदीक्षायामपि संविभागभागिन्याः समग्रनायिकागुणमहिताया आत्मसमायाः श्रमापनोदनादौ साचिव्यं कुर्वन्नलौकिक-ज्ञानक्रियाशक्तेः गुरोराश्रमं तदहरेव प्राप्तवानित्यर्थः ॥

पदा—स इति ॥ सः सायं तस्य महर्षेः आश्रमं प्रापत् । सायमिति सन्ध्यावाचकमव्ययम् । 'सायं सन्ध्या पितृप्रसूः' इत्यमरः । सन्ध्यायामित्यर्थः । महर्षेः आशिषैवाभिलषितसंपादनसमर्थस्येत्यर्थः । तदुक्तम् 'लौकिकानां हि साधूनामर्थं वागनुवर्तते । ऋषीणां पुनरार्याणां वाचमर्थोऽनुवर्तते ॥' इति । दुष्प्रापमन्यैरप्राप्यं यशो यस्य । श्रान्तानि क्लान्तानि वाहनान्यश्वा यस्य । संयमिनः जितेन्द्रियस्य । ज्ञानशक्तिमत इति यावत् । महिष्याः कृताभिषेकायाः सखा सहायः । 'राजाहस्सखिभ्यष्टच्' इति समासान्तः । तत्पुरुषश्चायम् । बहुव्रीहौ समासान्ताभावात् ॥

1 अविलम्बस्त्वराफलं द्योत्यते इति क्वचन पाठः ।

वनान्तरादुपावृत्तैः समित्कुशफलाहरैः ।
पूर्यमाणमदृश्याग्निप्रत्युद्यातैस्तपस्विभिः ॥ ४९ ॥

प्रका—वनान्तरादिति ॥ फलाहरैः 'आङि ताच्छील्ये' इति हरतेरच्-प्रत्ययः । अदृश्याग्निप्रत्युद्यातैः । अयमागमसिद्धोऽर्थः ॥

पदा—अथ चतुर्भिराश्रमं विशिनष्टि—वनान्तरादिति ॥ तपस्विभिः पूर्यमाणम् । कर्मणि लट् शानच् । वनान्तरात् उपावृत्तैः वनमध्यान्निवृत्तैः । समिधः कुशाः फलानि च समित्कुशफलानि । तान्याहर्तुं शीलमेषामिति तथा । 'आङि ताच्छील्ये' इति हरतेरच् । अदृश्येन द्रष्टुमशक्येनाग्निना वैतानिकाग्निना प्रत्युद्यातैः प्रत्युद्गतैः । प्रोष्यागच्छत आहिताग्नीनग्नयः प्रत्युद्गच्छन्तीत्यागमसिद्धोऽर्थः ॥

सेकान्ते मुनिकन्याभिरालवालाम्बुपायिनाम् ।
विश्वासाय विहङ्गानां तत्क्षणोज्झितवृक्षकम् ॥ ५० ॥

प्रका—सेकान्त इति ॥ विश्वासाय । विहङ्गानामित्यत्रेदमनुसन्धेयम् । मृगाणामेव मुनिषु विस्रम्भः कविभिर्वर्ण्यते । न तु विहङ्गानाम् । अथवा मुनिकन्यानां अभ्यासातिरेकाभावात् वृक्षपरित्याग उक्तः ॥

पदा—सेकान्त इति ॥ मुनिकन्याभिः सेकान्ते तत्क्षणोज्झितवृक्षकं मूलसेकावसाने मुनिकुमारीभिः तत्क्षणे तत्काल एवोज्झितास्त्यक्ता वृक्षका बालवृक्षा यस्मिन् । किमर्थं तदानीमेव गमनमित्यत्राह—आलवालाम्बुपायिनां विहङ्गानां विश्वासाय । आलवाले यदम्बु तत् पातुं शीलमेषां इति तथा । विहङ्गानां पक्षिणां विश्वासाय ॥

आतपात्ययसंक्षिप्तनीवारासु निषादिभिः ।
मृगैर्वर्तितरोमन्थमुटजाङ्गणभूमिषु ॥ ५१ ॥

प्रका—आतपेति । संक्षिप्ताः, न तूद्धृताः । अनेन मृगैः क्रियमाणो नीवारलोपो मुनिपत्नीनां नातिपरिहार्य इति गम्यते । रोमन्थवर्तनेन च मृगाणां विस्रम्भातिशयः ॥

1 त्य ।

**पदा**—**आतपेति** ॥ मृगैः वर्तितरोमन्थं वर्तितः कृतो रोमन्थो यत्र । रोमन्थो भक्षितस्यैव पुनरुद्गीर्य चर्वणमिति यादवः । उटजाङ्गणभूमिषु निषादिभिः । उटजस्य पर्णशालायाः अङ्गणभूमिषु अङ्गणप्रदेशेषु निषादिभिः निषदनशीलैः । आतपापायसंक्षिप्तनीवारासु आतपस्यापाये अपगमे संक्षिप्ताः पुञ्जीकृताः नीवाराः तृणधान्यानि यासु । 'तृणधान्यानि नीवाराः' इत्यमरः ॥

अभ्युद्धृताग्निपिशुनैरतिथीनाश्रमोन्मुखान् ।
पुनानं पवनोद्धूतैर्धूमैराहुतिगन्धिभिः ॥ ५२ ॥

**प्रका**—**अभ्युद्धृतेति** ॥ अभ्युद्धरणं अग्निप्रणयनम् । आश्रमोन्मुखान् । दूरादेवेत्यर्थः । पवनोद्धूतत्वमत्र हेतुत्वेनोपात्तम् । आहुतिगन्धित्वं तु तत्पैशुन्ये हेतुः । अत्राश्रमस्वभावोक्तिरलङ्कारः । सा च तदभिगमनेन कृतकृत्याभिमानिनो नायकस्य धर्मवीराङ्गतयालङ्कारः ॥

**पदा**—**अभ्युद्धृतेति** ॥ पवनेनोद्धूतैः धूमैः आश्रमोन्मुखान् अतिथीन् पुनानम् । पवनेनोद्धूतैः कम्पितैः । प्रसारितैरिति यावत् । आश्रमं प्रत्युन्मुखान् अभिमुखान् अतिथीन् पान्थान् पुनानं पूतान् कुर्वाणम् । अभ्युद्धृतस्य प्रणीतस्याग्नेः पिशुनैः सूचकैः । अभ्युद्धरणमग्नेः प्रणयनमिति भागुरिः । प्रणयनं नामाग्निहोत्रहोमात्पूर्वमेव कर्तव्या क्रिया । आहुतेर्होमद्रव्यस्य गन्धोऽस्यास्तीति । अत्र सर्वत्राश्रमस्वभावोक्तिरलङ्कारः ॥

अथ यन्तारमादिश्य धुर्यान्विश्रामयेति सः ।
तामवारोपयत्पत्नीं रथादवततार च ॥ ५३ ॥

**प्रका**—अथ प्राप्ताश्रमस्य गुरुसमागमोपक्रमं वर्णयति—**अथेति** ॥ अत्र देशविशेषः पत्न्यवतारणं चास्योचितकारित्वं दयालुत्वं च द्योतयति ॥

**पदा**—अथ प्राप्ताश्रमस्य नेतुर्वृत्तान्तमाह—**अथेति** ॥ अथ सः धुर्यान् विश्रामय इति यन्तारम् आदिश्य तां पत्नीं रथात् अवारोपयत् अवततार च । धुर्यान् रथाश्वान् । विश्रामयेति णिचि रूपम् । विश्रान्तान् कुर्वित्यर्थः । अवारोपयत् अवरोपितवान् । 'रुहः पोऽन्यतरस्या'मिति णिचि पकारः । स्वयमवततार च ॥

तस्मै सभ्याः सभार्याय गोप्त्रे गुप्ततमेन्द्रियाः ।
अर्हणामर्हते चक्रुर्मुनयो नयचक्षुषे ॥ ५४ ॥

**प्रका—तस्मै इति ॥** सभ्याः सभायां साधवः । यथोचितव्यवहार-कुशला इत्यर्थः । सभार्यायेत्यत्र तस्या अप्यर्थं प्राधान्यमवसेयम् । शाब्दस्य त्वप्राधान्यस्यावास्तवत्वान्न तद्बाधकत्वम् । यदाह "न च हस्तिनः कल्पना-केसरिणश्च विरोध" इति । तर्ह्यविमृष्टविधेयांशता समासे न दोषः । बाढम्, अत्र विधेयत्वानुपयोगात् । नचैवं "मूर्ध्नामुद्वृत्तकृत्तेत्यादौ" मिथ्यामहिमत्वानु-वादेपि न दोषः । नैवम्, तत्र विधेयत्वस्योपयोगात् । तथा हि—विधेयता ह्यर्थप्रतीतिविश्रान्तिपदं भवति । तत्त्वे च रसादिप्रतीतेरव्यवधानाय भवति । मिथ्यामहिमत्वस्य च तत्र निर्वेदाङ्गता विवक्षिता । इह त्वर्हणान्वयमात्रमेव विव-क्षितम् । गोप्त्रे वर्णाश्रमगुरव इत्यर्थः । गुप्ततमेन्द्रिया इति राजदारदर्शन-योग्यत्वमुक्तम् । अर्हते पूज्याय । नयचक्षुवे ज्ञानवृद्धाय । नयो दण्डनीतिः । सा चोपलक्षणमन्यासामति विद्यानाम् । अथवा दण्डनीतिरेका विद्येति औशनसाः । राज्ञो विशेषणद्वयं अर्हत्वे हेतुः । मुनीनां तु विशेषणद्वयमर्हणाकर्तृत्वमुपपादयति । अत्र छेकानुप्रासः 'सोऽनेकस्य सकृत्पूर्व' इति लक्षितः । अत्रानेकस्य व्यञ्जनस्य सकृत्सादृश्यं स्फुटम् ॥

**पदा—तस्मै इति ॥** मुनयः तस्मै अर्हणां पूजां चक्रुः । सभ्याः सभायां साधवः । तत्तत्समयोचितव्यापारकुशला इत्यर्थः । सभार्याय भार्या-सहिताय । अनेन तस्याः पूजाप्यर्थात् दर्शिता । गोप्त्रे सम्यग्रक्षित्रे । वर्णाश्रम-गुरवे इत्यर्थः । गुप्ततमेन्द्रियाः गुप्ततमानि अतिशयेन गुप्तानि इन्द्रियाणि यैः । अनेन राज्ञीदर्शनयोग्यत्वमुक्तम् । अर्हते पूज्याय । 'प्रशंसायामि'ति शतृप्रत्ययः । नयचक्षुषे नयो दण्डनीतिरेव चक्षुर्यस्य । सा चान्यासामपि विद्यानामुपलक्षणम् । शास्त्रचक्षुष इत्यर्थः । वक्ष्यति च 'चक्षुष्मत्ता तु शास्त्रेण' इति । अत्र राज्ञो विशेषणद्वयं पूजनीयत्वे हेतुः । मुनीनां तु विशेषणद्वयं पूजाकर्तृत्वमुपपादयति । अत्र छेकानुप्रासः । 'सोऽनेकस्य सकृत् पूर्व' इति ॥

विधेः सायन्तनस्यान्ते स ददर्श तपोनिधिम् ।
अन्वासितमरुन्धत्या स्वाहयेव हविर्भुजम् ॥ ५५ ॥

**प्रका—विधेरिति ॥** अन्त इत्युचितावसरोपस्थानमुक्तम् । यथाहापस्तम्बः—'समित्पुष्पकुशाद्यम्बुमृदन्नाक्षतपाणिकः । जपं होमं च कुर्वाणो नाभिवाद्येत वै द्विजः' इति । अन्वासितमिति । पश्चादासनमन्वासनम् । वक्ष्यति च, 'अन्वास्य गोप्ते'ति । मेघसन्देशे च, 'तस्मिन् काले जलद यदि सा लब्धनिद्रासुखा स्यादन्वास्यैनामि'ति । अत्रोपमायां प्रतीयमानानां लोकयात्रामूलत्वादीनाम् अनेकेषां धर्माणां सामान्यरूपाणां गुणीभावेन तावति गुणीभूतव्यङ्ग्यता । परं तु धर्मवीरपर्यवसायित्वं ध्वनित्वम् ॥

**पदा—विधेरिति ॥** सः सायन्तनस्य विधेः अन्ते तपोनिधिं ददर्श । सायन्तनस्य सन्ध्याकालभवस्य । तत्र भव इत्यर्थे सायंचिरेत्यादिना ट्युल्तुटौ । विधेः जपहोमाद्यनुष्ठानस्य अन्ते अवसाने । अनेनोचितावसरोपस्थानमुक्तम् । यदाहापस्तम्बः—'समित्पुष्पकुशाद्यम्बुमृदन्नाक्षतपाणिकः । जपं होमं च कुर्वाणो नाभिवाद्येत वै द्विजः' इति । तपोनिधिं वसिष्ठं ददर्श । अरुन्धत्या अन्वासितम् । अरुन्धतीति वसिष्ठभार्यानाम । तया अन्वासितं पश्चादध्यासितम् ' अनुपूर्वस्यासेरपि सकर्मकत्वं दृश्यते । वक्ष्यति च 'अन्वास्य गोप्ता गृहणीसहायः' इति । 'अन्वास्यैनामि'ति मेघसन्देशे च । स्वाहया हविर्भुजम् इव । स्वाहेत्यग्निभार्या । 'स्वाहा च हुतभुक्प्रिया' इत्यमरः । तया अन्वासितं हविर्भुजम् अग्निमिवेत्युत्प्रेक्षा ॥

तयोर्जगृहतुः पादान् राजा राज्ञी च मागधी ।
तौ गुरुर्गुरुपत्नी च प्रीत्या प्रतिननन्दतुः ॥ ५६ ॥

**प्रका—तयोरिति ॥** पादग्रहणमभिवादनम् । प्रतिनन्दनं संभावना प्रत्यभिवादनम् । तच्चाचारः । यथा 'वधूर्विधात्रा प्रतिनन्द्यते स्म' इति ॥

**पदा—तयोरिति ॥** राजा मागधी राज्ञी च तयोः पादान् जगृहतुः । मागधी मगधराजपुत्री । तयोः अरुन्धतीवसिष्ठयोः । पादग्रहणमभिवादनम् । 'समे तु पादग्रहणमभिवादनमित्युभे' इत्यमरः । गुरुः गुरुपत्नी च प्रीत्या तौ प्रतिननन्दतुः । प्रीत्या हर्षेण । तौ सुदक्षिणादिलीपौ । प्रतिनन्दनं सम्भावना । प्रत्यभिवादनमिति यावत् । आशीर्वादैः संभावनां चक्रतुरित्यर्थः ॥

तमातिथ्यक्रियाशान्तरथक्षोभपरिश्रमम् ।
पप्रच्छ कुशलं राज्ये राज्याश्रममुनिं मुनिः ॥ ५७ ॥

प्रका—तमिति ॥ 'आतिथेयस्तमातिथ्यविनीताध्वपरिश्रमम्' इति वा पाठः । अत्र यद्यपि 'ब्राह्मणं कुशलं पृच्छेत् क्षत्रबन्धुमनामयम्' इति मनुवचनम्; तथापि महानुभावतयाऽस्य ब्राह्मणार्हः कुशलप्रश्नः । लिङ्गं चात्र 'राज्याश्रममुनिं मुनिः' इति । तथा च शाकुन्तळे—"राजानं विलोक्य प्रथमः । अहो दीप्तिमतोऽपि विश्वसनीयता वपुषः । अथवा उपपन्नमेतत् ऋषिभ्यो नातिभिन्ने राजनि। कुतः । अध्याक्रान्ता वसतिरमुनाप्याश्रमे सर्वभोग्ये रक्षायोगादयमपि तपः प्रत्यहं संचिनोति । अद्यापि द्यां स्पृशति वशिनश्चारणद्वन्द्वगीतः पुण्यः शब्दो मुनिरिति मुहुः केवलं राजपूर्वः ॥" इति । अथ च कुशलमङ्गसम्पदम् । सा चाङ्गानां स्वाम्यादीनां गुणोत्कर्षः । यथाह कामन्त(न्द)कः स्वामिगुणानुपक्रम्य— 'इत्यादिगुणसम्पन्ने लोकयात्राविदि स्थिरे । निर्वृतः पितरीवास्ते यत्र लोकः स पार्थिवः ॥' इति । "कुलीनाः शुचयः शुभ्राः श्रुतवन्तोऽनुरागिणः । दण्डनीतेः प्रणेतारः सचिवाः स्युर्महीपतेः ॥" इति । "स्वाजीवो भूगुणैर्युक्तः सानूपः पर्वताश्रयः । शूद्रकारुवणिक्प्रायो महारम्भकृषीवलः ॥ सानुरागो रिपुद्वेषी पीडाकरसहः पृथुः । नानादेश्यसमाकीर्णो धार्मिकः पशुमान् धनी ॥ ईदृग्जनपदः शस्तः" इति । "औदकं पार्वतं वार्क्षमैरिणं धान्वनं तथा । शस्तं प्रशस्तमतिभिर्दुर्गं दुर्गविचिन्तकैः ॥" इति । "बह्वादानोल्पनिस्रावः ख्यातः पूजितदैवतः । ईप्सितद्रव्यसम्पन्नो ह्यस्वाप्तैरधिष्ठित. । मुक्ताकनकरत्नाढ्यः पितृपैतामहोचितः ॥ धर्मार्जितो व्ययसहः कोशः" इति । "पितृपैतामहो वश्यः संहतो दत्तवेतनः । विख्यातपौरुषो जन्यः कुशलः कुशलैर्वृतः ॥ नानाप्रहरणोपेतो नानायुद्धविशारदः । नानायोधसमाकीर्णो नीराजितहयद्विपः ॥ प्रवासायासदुःखेषु युद्धेषु च कृतश्रमः । अद्वैध्यः[1] क्षत्रियप्रायो दण्डः[2]" इति । "त्यागविज्ञानसत्त्वाढ्यं महापक्षं प्रियंवदम् । आयतिक्षेममद्वैध्यं मित्रं कुर्वीत सत्कुलम् ॥" इति च ॥

पदा—तमिति ॥ मुनिः तं राज्ये कुशलं पप्रच्छ । कुशलमङ्गसम्पदम् । स्वाम्यादिसप्ताङ्गगुणोत्कर्षमित्यर्थः । तदुक्तं चाक्षुषीये—'स्वामी

1 अद्वेष्य इत्यपि पाठः ।
2 दण्डविद्राम्मत इति क्वचिदधिकः पाठः ।

तदनुगोऽमात्यो राष्ट्रं च स्निग्धसज्जनम्। दुर्गो दुर्गगुणोपेतो दण्डो दण्डगुणान्वितः ॥ कोशश्चाक्षयसर्वार्थो मित्रं चापदि सुस्थिरम्। एताः प्रकृतयः सप्त प्रोक्ता नीतिविशारदैः ॥' इति। एतद्गुणास्तु कामन्दकोक्ता विस्तरभयान्न लिख्यन्ते। पप्रच्छ पृष्टवान्। अतिथिसत्कारेण शान्तो रथक्षोभपरिश्रमो यस्य। रथस्य क्षोभो रथक्षोभः तेन परिश्रमः पीडा। राज्यमेवाश्रमः तत्र मुनिम् ॥

अथाथर्वनिधेस्तस्य विजितारिपुरस्सरः।
अर्थ्यामर्थपतिर्वाचमाददे वदतां वरः ॥ ५८ ॥

प्रका—अथ लब्धप्रसङ्गः स्वामिलषितं निवेदयितुमारभते—अथेति ॥ अथर्वनिधेरिति पुरोहितगुणमुक्तम्। सम्बन्धमात्रे षष्ठी। विजितारीणां पुरस्सर इत्यनेन स्वपौरुषेणाप्यन्यूनत्वमुक्तम्। अर्थ्यामर्थादनपेताम्। 'धर्मपथ्यर्थन्यायादनपेते' इति। अर्थपती राजा। आददे इति वचनं लक्ष्यते। प्रयोजनं चादरप्रतीतिः। वदतां वर इति प्रस्तुतवचने सौष्ठवाभिप्रायम् ॥

पदा—अथेति ॥ अर्थपतिः तस्य वाचम् आददे। अर्थपतिः राजा। तस्येति सम्बन्धमात्रे षष्ठी। आददे इत्यनेन वचनं लक्ष्यते। आदरातिशयप्रतीतिः तत्फलम्। प्रतिवाचमुक्तवानित्यर्थः। आदानमुच्चारणमेव वा। 'उच्चारणमुपादानमुपन्यसनमित्यपि' इति वररुचिः। अथर्वनिधेः अथर्वणां निधेः। अथर्ववेदोक्तशान्तिकपौष्टिकक्रियाकलापकुशलस्येत्यर्थः। 'पुरोहितोऽथर्वविद्वै जुहाव ग्रहशान्तये' इति श्रीभागवते। अनेनास्य पुरोहितगुणपूर्तिरुक्ता। ते च गुणाः चाक्षुषीये प्रोक्ताः—'दैवज्ञो दण्डनीतिज्ञो निमित्तज्ञः षडङ्गवित्। धर्मज्ञः पापभीरुश्च प्रतिकर्ताहितस्य च ॥ कुलीनो व्यवसायी चाप्यनुरक्तोऽनसूयकः। धृतिमान् स्मृतिमांश्चैव पुरोधा नृपतेर्हितः ॥' इति। विजिता अरयो यैः तेषां पुरस्सरः श्रेष्ठः। अनेनास्य स्वपौरुषेणाप्यनूनत्वमुक्तम्। अर्थ्याम् अर्थादनपेताम्। वदतां वरः। वदतामिति निर्धारणे षष्ठी। वाग्मिषु श्रेष्ठः ॥

उपपन्नं ननु शिवं सप्तस्वङ्गेषु यस्य मे।
दैवीनां मानुषीणां च प्रतिकर्ता त्वमापदाम् ॥ ५९ ॥

प्रका—उपपन्नमिति ॥ ननुरवधारणे। 'प्रश्नावधारणानुज्ञानुनयामन्त्रणे ननु' इत्यमरः। शिवं यथास्वं संपत् व्यसनाभावश्च। स्वामिनोऽपि सप्ताङ्गय-

न्तर्भावेऽपि मे इति व्यतिरेकनिर्देशो यः, स तदुपाधिरहितमाचक्षाणः स्वामित्वमपि त्वदायत्तमेवेति द्योतयति। राज्य इति प्रश्ने सप्तस्वङ्गेष्वित्युत्तरेणैकस्मिन्नप्यङ्गे त्वत्प्रभावान्नाकुशललेशोऽपीति ध्वन्यते। अत्रोत्तरवाक्यगते यच्छब्दे पूर्ववाक्यगतत्वेन तदोऽनुपादानन्न दोषः। विपर्यये दोषः। युक्तिश्चात्र व्यक्तिविवेके दर्शिता प्रतीतेः साकाङ्क्षतालक्षणा। दैवीनां मानुषीणां चेत्यत्र कामन्तकः। "हुताशनो जलं व्याधिर्दुर्भिक्षं मरणं तथा। इति पञ्चविधं दैवं व्यसनं, मानुषं परम्॥ आयुक्तकेभ्यश्चोरेभ्यः परेभ्यो राजवल्लभात्। पृथिवीपतिलोभाच्च प्रजानां पञ्चधा भयम्॥" इति॥

**पदा**—**उपपन्नमिति**॥ मे सप्तसु अङ्गेषु शिवम् उपपन्नं ननु। सप्तसु पूर्वोक्तेषु स्वाम्यादिषु राज्याङ्गेषु। शिवं कुशलम्। उपपन्नम्, ननुरवधारणे, युक्तमेवेत्यर्थः। 'प्रश्नावधारणानुज्ञानुनयामन्त्रणे ननु' इत्यमरः। उपपन्नत्वं स्तुतिमुखेनोपपादयति—यस्य दैवीनां मानुषीणां च आपदां त्वं प्रतिकर्ता प्रतिविधानकर्ता। दैवीनां देवादागतानाम्। मानुषीणां मनुष्येभ्य आगतानाम्। तत आगत इत्यर्थेऽणि कृते टिड्ढाणञित्यादिना ङीप्। दैव्यो मानुष्यश्चापदः पञ्च पञ्च इति कामन्दकः। 'हुताशनो जलं व्याधिर्दुर्भिक्षं मरणं तथा। इति पञ्चविधं दैवं व्यसनम्, मानुषं परम्॥ आयुक्तकेभ्यश्चोरेभ्यः परेभ्यो राजवल्लभात्। पृथिवीपतिलोभाच्च प्रजानां पञ्चधा भयम्॥' इति॥

**तव मन्त्रकृतो मन्त्रैर्दूरात्संशमितारिभिः।**
**प्रत्यादिश्यन्त इव मे दृष्टलक्षभिदः शराः॥ ६०॥**

**प्रका**—अथ शिवोपपत्तिहेतुतयानूदितं दैवमानुषापत्प्रतीकारं त्रिभिः श्लोकैः प्रपञ्चयति—**तवेति**॥ मन्त्रकृत इति मन्त्राणां सामर्थ्यं ध्वनितम्। मन्त्रैर्मनुभिः कार्यचिन्तनैश्च। दूरात्संशमितारित्वेन शरप्रत्याख्यानमुत्प्रेक्ष्यते। दृष्टलक्षभिद इति। अनेन स्वविक्रमस्यादूरप्रसारित्वं द्योतयतानुपयोगो ध्वनितः॥

**पदा**—तत्र परचक्रस्य प्राधान्यादादौ तन्निराकरणमाह—**तवेति**॥ तव मन्त्रैः मे शराः प्रत्यादिश्यन्ते इव। मन्त्रैः मनुभिः कार्यचिन्तनैश्च।

1 प्र।

कर्तृभिः । प्रत्यादिश्यन्ते निराक्रियन्त इवेत्युत्प्रेक्षा । 'प्रत्यादेशो निराकृतिः' इत्यमरः । मन्त्रकृतः मन्त्रद्रष्टुः । न तु मन्त्रविधातुः, मन्त्राणां नित्यत्वात् । दूरात् संशमितारिभिः दूरादेव संशमिताः सम्यक्शमिता अरयः शत्रवो यैः । अनेन मन्त्राणामुत्कर्ष उक्तः । शराणां न्यूनत्वमाह— दृष्टलक्षभिद इति । दृष्टं लक्षं भिन्दन्तीति क्विप् । एतच्च विशेषणद्वयमुत्प्रेक्षा हेतुः ॥

हविरावर्जितं होतस्त्वया विधिवदग्निषु ।
वृष्टिर्भवति सस्यानामवग्रहविशोषिणाम् ॥ ६१ ॥

प्रका—हविरिति ॥ होतरिति क्रियाशीलत्वमुक्तम् । अग्निषु तत्तत्कर्मानुकूलेषु । हविर्वृष्टिर्भवतीति प्रकृतिकर्ता, हवीरूपा प्रकृतिः स्वोच्छेदेन वृष्टिरूपविकारतामापद्यते । अत्र मनुः—"अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः" इति ॥

पदा—अनावृष्टिनिरासमाह—हविरिति ॥ हे होतस्त्वया विधिवत् अग्निषु आवर्जितं हविः सस्यानां वृष्टिर्भवति । होतरिति संबोधनेन सततक्रियाशीलत्वमुक्तम् । विधिवत् यथाविधि । अग्निषु सर्वकार्यानुकूलेषु वैतानाग्निषु आवर्जितं हुतम् । हविः आज्यादिकम् । वृष्टिः वर्षं भवति । प्रकृतिरूपं हविरेव वृष्टिविकारतामापद्यत इत्यर्थः । अत्र मनुः—'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः' इति । अवग्रहेण वर्षप्रतिबन्धेन विशेषेण शोषणशीलानाम् ॥

पुरुषायुषजीविन्यो निरातङ्का निरीतयः ।
यन्मदीयाः प्रजास्तस्य हेतुस्त्वद्ब्रह्मवर्चसम् ॥ ६२ ॥

प्रका—पुरुषेति ॥ 'आतङ्को भयमाशङ्का' इति हलधरः । 'अतिवृष्टिरनावृष्टिर्मूषिकाः शलभाः शुकाः । अत्यासन्नाश्च राजानः षडेते ईतयः स्मृताः' इति कामन्दकः । 'वृत्ताध्ययनसंपत्तिरिष्यते ब्रह्मवर्चसम्' इति हलायुधः । अत्र प्रथमेन विशेषणेन दुर्मरणस्याभाव उक्तः । तृतीयेन परिगणितानां षण्णां. द्वितीयेन व्यतिरिक्तानां च व्यसनानाम् इति मन्तव्यम् । यद्यप्यनेन श्लोकेन सर्वाऽप्यापत्प्रतीकारः संगृहीतः, तथाऽप्यनन्तरश्लोकाभ्यां परचक्रानावृष्ट्योः प्रती

कारो गोबलीवर्दन्यायेन प्राधान्यात् पृथक् दर्शितः। तत्रापि परचक्रभये वस्तु-
ष्यशक्यत्वात् तत्प्रतीकारस्य प्राश्रम्यम् ॥

पदा—किं बहुना, सर्वमपि त्वदायत्तमित्याह—पुरुषेति ॥ मदीयाः प्रजाः पुरुषायुषजीविन्यः निरातङ्काः निरीतयः यत् तस्य त्वद्ब्रह्मवर्चसं हेतुः। मदीयाः मत्संबन्धिन्यः। पुरुषायुषं वर्षशतं जीवितुं शीलं यासाम्। 'अचतुरे'त्यादिना निपातनात् पुरुषायुषशब्दः साधुः। निरातङ्काः निर्भयाः। 'आतङ्को भयमाशङ्का' इति हलायुधः। आतङ्को मनःपीडा वा। 'रुक्तापशङ्कास्वातङ्क' इत्यमरः। निरीतयः ईतिरहिताः। 'अतिवृष्टिरनावृष्टिर्मूषिकाः शलभाः शुकाः। अत्यासन्नाश्च राजानः षडेते ईतयः स्मृता' इति कामन्दकः। तच्छब्दः पुरुषायुषेत्यादिना उक्तं वाक्यार्थं परामृशति। तव ब्रह्मवर्चसं वृत्ताध्ययनर्द्धिः। "स्याद् ब्रह्मवर्चसं वृत्ताध्ययनर्द्धिः" इत्यमरः। मम प्रजा एवंभूता भवन्तीति यत् तत्र त्वद्ब्रह्मवर्चसमेव कारणमित्यर्थः ॥

तदेवं[1] चिन्त्यमानस्य गुरुणा ब्रह्मयोनिना।
सानुबन्धाः कथं न स्युः संपदो मे निरापदः ॥ ६३ ॥

प्रका—उक्तं निगमयति—तदेवमिति ॥ एवमित्यनुवादाच्चिन्तनमत्र प्रतिविधानपर्यन्तम्। गुरुणा अङ्गीकृतपौरोहित्येनेत्यर्थः। ब्रह्मयोनिना ब्रह्मपुत्रेण। अनुबन्धः प्रक्रान्तस्यानुवृत्तिः। संपदो गुणोत्कर्षाः। मे मम सप्ताङ्ग्यामित्यर्थः। निरापदः व्यसनशून्याः। व्यसनानि च व्यसनाधिकारिक उक्तानि। अत्र प्रकरणार्थे कौटिल्यः-- 'पुरोहितमुदितोदितकुलशीलं षडङ्गवेदे दैवे निमित्ते दण्डनीत्यां चाभिविनीतमापदां दैवमानुषीणामथर्वभिरुपायैश्च प्रतिकर्तारं कुर्वीत। तमाचार्यं शिष्यः पितरं पुत्रः भृत्यः स्वामिनमिव चानुवर्तेत। ब्राह्मणेनैधितं क्षत्रं मन्त्रिमन्त्राभिमन्त्रितम्। जयत्यजितमत्यन्तं शास्त्रानुगमशंस्त्रितम्[2]' इति। इदं च भगवतो वसिष्ठस्य गुणाख्यानं विलोभनाख्यं मुखसन्धेरङ्गम् ॥

पदा—कुशलप्रश्नस्योत्तरमुपसंहरति—त्वयेति ॥ त्वया एवं चिन्त्यमानस्य मे संपदः कथं निरापदः सानुबन्धाः न स्युः। एवं पूर्वोक्तपरचक्रादि-

1 त्वयैवमिति पदार्थदीपिकापाठः। 2 शस्त्रकम् इत्यपि पाठः।

निरासप्रकारेण। अत्र चिन्तनमेवंशब्दसामर्थ्यात् प्रतिविधानपर्यन्तम्। मे मम सप्तस्वङ्गेष्वित्यर्थः। संपदो गुणोत्कर्षाः। निरापदः व्यसनशून्याः। व्यसनानि तु कामजानि चत्वारि क्रोधजानि त्रीणि इति सप्त। यथा चाक्षुषीये— 'पानमक्षाः स्त्रियश्चेति मृगया तदनन्तरम्। ततश्च दण्डपारुष्यं वाक्पारुष्यार्थदूषणे' इति। प्रक्रान्तस्यानुवृत्तिरनुबन्धः। तत्सहिताः कथं न स्युः। निरापदः सानुबन्धाश्च भवेयुरेवेत्यर्थः। अत्र कौटिल्यः। 'ब्राह्मणेनैधितं क्षत्रं मन्त्रिमन्त्राभिमन्त्रितम्। जयत्यजितमत्यन्तं शास्त्रानुगमशस्त्रितम्' इति। गुरुणा अङ्गीकृतपौरोहित्येन। ब्रह्मयोनिना ब्रह्मपुत्रेण। एते च विशेषणे सानुबन्धत्वादिप्राप्तौ हेतुभूते॥

किं तु वध्वां तवैतस्यामदृष्टसदृशप्रजम्।
न मामवति सद्वीपा रत्नसूरपि मेदिनी ॥ ६४ ॥

प्रका—अथाभिलषितं प्रस्तौति—किन्त्विति॥ वध्वां तवेति पितृवद्व्यवहारः। अदृष्टेति। न तु नास्ति। त्वत्प्रभावादित्यर्थः। सदृशेति। तथाविधैव प्रजा प्रार्थ्यत इत्यर्थः। अवति प्रीणाति। दुःखिते मनसि सर्वमसह्यमिति। सद्वीपेत्यखण्डत्वपरम्। रत्नशब्द उत्कृष्टपर्यायः। बीजागमलक्षणं समाधानाख्यमङ्गमिदम्॥

पदा—अथाभिलषितमर्थमेवाह – किन्त्विति॥ किन्तु मेदिनी मां न अवति। किन्त्विति अव्ययम्। तच्च विशेषं वदत् अपेक्षितस्य कस्यचिदभावं द्योतयति। 'किन्त्विति प्रार्थनालाभे' इति निघण्टुः। मेदिनी मां नावति न प्रीणाति। 'अव प्रीणन' इति। किं स्वल्पत्वं समृद्ध्यभावो वा तत्र हेतुः? नेत्याह—सद्वीपा रत्नसूः अपि इति। न केवलं समुद्रपर्यन्ता, अष्टादशद्वीपसमन्विता चेत्यर्थः। रत्नानि उत्तमवस्तूनि सूत इति तथा। 'रत्नं स्वजातिश्रेष्ठेऽपी'त्यमरः। 'खनिभिः सुषुवे रत्नं क्षेत्रैः सस्यं वनैर्गजान्' इत्यादिप्रकारोऽनेन दर्शितः। प्रीणनाभावे हेतुमाह—तव एतस्यां वध्वां अदृष्टसदृशप्रजम् इति। तव वध्वामिति पितृवद्व्यवहारः। वध्वां पुत्रभार्यायाम्। 'वधूर्जाया स्नुषा स्त्री' इत्यमरः। अदृष्टा सदृशी अनुरूपा प्रजा सन्ततिर्येन। त्वत्प्रभावे जाग्रति न मे नास्तित्वसन्देहः। एतस्यां सदृशपुत्रं दृष्ट्वा इति भावः॥

नूनं मत्तः परं वंश्याः पिण्डविच्छेददर्शिनः ।
न प्रकामभुजः श्राद्धे स्वधासंग्रहतत्पराः ॥ ६५ ॥

प्रका—नूनमिति ॥ प्रकामभुजः पर्याप्तभोजिनः । श्राद्धे पितृभोजने ॥

पदा—नूनमिति ॥ वंश्याः श्राद्धे न प्रकामभुजः नूनम् । वंश्याः वंशभवाः । पितृपितामहादय इत्यर्थः । श्राद्धे पितृभोजने । प्रकामं पर्याप्तं यथा भवति तथा भुञ्जत इति प्रकामभुजः । "कामं प्रकामं पर्याप्तमि"त्यमरः । प्रकामभोजनाभावे हेतुमाह—मत्त इत्यादिना । मत्तः परं पिण्डविच्छेददर्शिनः । मत्तः परं मत्कालादूर्ध्वमित्यर्थः । पिण्डस्य विच्छेदं नाशं द्रष्टुं शीलमेषामिति । पिण्डविच्छेदमुत्प्रेक्षमाणा इत्यर्थः । किमस्माकमनेन भोजनेन इति खेदात् किञ्चिदेव भुञ्जत इति भावः । पितॄणां नान्यत् किञ्चिदपेक्षितमित्याह—स्वधासङ्ग्रहतत्परा इति । स्वधेत्यव्ययम् । "स्वधा पितृभ्यो यद्दत्त"मिति यादवः । तत्संग्रहे तत्परिग्रहे तत्पराः ॥

मत्परं दुर्लभं मत्वा नूनमावर्जितं मया ।
पयः पूर्वैः[1] स्वनिश्वासकवोष्णमुपयुज्यते ॥ ६६ ॥

प्रका—मत्परेति ॥ कवोष्णं मन्दोष्णम् ॥

पदा—[2]मत्परमिति ॥ मया आवर्जितं पयः पूर्वैः मत् परं दुर्लभं मत्वा स्वनिश्वासकवोष्णं उपयुज्यते । आवर्जितं दत्तम् । पूर्वैः पितृभिः । मदिति पञ्चम्येकवचनम् । परं ऊर्ध्वम् दुर्लभम् । सन्तानाभावादिति भावः । स्वैः आत्मीयैः निश्वासैः दुःखजैर्दीर्घश्वासैः कवोष्णं मन्दोष्णम् । "कोष्णं कवोष्णं मन्दोष्णमि"त्यमरः । उष्णो हि दुःखजो निश्वासः । उपयोगक्रियाविशेषणमिदम् । उपयुज्यते, नूनं निश्चितम् । तथा शङ्क इत्यर्थः ॥

सोऽहमिज्याविशुद्धात्मा प्रजालोपनिमीलितः ।
प्रकाशश्चाप्रकाशश्च लोकालोक इवाचलः ॥ ६७ ॥

---

1 सु । 2 पदार्थदीपिकाकारैरेतदनन्तरमेव 'नूनं मत्तः पर'मित्यादिपद्यं यद्यपि व्याख्यातम् तथापि प्रकाशिकापाठानुसारेण तस्य पदार्थदीपिका पूर्वं योजिता ।

**प्रका—सोहमिति ॥** विशुद्धो विमलः। लोपोऽदर्शनम्। निमिलितः संकुचितः। प्रकाशः स्फुटः आलोकवान् च। तथा महाभारते। "त्रीणि ज्योतींषि पुरुष इति वै देवलोऽब्रवीत्। अपत्यं कर्म विद्या च" इति। वक्ष्यति च 'सुताभिधानं स ज्योति'रिति ॥

**पदा—सोऽहमिति ॥** सः अहं प्रकाशः अप्रकाशः च। प्रकाशः स्फुटः। अप्रकाशः अस्फुटः च। भवामीति शेषः। लोकालोकः अचलः इवेत्युपमा। यथा लोकालोकाचलः सूर्यरश्मियोगात् स्फुटान्तर्भागः तदसंयोगादस्फुटबहिर्भागश्च भवति तथाहमित्यर्थः। तत्र हेतुः—इज्येत्यादि। इज्यया यागेन विशुद्धः विमलः आत्मा यस्य। प्रजायाः सन्तत्याः लोपेन अदर्शनेन निमीलितः संकुचितः। इज्याविशुद्धत्वमत्र विद्याविशुद्धत्वस्याप्युपलक्षणम्। त्रीणि ज्योतींषि पुरुषे इति वै देवलोऽब्रवीत्। अपत्यं कर्म विद्या च इति महाभारतसिद्धानां ज्योतिषां मध्येऽपि विद्याकर्मरूपयोर्ज्योतिषोः संभवादपत्यरूपज्योतिषोभावाच्च लोकालोकाचलवत् प्रकाशश्चाप्रकाशश्च भवामीत्यर्थः ॥

लोकान्तरसुखं पुण्यं तपोदानसमुद्भवम्।
संततिः शुद्धवंश्या तु परत्रेह च शर्मणे ॥ ६८ ॥

**प्रका—लोकान्तरेति ॥** लोकान्तरे सुखं यस्येति समासः। पुण्यमपूर्वाख्यः संस्कारः। वंश्या वंशसमुद्भवा ॥

**पदा—लोकान्तरेति ॥** तपोदानसमुद्भवं पुण्णं लोकान्तरसुखम्। तपश्च दानं च तपोदाने ताभ्यां समुद्भवः संभवोयस्य। पुण्यं अपूर्वाख्यः संस्कारः। लोकान्तरे परलोके सुखं यस्य। शुद्धवंश्या सन्ततिः हि परत्र इह च शर्मणे। शुद्धवंश्या शुद्धवंशसमुद्भवा। हिशब्दस्त्वर्थे। उभयकुलपरिशुद्धा सन्ततिस्तु लोकद्वयेऽपि शर्मणे सुखाय भवति ॥

तया हीनं विनेतर्मां कथं पश्यन्न दूयसे।
सिक्तं स्वयमिव स्नेहाद्वन्ध्यमाश्रमवृक्षकम् ॥ ६९ ॥

**प्रका—तयेति ॥** विनेतरित्याचार्यवद्व्यवहारः। त्वयैव मे सर्वे संस्काराः कृता इत्यर्थः ॥

**पदा—तयेति** ॥ विनेतः तया हीनं मां पश्यन् त्वं कथं न दूयसे। विनेतः हे विनयकर्तः। त्वयैव हि मे सर्वे संस्काराः कृताः इत्यर्थः। तया सन्तत्या रहितम्। कथं न दूयसे परितापवान् भवस्येवेत्यर्थः। स्नेहात् स्वयं सिक्तं वन्ध्यम् आश्रमवृक्षकम् इव। वन्ध्यं फलरहितम्। वृक्षकमित्यल्पार्थे कः। बालवृक्षमित्यर्थः। वात्सल्यादात्मनैव बाल्यादारभ्य जलसेकादिना संवर्धितं फलरहितमाश्रमवृक्षकं पश्यन्निवेत्युपमा ॥

अलह्यपीडं भवन्नृणमन्त्यमवेहि मे।
अरुन्तुदमिवालानमनिर्वाणस्य दन्तिनः ॥ ७० ॥

**प्रका—असह्येति** ॥ अन्त्यं प्रजानिष्क्रेयम् ऋणं निष्क्रेतव्यम् अवेहि। कथमिदं न परामृष्टमिति भावः। अरुन्तुदं बाधकम्। निर्वाणं गजमज्जनम्। निरोधादिना तद्रहितस्येत्यर्थः। दन्तिनः खलु स्नानप्रियाः। 'निर्वाणोत्थानशयनानि त्रीणि गजकर्माणीति पालकाप्यः ॥

**पदा—असह्येति** ॥ भगवान् मे अन्त्यम् ऋणम् असह्यपीडम् अवेहि। भगवन्नित्यनेनाष्टैश्वर्यपरिपूर्तिरुक्ता। अन्त्यमृणं प्रजामात्रपरिहार्यमित्यर्थः। वक्ष्यति च "ऋषिदेवगणस्वधाभुजां श्रुतयागप्रसवैर्महाभुजः। अनृणत्वमुपेयिवान् बभौ" इति। 'ऋषिदेवपितृप्राप्तं श्रुतं नृणामृणत्रयम्। क्रमेण निष्क्रिया तस्य श्रुतयागसुतोदयैः' इति च स्मृतिः। असह्या पीडा यस्य। अवेहि जानीहि। कथं न भवता श्रुतिस्मृतिविशारदेन च ज्ञायत इत्यर्थः। अत्रोपमामाह—अनिर्वाणस्य दन्तिनः अरुन्तुदम् आलानम् इव इति। अनिर्वाणस्य निरोधादिना मज्जनहीनस्य। "निर्वाणं निर्वृतौ मोक्षे विनाशे गजमज्जने" इति केशवः। दन्तिनो हि स्नानप्रियाः। उक्तं च पालकाप्ये—'निर्वाणोत्थानशयनानि त्रीणि गजकर्माणी'ति। अरुः व्रणं तुदतीति तथा। बाधकमित्यर्थः। "अरुन्तुदन्तु मर्मस्पृगि"त्यमरः। आलानं बन्धनस्तम्भम् ॥

तस्मान्मुच्ये यथा तात संविधातुं त्वमर्हसि।
इक्ष्वाकूणां दुरापेऽर्थे त्वदधीना हि सिद्धयः ॥ ७१ ॥

**प्रका—**उपसंहरति—**तस्मादिति** ॥ मुच्ये इति कर्मकर्तरि। संविधातुं संविधानं कर्तुम्। मामेवात्मनो मोचनक्षमं संपादयेत्यर्थः। इक्ष्वा-

कूणां सिद्धय इत्यन्वयः। एषु विलापप्रायेषु वाक्येषु निर्वेदादयः शोकव्यभिचारिणः प्रतीयन्ते। वसिष्ठप्रोत्साहनमिदं भेदो नामाङ्गं मुखसन्धेः ॥

**पदा**—उपसंहरति—**तस्मादिति** ॥ तात यथा अहं तस्मात् मुच्ये त्वं तथा संविधातुं अर्हसि। तातेति पितृवद्व्यवहारः। मुच्य इति कर्मकर्तरि प्रयोगः। संविधातुं प्रतिकर्तुम्। "संविधानं प्रतीकारे हस्त्यन्नाजीवयोरपि" इति केशवः। यथाहमन्त्याद्दणात् स्वयमेव मुक्तो भविष्यामि तथा त्वया प्रतीकारः कार्य इत्यर्थः। इक्ष्वाकूणां दुरापे अर्थे सिद्धयः त्वदधीना हि। इक्ष्वाकुवंशजातानां दुरापार्थसिद्धयः त्वदायत्ता इत्यर्थः। "अधीनो निघ्न आयत्त" इत्यमरः। हिशब्दः प्रसिद्धौ ॥

इति विज्ञापिते[1] राज्ञा ध्यानस्तिमितलोचनः।
क्षणमात्रमृषिस्तस्थौ सुप्तमीन इव ह्रदः ॥ ७२ ॥

**प्रका**—**इतीति** ॥ विज्ञापित इति निमित्तसप्तमी। अत्रोपमया निखिलबाह्यव्यापारोपरमः सामान्यं प्रतीयते ॥

**पदा**—**इतीति** ॥ राज्ञा इति विज्ञापित ऋषिः क्षणमात्रं ध्यानेन स्तिमिते निश्चले लोचने यस्य तथाविधो भूत्वा क्षणं क्षणकालं तस्थौ। सुप्तमीनः ह्रद इवेत्युपमा। सुप्ता मीना यस्मिन्। अत्रोपमया निखिलबाह्यव्यापारोपरमः प्रतीयते ॥

**सोऽपश्यत्प्रणिधानेन संततिस्तम्भकारणम्।**
**भावितात्मा भुवो भर्तुरथैनं प्रत्यबोधयत् ॥ ७३ ॥**

**प्रका**—**स इति** ॥ प्रणिधानेन ध्यानेन। स्तम्भोऽप्रवृत्तिः। तत्र कारणं प्रतिबन्धकमित्यर्थः। भावितात्मा कृतात्मभावनः। तया हि देशकालव्यवहितानर्थान् योगी पश्यति ॥

**पदा**—**स इति** ॥ सः प्रणिधानेन भुवः भर्तुः संततिस्तम्भकारणम् अपश्यत्। प्रणिधानेन संतत्याः स्तम्भे अप्रवृत्तौ कारणं प्रतिबन्धकं हेतुमित्यर्थः। दर्शनापायमाह—भवितात्मा इति। भावितः सोऽहंभावरूपेण चिन्तितः आत्मा

---

1 तो।

परमात्मा येन। आत्मभावनया हि योगी देशकालव्यवहितानर्थान् पश्यति। अथ एनं प्रत्यबोधयत् प्रतिबोधितवान् ॥

पुरा शक्रमुपस्थाय तवोर्वी प्रतियास्यतः।
आसीत्कल्पतरुच्छायामाश्रिता सुरभिः पथि ॥ ७४ ॥

**प्रका—पुरेति** ॥ प्रतियास्यतः प्रतिगन्तुमुपक्रान्तस्येत्यर्थः। तव पथीत्यन्वयः ॥

**पदा—पुरेति** ॥ पुरा शक्रम् उपस्थाय उर्वी प्रतियास्यतः तव पथि सुरभिः आसीत्। उपस्थाय सेवित्वा। प्रतियास्यतः प्रतिगन्तुमुपक्रान्तस्य। सुरभिः देवधेनुरित्यर्थः। कल्पतरुच्छायां आश्रिता कल्पतरोरधोभागे स्थितेत्यर्थः ॥

धर्मलोपभयाद्राज्ञीमिमां सञ्चिन्त्य सत्वरः।
प्रदक्षिणक्रियार्हायां तस्यां त्वं साधु नाचरः ॥ ७५ ॥

**प्रका—धर्मेति** ॥ ऋतावभिगमोऽत्र धर्मो विवक्षितः। साध्विति क्रियाविशेषणम्। प्रदक्षिणेति। अत्र मनुः। "मृदङ्गान् दैवतं विप्रं घृतं मधु चतुष्पथम्। प्रदक्षिणानि कुर्वीत प्रज्ञातं च वनस्पति"मिति ॥

**पदा—धर्मेति** ॥ तस्यां त्वं साधु न आचरः। तस्यामिति विषयसप्तमी। साध्विति क्रियाविशेषणम्। ननु किं तस्यां विषये युक्तमित्यत आह—प्रदक्षिणक्रियार्हायामिति। प्रदक्षिणक्रियामर्हतीति प्रदक्षिणक्रियार्हा। अत्र मनुः। "मृदङ्गान् दैवतं विप्रं घृतं मधु चतुष्पथम्। प्रदक्षिणानि कुर्वीत प्रज्ञातं च वनस्पतिम्" इति। नायं तव दोष इत्याह धर्मलोपभयात् इमां राज्ञीं संचिन्त्य सत्वरः इति। ऋतुस्नातदाराभिगमनरूपस्य धर्मस्य लोपोऽत्र विवक्षितः। अत्र मनुः—"ऋतुकालाभिगामी स्यात् स्वदारनिरतः सदा" इति। व्यासश्च। "ऋतुस्नातां तु यो भार्यां सन्निधौ नाभिगच्छति। घोरायां भ्रूणहत्यायां पच्यते नात्रसंशय' इति। न तु कामादिति भावः ॥

---

1 ऋतुस्नातामनुस्मरन् इति पाठान्तरम्।

[1]ईप्सितं तदवध्यानाद्विद्धि सार्गळमात्मनः ।
प्रतिबध्नाति हि श्रेयः पूज्यपूजाव्यतिक्रमः ॥ ७६ ॥

**प्रका—ईप्सितमिति** ॥ अवध्यानमवज्ञा । सार्गळं सप्रतिबन्धम् । गूढभेदनरूपमुद्भेदाख्यमङ्गमिदम् ॥

**पदा—ईप्सितमिति** ॥ त्वं तदवध्यानात् आत्मनः ईप्सितं सार्गळं विद्धि जानीहि । तदवध्यानात् तस्याः सुरभेः अवध्यानात् अवज्ञया हेतुना । अनादरादिति यावत् । ईप्सितम् आप्तुमिष्टतमं पुत्रोत्पत्तिरूपं मनोरथमित्यर्थः । सार्गळं सप्रतिबन्धं विद्धि । पूज्यपूजाव्यतिक्रमः श्रेयः प्रतिबध्नाति हि । पूज्यानां पूजा पूज्यपूजा तस्या व्यतिक्रमः अतिक्रमणम् । श्रेयः हितं प्रतिबध्नाति रुणद्धि । तत्सेवयैव प्रतिबन्धनिवृत्तिरिति भावः ॥

हविषे दीर्घसत्रस्य सा चेदानीं प्रचेतसः ।
भुजङ्गपिहितद्वारं पाताळमधितिष्ठति ॥ ७७ ॥

**प्रका—हविष इति** ॥ प्रचेतसो वरुणस्य । अनेन सुरभेर्दुर्लभत्वमुक्तम् ॥

**पदा**—सा त्विदानीं दुर्लभेत्याह—**हविष इति** ॥ सा इदानीं प्रचेतसः हविषे पाताळं अधितिष्ठति इति च । प्रचेतसो वरुणस्य हविषे हविः कर्तुम् । पाताळमधितिष्ठति पाताळे वसति । तदागमनप्रतीक्षणमपि दुष्करमित्याह — दीर्घसत्रस्येति । दीर्घं चिरकालं सत्रं यज्ञविशेषो यस्य । सहस्रसंवत्सरसत्र-दीक्षितस्येत्यर्थः । तत्र गन्तुमपि न शक्यमित्याह—भुजङ्गपिहितद्वारमिति । सर्पसंपूर्णमार्गमित्यर्थः ॥

सुतां [2]मदीयां सुरभेः कृत्वा प्रतिनिधिं शुचिः ।
आराधय सपत्नीकः प्रीता कामदुघा हि सा ॥ ७८ ॥

**प्रका**—तत्कथमित्याह—**सुतामिति** ॥ मदीयां मत्स्वामिकाम् । प्रतिनिधिं तद्भावनाविषयमित्यर्थः । हिर्यस्मादर्थे । काव्यलिङ्गमिदम् । अर्थसं-प्रधारणरूपं युक्तिर्नामाङ्गमिदम् ॥

---

1 इतः पूर्वं 'धर्मलोपभया'दित्यादिपद्यस्यानन्तरं 'अवजानासि मां यस्मादतस्ते न भविष्यति । मत्प्रसूतिमनाराध्य प्रजेति त्वां शशाप सा । स शापो न त्वया राजन्न च सारथिना श्रुतः । नदत्याकाशगङ्गायाः स्रोतस्युद्दामदिग्गजे' ॥ इति । पद्यद्वयमधिकं क्वचित् । मल्लिनाथेन व्याख्यातञ्च । 2 त ।

**पदा**---तर्हि किं कुर्म इत्यत्राह --- **सुतामिति** ॥ त्वं मदीयां सुरभेः सुतां प्रतिनिधिं कृत्वा सपत्नीकः आराधय । मदीयां मत्स्वामिकाम् । सुरभिः साधारणी, एषा तु मदीयैव इति भावः । सुरभेः सुतामित्यनेन प्रतिनिध्यर्हत्व-मुक्तम् । 'आत्मा वै पुत्र उत्पन्न इति वेदानुशासनम्, इति श्रीभागवते च । मुख्यस्याभावे योग्यस्तत्सदृशः प्रतिनिधिरित्युच्यते । शुचिः शुद्धः । व्रतानु-गुणनियमयुक्त इत्यर्थः । सपत्नीकः पत्नीसहितः । अनेन तस्या अपि व्रतनियम उक्तः । सा प्रीता कामदुघा हि । कामं दोग्धि पूरयतीति तथा । दुहः कब्घश्चेति कप् घश्चान्तादेशः । हिर्यस्मादर्थे प्रसिद्धौ वा ॥

**इतिवादिन एवास्य होतुराहुतिसाधनम् ।**
**अनिन्द्या नन्दिनी नाम धेनुराववृते वनात्** ॥ ७९ ॥

**प्रका**--- **इतीति** ॥ इतिवादिन एवेति कार्यसिद्धिलक्षणमविळम्बः प्रत्याय्यते । आहुतिसाधनमिति तत्कालोपस्थानौचित्यमुक्तम् । अनिन्द्या निन्द्यरहिता । सर्वलक्षणसम्पन्नेत्यर्थः । ननु "समाधिः सुकरं कार्यं कारणान्तर-योगतः" इति समाध्यलङ्कारोऽत्र किं नोद्भावितः । धेनोः प्रकृतत्वेन कारणान्तर-त्वाभावात् । अमुमेव समाहितशब्देन व्यपदिशतामन्येषामपि लक्षणेष्वयमभि-सन्धिर्द्रष्टव्यः । तथा च दण्डिनो लक्षणम्---"किञ्चिदारभमाणस्य कार्यं दैव-वशात्पुनः । तत्साधनसमापत्तिर्या तदाहुः समाहित"मिति । अत्र पुनश्शब्देन समापत्तिशब्देन च प्रकृतादन्यत्वमुक्तम् । 'कार्यारम्भे सहायाप्तिः समाहित'मिति भोजलक्षणेऽपि सहायशब्देनैतदुक्तम् ॥

**पदा**---**इतिवादिन इति** ॥ इतिवादिनः एव अस्य नन्दिनी नाम धेनुः वनात् आववृते । इति वदितुं शीलमस्येतिवादी । एवशब्देन कालविळम्बाभाव उक्तः । तेन च कार्यसिद्धिर्ध्वन्यते । नन्दिनी नाम नन्दिनीति प्रसिद्धा । आववृते निवृत्ताभूत् । होतुः आहुतिसाधनं होमकर्तुः अस्य होमसाधनम् । धेनुविशेषणमेतत् । तदुचितद्रव्यसंपादिकेत्यर्थः । अनेन तत्कालोपस्थानयो-ग्यत्वमुक्तम् । निन्द्यं दोषः तद्रहिता सर्वलक्षणसंपन्नेत्यर्थः ॥

**ललाटोदयमाभुग्नं पल्लवस्निग्धपाटला ।**
**बिभ्रती श्वेतरोमाङ्कं सन्ध्येव शशिनं नवम्** ॥ ८० ॥

**प्रका**--- **ललाटेति** ॥ ललाट उदयो यस्य तत् तथा । आभुग्नं कुटि-लम् । उपमया शोभातिशयप्रतीतिः ॥

पदा—अथ श्लोकत्रयेण धेनुं विशिनष्टि—ललाटेति ॥ श्वेतरोमाङ्कं बिभ्रती । श्वेतानि धवळानि रोमाण्येवाङ्कं चिह्नं बिभ्रती दधाना । ललाटे उदय उद्भवो यस्य । सन्ध्या नवं शशिनमिव । यथा सन्ध्या प्रतिपच्चन्द्रकलां बिभर्ति तथेत्यर्थः । उपमया शोभाधिक्यं प्रतीयते । आभुग्नं कुटिलम् । पल्लवस्निग्धपाटला । पल्लववत् स्निग्धा पाटला च । "श्वेतरक्तस्तु पाटल" इत्यमरः । एतच्च विशेषणद्वयं साधारणधर्मः ॥

भुवं कोष्णेन कुण्डोध्नी मेध्येनावभृथादपि ।
प्रस्नवेनाभिवर्षन्ती वत्सालोकप्रवर्तिना ॥ ८१ ॥

प्रका—भुवमिति ॥ प्रस्नवेन पयसा । कुण्डोध्नी ऊधसोऽनङ् ॥

पदा—भुवमिति ॥ प्रस्नवेन भुवं अभिवर्षन्ती । प्रस्नवेन प्रस्नुतेन पयसा । "प्रस्नवः पय ऊधस्यं दुग्धं क्षीर"मिति वररुचिः । अभिवर्षन्ती सिञ्चन्ती । कोष्णेन ईषदुष्णेन । कवं चोष्ण इति चकारात् कादेशः । कुण्डोध्नी कुण्डमिव ऊधो यस्याः । 'ऊधसोऽनङि'त्यनङादेशः समासान्तः । "पिठरः स्थाल्युखा कुण्डम्, ऊधस्तु क्लीबमापीनमि'ति चामरः । अवभृथात् अपि मेध्येन यज्ञान्तस्नानादपि पवित्रेण । 'पूतं पवित्रं मेध्यं चे'त्यमरः । वत्सस्यालोके प्रवर्तितुं शीलमस्येति तथा । "प्रवाहस्तु प्रवृत्तिः स्यादि" त्यमरः ॥

रजःकणैः खुरोद्धूतैः स्पृशद्भिर्गात्रमन्तिकात् ।
तीर्थाभिषेकसंसिद्धिमादधाना महीक्षितः ॥ ८२ ॥

प्रका—रजःकणैरिति ॥ कणशब्दो झटिति व्याप्त्यर्थः । तीर्थाभिषेकेण या संसिद्धिरपूर्वलाभः । गोरजसो वायव्यस्नानत्वात् । 'वायव्यं गोरजः स्मृत'मिति मनुः ।

पदा—रजःकणैरिति ॥ खुरोद्धूतैः रजःकणैः महीक्षितः तीर्थाभिषेकसंसिद्धिम् आदधानाम् । खुरोद्धूतैः खुरोत्क्षिप्तैः । रजसां कणैः लेशैः । सद्य एव दिगन्तरव्याप्त्यर्थं कणशब्दः । "लवलेशकणाणव" इत्यमरः ।

---

1 जां शुद्धिम् ।

महीक्षितः राज्ञः। तीर्थाभिषेके तीर्थस्नाने या संसिद्धिः अपूर्वलाभः। तामादधाना कुर्वाणा। अनेन वायव्यं स्नानमुक्तम्। अत्र मनुः। "आग्नेयं भस्मना स्नानमवगाह्यं तु वारुणम्। ब्राह्मं प्रोक्षणमात्रेण वायव्यं गोरजः स्मृतम्। यत्तु सातपवर्षेण तद्दिव्यं स्नानमुच्यते" इति। अन्तिकात् गात्रं स्पृशद्भिः। अन्तिकात् समीपे। दूरान्तिकेति चकारात् पञ्चमी। गात्रं राजदेहम्।

तां पुण्यदर्शनां दृष्ट्वा निमित्तज्ञस्तपोधनः।
याज्यमाशंसितावन्ध्यप्रार्थनं पुनरब्रवीत् ॥ ८३ ॥

प्रका—तामिति॥ निमित्तज्ञ इति पुरोहितगुणउक्तः। आशंसिता तृन् प्रत्ययः। तस्या दर्शनात् अवन्ध्यप्रार्थनं तमाशंसानो मुनिरुद्धर्षणाय पुनरब्रवीदित्यर्थः। 'आशंसितावन्ध्यं पार्थिव'मिति पाठे आशंसिते प्रार्थनायां अवंध्यममोघमनोरथमित्यर्थः॥

पदा—तामिति॥ तपोधनः तां दृष्ट्वा पुनः याज्यम् अब्रवीत्। वसिष्ठस्तां नन्दिनीमवलोक्य पुनरपि शिष्यमुक्तवान्[2]। पुण्यं पावनं दर्शनं यस्याः। निमित्तं जानातीति निमित्तज्ञः। अनेन पुरोहितगुणा उक्ताः। आशंसितावन्ध्यं आशंसिते अभिलषितेऽर्थे विषये अवन्ध्या सफला प्रार्थना यस्य। सफलपुत्रविषयप्रार्थनमित्यर्थः॥

अदूरवर्तिनीं सिद्धिं राजन्विगणयात्मनः।
उपस्थितेयं कल्याणी नाम्नि कीर्तित एव यत् ॥ ८४ ॥

प्रका—अदूरेति॥ सिद्धिं फलयोगम्॥

पदा—वसिष्ठस्य वचनप्रकारमाह—अदूरेति॥ राजन् त्वं आत्मनः सिद्धिं अदूरवर्तिनीं विगणय। सिद्धिं फलप्राप्तिम्। अदूरे समीपे वर्तितुं शीलमस्या इति तथा। आसन्नामित्यर्थः। विगणय अवगच्छ। कुत इत्यत्राह—कल्याणी इयं नाम्नि कीर्तिते एव उपस्थिता यत् इति। कल्याणी शुभा। नाम्नि अभिधाने। कीर्तिते उक्ते। उपस्थिता प्राप्ता। यत् यस्मात्॥

1 निधिः। 2 मब्रवीत्।

वन्यवृत्तिरिमां शश्वदात्मानुगमनेन गाम् ।
विद्यामभ्यसनेनेव प्रसादयितुमर्हसि ॥ ८५ ॥

**प्रका**—प्रस्तुतस्याराधनस्य विधिमाह—**वन्येति** ॥ वन्यवृत्तिर्वन्याजीवः ॥

**पदा**—सेवाप्रकारमुपदिशति—**वन्येति** ॥ त्वं वन्यवृत्तिः शश्वत् आत्मानुगमनेन इमां गां प्रसादयितुम् अर्हसि । वन्यैः वनभवैः फलमूलादिभिः वृत्तिर्जीवनं यस्य तथाविधः सन् । शश्वत् सदा । "पुनस्सदार्थयोः शश्वदि"-त्यमरः । आत्मनः कर्तुरनुगमनेन अनवरतानुवृत्त्या नन्दिनीं प्रसादयेत्यर्थः । अभ्यसनेन विद्याम् इव । अभ्यसनमभ्यासः ॥

प्रस्थितायां प्रतिष्ठेथाः स्थितायां स्थितिमाचरेः ।
निषण्णायां निषीदास्यां पीताम्भसि पिबेरपः ॥ ८६ ॥

**प्रका**—आत्मानुगमनं दर्शयति—**प्रस्थितायामिति** ॥ प्रशब्दस्य प्रकृतिविपरीतार्थवाचित्वात् गमनार्थत्वम् ॥

**पदा**—अनुगमनप्रकारमाह—**प्रस्थितायामिति** ॥ त्वं अस्यां प्रस्थितायां प्रतिष्ठेथाः । प्रस्थितायां गतायाम् । प्रशब्दस्य प्रकृतिविपरीतवाचित्वात् गत्यर्थत्वम् । 'ष्ठा गतिनिवृत्ताविति धातुः । प्रतिष्ठेथाः गच्छेः । त्वमस्यामिति च सर्ववा[1]क्येष्वनुषज्यते । स्थितायां स्थितिम् आचरेः । तिष्ठेत्यर्थः । निषण्णायां निषीद । उपविष्टायामुपविश । पीताम्भसि अपः पिबेः । पीतमम्भो जलं यया ॥

वधूर्भक्तिमती चैनामर्चितामा तपोवनात् ।
प्रयता प्रातरन्वेतु सायं प्रत्युद्व्रजेदपि ॥ ८७ ॥

**प्रका**—नायिकाया अपि इतिकर्तव्यतां दर्शयति—**वधूरिति** ॥ आ तपोवनादिति प्रत्युद्गमनेनापि संबध्यते । अयं चोत्तरसर्गार्थबिन्दुः ॥

**पदा**—[2]नायिकाया अपीतिकर्तव्यतामाह **वधूरिति** ॥ वधूः च भक्तिमती प्रातः अर्चिताम् एनां तपोवनात् आ अन्वेतु । भक्तिमती अर्चनायामनुगमने

1 वा योज्यम् । 2 नायिकया कर्तव्यमाह ।

च भक्त्या[1] भवितव्यम् । अर्चितामित्यनेन गमनारम्भे बध्वा पूजा कर्तव्येत्युक्तम् । पुनश्च तपोवनपर्यन्तमनुगमनं च कर्तव्यम् । अभिविधावाङ् । प्रयता व्रतोचितनियमवती । सायं प्रत्युद्व्रजेत् अपि । संध्यायां[2] प्रत्युद्गमनं च करोतु । तपोवनपर्यन्तत्वमत्रापि द्रष्टव्यम् । सर्वत्रापि विध्यर्थे लिङ्लोटौ । अयं चोत्तरसर्गार्थबिन्दुः ॥

इत्याप्रसादादस्यास्त्वं परिचर्यापरो भव ।
अविघ्नमस्तु ते स्थेयाः पितेव धुरि पुत्रिणाम् ॥ ८८ ॥

**प्रका**—इतीति ॥ आ प्रसादादन्तरा न कथञ्चिद्विरन्तव्यम् । प्रसादश्च भविष्यतीत्यर्थः । स्थेया इत्याशिषि । धुरि अग्रे ॥

**पद**—इतीति ॥ त्वम् अस्याः प्रसादात् आ इति परिचर्यापरः भव ॥ धेनोः प्रसादपर्यन्तमेवं शुश्रूषणं कर्तव्यम् । अन्तराये महत्यप्यन्तरा न विरन्तव्यम् । प्रसादस्तु भवत्येवेति भावः । इत्थं नियमभिधायाशिषं प्रयुङ्क्ते—अविघ्नमित्यादिना । ते अविघ्नम् अस्तु । अर्थाभावेऽव्ययीभावः । धेनुपरिचर्याया विघ्नाभावो भूयात् । आशिषि लोट् । त्वं पुत्रिणां धुरि स्थेयाः । पुत्रिणां सत्पुत्रयुक्तानाम् । प्रशंसायामिनिः । धुरि अग्रे । स्थेयाः इत्याशिषि लिङ् । पितेव यथा ते पिता त्वया सत्पुत्रवानासीत् त्वमपि तथा भूया इत्यर्थः ॥

तथेति प्रतिजग्राह प्रीतिमान् सपरिग्रहः ।
आदेशं देशकालज्ञः शिष्यश्शासितुरानतः ॥ ८९ ॥

**प्रका**—तथेति ॥ अभ्युपगमे तथाशब्दः । सपरिग्रहः सदारः । देशकालज्ञ इति । आदेशस्य देशकालोपपन्नतां अवबुध्येत्यर्थः । शिष्यः शासितुरिति तयोः । परस्परानुरूपया द्योत्यते । आनतः नम्रः । दम्पत्योः स गुर्वादेशः प्रीतिजननोऽभूदित्यर्थः । सुखागमरूपा प्राप्तिर्नामाङ्गमिदम् ॥

**पदा**—तथेति ॥ शिष्यः शासितुः आदेशं तथा इति प्रतिजग्राह । शासितुः गुरोः । शिष्यः शासितुरित्यनेन तयोः परस्परानुरूपता द्योत्यते । आदेशं नियोगम् । तथेत्यभ्युपगमे । इतिशब्दः प्रकारे । प्रतिजग्राह

1 भक्तया । 2 सायं संध्यायां प्रत्युद्व्रजेदपि प्रत्युद्गमनं च कार्यम् ।

अङ्गीचकार। प्रीतिमान् प्रसादयुक्तः। स नियोगो दम्पत्योः प्रीतये बभूवेति भावः। सपरिग्रहः सभार्यः। देशकालज्ञः देशकालवित्। आदेशस्य देशकालोपपन्नतामवबुध्याङ्गीचकारेत्यर्थः। आनतः नम्रः॥

अथ प्रदोषे दोषज्ञः संवेशाय विशां पतिम्।
सूनुः सूनृतवाक्स्रष्टुर्विससर्जोर्जितश्रियम् ॥ ९० ॥

प्रका—अथेति॥ 'विद्वान्विपश्चिद्दोषज्ञ' इति सिंहः। संवेशाय स्वापाय[1]। 'स्यान्निद्रा स्वपनं स्वापः स्वप्नः संवेश इत्यपि' इति सिंहः। सूनृतवाक् सूनृतया वाचेत्यर्थः। ऊर्जितश्रियं महाभाग्यनिधिमित्यर्थः। एवंविधस्य महाभागस्याध्वश्रमस्पृष्टस्य प्रजागरजा दोषा मा भूवन्निति प्रदोषसमय एव विदुषा मुनिना संवेश आदिष्ट इत्यर्थः॥

पदा—अथेति॥ अथ स्रष्टुः सूनुः प्रदोषे विशां पतिं संवेशाय विससर्ज। स्रष्टुर्ब्रह्मणः। सूनुः वसिष्ठः। प्रदोषे रजनीमुखे। "प्रदोषो रजनीमुखम्" इत्यमरः। विशां मनुजानाम् "द्वौ विशौ वैश्यमनुजा"विति सिंहः। संवेशाय निद्रायै। "स्यान्निद्रा स्वपनं स्वापः स्वप्नः संवेश इत्यपि" इत्यमरः। दोषज्ञः विद्वान्। "विद्वान् विपश्चिद्दोषज्ञ" इत्यमरः। सूनृतवाक् सूनृता प्रियसत्यात्मिका वाग्यस्य। 'प्रियं सत्यं च सूनृत"मिति हलायुधः। सूनृतया वाचा विससर्जेत्यर्थः। ऊर्जितश्रियं ऊर्जिता दीप्तिमती श्रीर्यस्य। "ऊर्जो दीप्तौ तथोत्साहे बले मासान्तरेऽपि च" इति केशवः। महाभाग्यनिधिमित्यर्थः। अध्वश्रमयुक्तस्यराज्ञः प्रजागरदोषो मा भूदिति विदुषा मुनिना प्रदोषसमय एव निद्रार्थं नियुक्त इत्यर्थः॥

सत्यामपि तपस्सिद्धौ नियमापेक्षया मुनिः।
कल्पवित्कल्पयामास वन्यामेवास्य संविधाम् ॥ ९१ ॥

प्रका—सत्यामपीति॥ तपस्सिद्धौ तपसा राजार्हस्याहारादेः संपत्तौ। नियमापेक्षया अद्यप्रभृति वन्यवृत्तिर्भवेदयमिति अभिप्रायेण। कल्पवित् प्रयोगज्ञः। संविधाम् आहारादिकल्पनाम्। प्रकृतारम्भरूपं करणं नामाङ्गमिदम्॥

---

1 स्वापाय।

पदा—सत्यामिति ॥ मुनिः तपस्सिद्धौ सत्याम् अपि नियमापेक्षया अस्य वन्याम् एव संविधाम् कल्पयामास । तपसा सिद्धिस्तपस्सिद्धिः । तपसा राजार्हस्याहारादेः सिद्धौ संपत्तौ सत्यामपीत्यर्थः । नियमे व्रते अपेक्षया । वन्यां वने भवाम् । संविधाम् आहारादिकल्पनाम् । कल्पो नाम सकलवैदिककर्मणामितिकर्तव्यताप्रतिपादनपरं शास्त्रम् । तज्जानातीति कल्पवित्प्रयोगज्ञ इत्यर्थः । व्रतारम्भस्य पूर्वेद्युरपि नियमिना भवितव्यमिति नियमं जानन्नित्यर्थः ॥

निर्दिष्टां कुलपतिना स धर्मशाला-
मध्यास्य प्रयतपरिग्रहद्वितीयः ।
तच्छिष्याध्ययननिवेदितावसानां
संविष्टः कुशशयने निशां निनाय ॥ ९२ ॥

इति श्री कालिदासकृते रघुवंशे महाकाव्ये
प्रथमः सर्गः

प्रका—निर्दिष्टामिति ॥ कुलपतिना मुनिसंघपतिना । प्रयतेति व्रतोपक्रम उक्तः । धर्मशालां अतिथिजनार्थां शालाम् । पर्णशालामिति वा पाठः । तच्छिष्येति । प्राभातिकाध्ययने मनुः "न निशान्ते परिश्रान्तो ब्रह्माधीत्य पुनः स्वपेदिति" । एवमत्र विधानवर्जं एकादशभिरङ्गैरुपेतो मुखसन्धिर्दर्शितः । विधानस्य तु यथासम्भवं प्रयोगः । उत्तरसर्गद्वयगतेषु सन्ध्यन्तरेष्वपि यथासम्भवमङ्गान्यूह्यानि ॥

इत्यरुणगिरिनाथविरचितायां रघुवंशप्रकाशिकायां
प्रथमः सर्गः ॥

पदा—निर्दिष्टामिति ॥ सः कुलपतिना निर्दिष्टां पर्णशालाम् अध्यास्य कुशशयने संविष्टः निशां निनाय । कुलपतिना मुनिसंघपतिना वसिष्ठेन निर्दिष्टां नियुक्ताम् । धर्मशालामिति पाठे अतिथिजनोपस्थानार्थां शालामित्यर्थः । अध्यास्य अधिष्ठाय । कुशनिर्मितं शयनं कुशशयनम् । संविष्टः सुप्तः । इदमपि व्रतारम्भाङ्गम् । प्रयतः शुद्धः परिग्रहः पत्नी एव द्वितीयः सहायो यस्य ।

1 पर्णशाला ।

अनेन पत्न्या अपि व्रतारम्भ उक्तः। तस्य वसिष्ठस्य। शिष्याणामध्ययनेन वेदाध्ययनेन निवेदितमवसानं यस्याः। अनेन प्राभातिकमध्यनमुक्तम्। अत्र मनुः "न निशान्ते परिश्रान्तो ब्रह्माधीत्य पुनः स्वपेत्" इति ॥

इति श्रीकृष्णप्रियशिष्यस्य नारायणस्य कृतौ रघुवंशव्याख्यायां पदार्थदीपिकायां प्रथमः सर्गः ॥



पदा—सत्यामिति ॥ मुनिः तपस्सिद्धौ सत्याम् अपि नियमापेक्षया अस्य वन्याम् एव संविधाम् कल्पयामास । तपसा सिद्धिस्तपस्सिद्धिः । तपसा राजार्हस्याहारादेः सिद्धौ संपत्तौ सत्यामपीत्यर्थः । नियमे व्रते अपेक्षया । वन्यां वने भवाम् । संविधाम् आहारादिकल्पनाम् । कल्पो नाम सकलवैदिककर्मणामितिकर्तव्यताप्रतिपादनपरं शास्त्रम् । तज्जानातीति कल्पवित्प्रयोगज्ञ इत्यर्थः । व्रतारम्भस्य पूर्वेद्युरपि नियमिना भवितव्यमिति नियमं जानन्नित्यर्थः ॥

निर्दिष्टां कुलपतिना स धर्मशाला-
मध्यास्य प्रयतपरिग्रहद्वितीयः ।
तच्छिष्याध्ययननिवेदितावसानां
संविष्टः कुशशयने निशां निनाय ॥ ९२ ॥

इति श्री कालिदासकृते रघुवंशे महाकाव्ये
प्रथमः सर्गः

प्रका—निर्दिष्टामिति ॥ कुलपतिना मुनिसंघपतिना । प्रयतेति व्रतोपक्रम उक्तः । धर्मशालां अतिथिजनार्थां शालाम् । पर्णशालामिति वा पाठः । तच्छिष्येति । प्राभातिकाध्ययने मनुः "न निशान्ते परिश्रान्तो ब्रह्माधीत्य पुनः स्वपेदिति" । एत्रपत्र विधानवर्जं एकादशभिरङ्गैरुपेता मुखसन्धिर्दर्शितः । विधानस्य तु यथासम्भवं प्रयोगः । उत्तरसर्गद्वयगतेषु सन्ध्यन्तरेष्वपि यथासम्भवमङ्गान्यूह्यानि ॥

इत्यरुणगिरिनाथविरचितायां रघुवंशप्रकाशिकायां
प्रथमः सर्गः ॥

पदा—निर्दिष्टामिति ॥ सः कुलपतिना निर्दिष्टां पर्णशालाम्[1] अध्यास्य कुशशयने संविष्टः निशां निनाय । कुलपतिना मुनिसंघपतिना वसिष्ठेन निर्दिष्टां नियुक्ताम् । धर्मशालामिति पाठे अतिथिजनोपस्थानार्थां शालामित्यर्थः । अध्यास्य अधिष्ठाय । कुशनिर्मितं शयनं कुशशयनम् । संविष्टः सुप्तः । इदमपि व्रतारम्भाङ्गम् । प्रयतः शुद्धः परिग्रहः पत्नी एव द्वितीयः सहायो यस्य ।

1 पर्णशाला ।

अनेन पत्न्या अपि व्रतारम्भ उक्तः। तस्य वसिष्ठस्य। शिष्याणामध्ययनेन वेदाध्ययनेन निवेदितमवसानं यस्याः। अनेन प्राभातिकमध्ययनमुक्तम्। अत्र मनुः "न निशान्ते परिश्रान्तो ब्रह्माधीत्य पुनः स्वपेत्" इति ॥

इति श्रीकृष्णप्रियशिष्यस्य नारायणस्य कृतौ रघुवंशव्याख्यायां पदार्थदीपिकायां प्रथमः सर्गः ॥



# द्वितीयः सर्गः ।

अथ प्रजानामधिपः प्रभाते
जायाप्रतिग्राहितगन्धमाल्याम् ।
वनाय पीतप्रतिबद्धवत्सां
यशोधनो धेनुमृषेर्मुमोच ॥ १ ॥

वन्दे[1] वेदाङ्गमीमांसातर्काद्यवयवोज्ज्वलाम् ।
अष्टादशात्मिकां वाणीं भक्ताभीष्टप्रदायिनीम् ॥

**प्रका** —अथ नायकस्य नियमचर्यामुपक्षिप्तां वर्णयति— **अथेति** ॥ प्रजानामधिप इति । तथाविधे कर्मण्यधिकृतस्य किं दुष्करमिति भावः । प्रभात इति प्रातरित्युक्तमनुवददुचितसमयजागरणं द्योतयति । जायेति । धेनोः सद्य एव गन्धमाल्यप्रतिग्रहात्पुत्रोत्पत्तियोग्यतालक्षणं जायात्वं संपन्नमिति भावः । वनाय वनं गन्तुम् । 'क्रियार्थे'त्यादिना चतुर्थी । पीत इति कर्तरि निष्ठा । यशोधनः यश एव धनं यस्य । तस्य स्वसुखदुःखेषु का गणनेति भावः । तदुक्तम् 'यस्य कृत्यं न विघ्नन्ति शीतमुष्णं भयं रतिः । समृद्धिरसमृद्धिर्वा स वै पण्डित उच्यते' इति । ऋषेर्धेनुमिति । धन्य एवायमिति भावः ॥

**पदा**—अथ पूर्वसर्गोपक्षिप्तां नायकस्य धेनुपरिचर्यां वर्णयति— **अथेति** ॥ अथ प्रजानामधिपः प्रभाते ऋषेर्धेनुं वनाय मुमोच । प्रजानामधिपो राजा । वनाय वनं गन्तुम् । 'क्रियार्थे'त्यादिना चतुर्थी । मुमोच मुक्तवान् । जायाप्रतिग्राहितगन्धमाल्याम् । गन्धं चन्दनम् । माल्यं पुष्पम् । अत्र जाया प्रतिग्राहयित्री । धेनुः प्रतिग्रहीत्री । गन्धमाल्ये च प्रतिग्राह्ये । अत्र गन्धमाल्य-

1 इदं पद्यं पूर्वसर्गव्याख्यानस्यान्ते दृश्यते क्वचित् ।

योरेव कर्मत्वात्तयोरेवक्तेनाभिधानात्. जायया कर्त्र्या प्रतिग्राहिते गन्धमाल्ये ययाकरणभूतयेति विग्रहः। पीत इति अन्तर्भूतण्यर्थः[1] प्रयोगः। पूर्वं पायितः पश्चात्प्रतिबद्धश्च वत्सो यस्याः। अथवा पीतं पानमस्यास्तीति पीतः। अकारो मत्वर्थीयः। 'भुक्ता ब्राह्मणाः पीता गावः' इति भाष्ये दर्शनात्। यश एव धनं यस्य। अनेन स्वसुखदुःखपरिगणनाभाव उक्तः॥

तस्याः खुरन्यासपवित्रपांसु-
मपांसुलानां धुरि कीर्तनीया।
मार्गं मनुष्येश्वरधर्मपत्नी
श्रुतेरिवार्थं स्मृतिरन्वगच्छत् ॥ २ ॥

**प्रका**—अथ नायिकाया वर्णयति—**तस्या इति**॥ खुरन्यासपवित्रपांसुमिति अपत्योत्पत्तिप्रतिबन्धकदुरितक्षयहेतुत्वं द्योतयद्दुरितक्षयहेतुतया सिद्धेन श्रुत्यर्थेन मार्गस्य साम्यं द्योतयति। अपांसुलानां पतिव्रतानाम्। 'पांसुला स्वैरिणी चेति' सिंहः। अपांसुलत्वं श्रुतेरपि यथाकथञ्चिद्योज्यम्। धुरि अग्रे। धर्मशब्दः श्लाघ्यविशेषणं 'हेमाङ्गदवत्'। अत्र वाक्यार्थोपमायां सामान्यभूतस्यानुगमनस्योपमानभूतसंबन्धिकर्मकर्तृप्रतिनियमेन गुणपौष्कल्यं प्रकाश्यते॥

**पदा**—अथ नायिकायाः परिचर्यामप्याह **तस्या इति**॥ मनुष्येश्वरधर्मपत्नी तस्याः मार्गं अन्वगच्छत्। मनुष्येश्वरो राजा तस्य धर्मपत्नी। श्लाघ्यत्वद्योतनार्थं धर्मपदं 'हेमाङ्गदादिवत्'। अन्वगच्छत् 'प्रातरन्वेत्विति' वसिष्ठोक्तप्रकारेणानुजगाम। श्रुतेरर्थं स्मृतिरिव। मन्वादिस्मृतीनां वेदार्थानुसारित्वं प्रसिद्धम्। खुराणां न्यासेन पवित्राः शुद्धिकराः पांसवो यस्मिन्। अनेन पुत्रोत्पत्तिप्रतिबन्धकदुरितनिवृत्तिहेतुत्वं द्योत्यते। तेन च दुरितक्षयहेतुतया प्रसिद्धेन श्रुत्यर्थेन साम्यम्। अपांसुलानां पतिव्रतानाम्। 'स्वैरिणी पांसुला च स्या'दित्यमरः। धुरि अग्रे। पतिव्रतानामग्रगण्येत्यर्थः। स्मृतिरपि श्रुत्यर्थमतिक्रम्य न वर्तत इति न तस्या अपि स्वैरचारिणीत्वम्॥

---

1 भाविताण्यर्थः।

निवर्त्य राजा दयितां दयालु-
स्तां सौरभेयीं सुरभिर्यशोभिः ।
पयोधरीभूतचतुस्समुद्रां
जुगोप गोरूपधरामिवोर्वीम् ॥ ३ ॥

**प्रका**—इत्थं यथोपयोगं नायिकावृत्तान्तमुपवर्ण्य पुनरपि प्रकृतं नायकवृत्तान्तमुपवर्णयति—**निवर्त्येति** ॥ निवर्त्य न तु निवृत्तायामिति । दयालुरिति । 'दयालुः सन्नप्या तपोवनादिति मुनिवचनान्निवर्तितवानिति' व्याचक्षते । वयं तु प्रत्युत दयालुत्वाद्वनगमनायासपरिजिहीर्षयेति, मुनिवचनेऽप्यवधिनिर्देशस्य सैवहेतुरिति मन्यामहे । सौरभेयीमिति सुरभिप्रतिनिधित्वभावनां द्योतयति । 'प्रतिनिधिं कृत्वेत्युक्तत्वात्' । सुरभिः श्रेष्ठः । 'श्रेष्ठेऽपि निगद्यते सुरभिः। इति हलायुधः । अथवा कविसमयसिद्धं यशस्सौरभम् । यथा 'अधिवास्य यदि स्वकैर्यशोभि'रिति । अत्र बहुवचनेन तत्कारणभूतापदानबहुत्वं द्योतयति । सौरभेयीं सुरभिरिति अनुरूपमनयोः संगतमिति द्योत्यते । अत्र सविशेषणाया उर्व्या उत्प्रेक्षायां राजकर्तृकं गोपनं निमित्तम् । गोरूपत्वं तु प्रागुक्तन्यायेनातिशयार्थम् । चतुस्समुद्राणां पयोधरीभावस्य चावयवरूपणवदुत्प्रेक्ष्यमाणत्वान्निर्व्यूढाप्युत्प्रेक्षा रसाङ्गत्वेन प्रत्यवेक्षिता । तदुक्तं ध्वनिकृता — 'निर्व्यूढावपि चाङ्गत्वे यत्नेन प्रत्यवेक्षणम्' इति ॥

**पदा**—अथ नायकवृत्तान्तमेव प्रस्तौति **निवर्त्येति** ॥ राजा दयितां निवर्त्य तां सौरभेयीं जुगोप । सौरभेयीं सुरभेः पुत्रीम् । अनेन राज्ञस्तस्यां सुरभिप्रतिनिधित्वसंकल्प उक्तः । 'कृत्वा प्रतिनिधिमिति' नियोगात् । जुगोप रक्षितवान् । पयोधरीभूतचतुस्समुद्रां गोरूपधरां उर्वीमिव । पयोधरीभूताः पयोधरत्वं स्तनत्वं प्राप्ताः चत्वारः समुद्रा यस्याः । गोरूपधरां गोः रूपधारिणीम् भुवमिव । राज्ञा रक्ष्यमाणत्वमुर्वीत्वोत्प्रेक्षायां हेतुः । दयालुः दयाशीलः । अयं निवर्तने हेतुः । यशोभिः सुरभिः । यशोभिरिति बहुवचनेन यशःकारणभूतानामपदानानां बहुत्वमुक्तम् । सुरभिः श्रेष्ठः । 'श्रेष्ठेऽपि निगद्यते सुरभिरिति' हलायुधः । अथवा यशसः सौरभ्यं कविसमयसिद्धमेव । यथाह मुरारिः 'अधिवास्य यदि स्वकैर्यशोभिरिति' ॥

व्रताय तेनानुचरेण धेनो-
न्र्यषेधि शेषोऽप्यनुयायिवर्गः ।
न चान्यतस्तस्य शरीररक्षा
स्ववीर्यगुप्ता हि मनोः प्रसूतिः ॥ ४ ॥

**प्रका**—व्रतायेति ॥ व्रताय न्यषेधीत्यन्वयः। धेनोरनुचरेणेति तत्कालविशेषणम्। तदा तस्य तदेव युज्यत इति भावः। निवर्तितां दयितामपेक्ष्य शेषशब्दः प्रयुक्तः। अत एवापिशब्दः। न केवलं सैवेत्यर्थः। चशब्दो यस्मादर्थे। शरीररक्षेति। आत्मरक्षारूपं तु प्रत्यवायपरिहारादि पुरोहिताद्यायत्तमपि भवेदिति भावः। प्रसूतिः सन्तानम् ॥

**पदा**—व्रतायेति ॥ धेनोरनुचरेण तेन शेषः अनुयायिवर्गोऽपि व्रताय न्यषेधि। निवर्तितदयितापेक्षया शेषशब्दः। अत एवापिशब्दप्रयोगः। अनुयायिवर्गो भृत्यवर्गः। गुरुधेनुपरिचरणं ह्यात्मनो व्रतम्, तत्र किं परिजनेनेति मन्वानेन तेन भृत्यवर्गोऽपि निषिद्धोऽभूदित्यर्थः। ननु स्वशरीररक्षणार्थमस्त्वत आह—तस्य अन्यतः शरीररक्षा न चेति। अन्यस्मात्पुरुषात्सकाशात्। चकारो यस्मादर्थे। उक्तमर्थं समर्थयते—मनोः प्रसूतिः स्ववीर्यगुप्ता हीति। प्रसूतिः सन्ततिः। न हि मनुकुलजातानामात्मरक्षणे परापेक्षेत्यर्थान्तरन्यासः ॥

आस्वादवद्भिः कवलैस्तृणानां
कण्डूयनैर्दंशनिवारणैश्च ।
अव्याहतस्वैरगतैश्च तस्याः
सम्राट् समाराधनतत्परोऽभूत् ॥ ५ ॥

**प्रका**—अथ द्वाभ्यां श्लोकाभ्यामनुवृत्तिकौशलं दर्शयति[1]– **आस्वादवद्भिरिति** ॥ 'प्रशंसायां मतुप्'। हृद्यास्वादनैरित्यर्थः। कवलैर्ग्रासैः। 'दंशस्तु वनमक्षिकेति' सिंहः। अव्याहतस्वैरगतैः स्वैरगमनानिषेधेनेत्यर्थः। 'स्वैरगतेस्स' इति वा पाठः। सम्राट् सर्वसमाराधनीयोऽपीत्यर्थः ॥

---

1 द्योत यति।

**पदा**—द्वाभ्यां श्लोकाभ्यामनुवृत्तिकौशलं दर्शयति --**आस्वादवद्भिरिति** ॥ स सम्राट् तस्याः समाराधनतत्परोऽभूत् । सम्राट् सार्वभौमः । समाराधनं शुश्रूषा । सकलराजकुलसमाराधनीयोऽपि गुरुधेनुपरिचर्यापरोऽभूदित्यर्थः । आस्वादवद्भिस्तृणानां कवलैः कण्डूयनैः दंशनिवारणैश्च अव्याहतस्वैरगतेः । आस्वादवद्भिः प्रशंसायां मतुप् । हृद्यास्वादैरित्यर्थः । कवलैः ग्रासैः । 'दंशस्तु वनमक्षिके'ति सिंहः । अव्याहता अप्रतिहता स्वैरगतिः स्वैरसञ्चारो यस्याः । क्षुदादयो हि स्वैरसञ्चारं निरुन्धन्तीति भावः ॥

स्थितः स्थितामुच्चलितः प्रयातां
निषेदुषीमासनबन्धधीरः ।
जलाभिलाषी जलमाददानां
छायेव तां भूपतिरन्वगच्छत् ॥ ६ ॥

**प्रका**—**स्थित इति** ॥ अन्वगच्छत् अन्ववर्तत । स्थितः स्थितामित्यादीनाञ्चानुवृत्तिप्रकारत्वम् । छायेवेति । छायायां तु तथाभावः प्रातीतिकः । अत्र 'प्रयातां प्रयात' इत्याद्यवचनात् प्रक्रमभेद इति न शङ्क्यम्, उच्चलित इत्यादौ सविशेषकरणस्य विवक्षितत्वात् । एवं च गुरुनिर्देशे[1] सविशेषा प्रतिपत्तिरत्र श्लोके प्रतिपादिता । पूर्वत्र तु स्वप्रतिभापरिकल्पिता[2] धेन्वनुवृत्तिः ॥

**पदा**—**स्थित इति** ॥ भूपतिः छायेव तामन्वगच्छत् अनुवर्तितवान् । अनुवर्तनप्रकारमाह—स्थित इत्यादिना । स्थितां स्थितः तिष्ठन्तीं तां तिष्ठन् सन् । प्रयातां उच्चलितः गच्छन् सन् । निषेदुषीं आसनबन्धधीरः आसनबन्धेनावस्थानेन धीरः अचलः[3] । जलम् आददानां पिबन्तीं तां जलाभिलाषी । जलपानाभिलाषमात्रमपि तस्य तदानीमेवेति भावः । 'प्रस्थितायां प्रतिष्ठेथाः' इत्यादिगुरुनियोगस्य सविशेषकरणमेवात्र श्लोके विवक्षितम् । अत एव प्रयातां प्रयात इत्यादिवचनाभावः इति न प्रक्रमभङ्गो दोषाय । अपि तु गुणायैव ॥

सन्यस्तचिह्नामपि राजलक्ष्मीं
तेजोविशेषानुमितां दधानः ।

1 निर्देशे । 2 प्रतिभाकल्पिता । 3 अचञ्चलः ।

आसीदनाविष्कृतदानराजि-
रन्तर्मदावस्थ इव द्विपेन्द्रः ॥ ७ ॥

**प्रका** — अथ प्रसङ्गागतान् गुणोत्कर्षप्रकाशकान् अर्थान् वर्णयति — **सन्यस्तेति** ॥ तेजोविशेषो दीप्त्यतिशयः । अत्र सामान्यधर्मस्य बिम्बप्रतिबिम्बभावेन निर्देशः सन्यस्तानाविष्कृतयोरदर्शनानुगतेः । अनाविष्कृतदानराजित्वेन इतरसूक्ष्ममदकार्याभ्यनुज्ञानादन्तर्मदाया अवस्थाया अनुमितिरित्यवसेयम् ॥

**पदा** — एवं वने वर्तमानस्यापि महाराजस्य पूर्वावस्थापेक्षया न्यूनत्वं न जातमिति श्लोकचतुष्टयेनाह — सन्यस्तेति ॥ सन्यस्तचिह्नामपि तेजोविशेषानुमितां राजलक्ष्मीं दधानः सः अनाविष्कृतदानराजिरन्तर्मदावस्थः द्विपेन्द्र इवासीत् । सन्यस्तानि सम्यङ्न्यस्तानि उपेक्षितानि चिह्नानि छत्रचामरादीनि यस्याः । तथापि तेजोविशेषेण दीप्त्यतिशयेनानुमिताम् । प्रेक्षकैरिति शेषः । अनाविष्कृता अप्रकाशिता दानराजिः मदप्रवाहो येन । अन्तर्भागे मदावस्था मदस्थावस्था यस्य । यथा दानराजेरनाविष्करणेऽपि तदतिरिक्तस्य सूक्ष्ममदकार्यस्य दर्शनादन्तर्गतमदावस्था गजस्यानुमीयते, तथा राज्ञस्तेजोविशेषेण राजलक्ष्मीरिति भावः । अत्रोपमा ॥

लताप्रतानोद्ग्रथितैः स केशै-
रधिज्यधन्वा विचचार दावम् ।
रक्षापदेशाद्गुरुहोमधेनो-
र्वन्यान्विनेष्यन्निव दुष्टसत्त्वान् ॥ ८ ॥

**प्रका** — **लतेति** ॥ प्रतानं कुटिलो लतातन्तुः । यद्वत्तया प्रतानिनी वीरुत् । 'लता प्रतानिनी वीरु'दिति सिंहः । केशैरित्युपलक्षणे तृतीया । अधिज्यधन्वा । 'धनुषश्चेत्यनङ्' । दावं वनम् । रक्षापदेशादित्यपह्नुतिः । 'प्रकृतं यन्निषिध्यान्यत्साध्यतेऽसात्वपह्नुतिः' । अत्र रक्षामपह्नुत्य विनयः साध्यतयोत्प्रेक्ष्यते । गुरुहोमधेनोरित्यपदेशस्य श्रद्धेयतां द्योतयति । वन्यान् दुर्विसम्भ-

---

1 मुनिहोम ।

णानित्यर्थः । न चानयोः सङ्करः । अपह्नुत्यविनाभावित्वादुत्प्रेक्षायाः । मिथोऽव्यभिचारे हि संकरव्यवहारः । अन्यथा सर्वत्र रूपके उपमायाः संकरः स्यात् । एवम् 'अध्यारुरोहेव रजश्छलेने'त्यादौ ॥

पद्मा—लतेति ॥ सः दावं विचचार । दावं वनम् । अत्यन्तसंयोगे द्वितीया । लताप्रतानोद्ग्रथितैः केशैरुपलक्षितः । लतानां प्रतानैः कुटिलतन्तुभिः । लताविशेषेषु हि कुटिलास्तन्तवः सन्ति । अत एव तासां प्रतानिनीत्वम् । 'लता प्रतानिनी वीरु'दित्यमरः । उद्ग्रथितैः ऊर्ध्वं ग्रथितैः बद्धैः । अधिरोपिता ज्या मौर्वी यस्मिन् तदधिज्यम् । अधिज्यं धनुर्यस्य सोऽधिज्यधन्वा । 'धनुषश्चे' त्यनङ् । गुरुहोमधेनोः रक्षापदेशात् वन्यान् दुष्टसत्त्वान् विनेष्यन्निव । रक्षेत्यपदेशो रक्षापदेशः । अपदेशो व्याजः । वन्यान् वने भवान् । दुष्टसत्त्वान् दुष्ट जन्तून् । विनेष्यन् । 'लृटः सद्वा' इति लृटः शत्रादेशः । विनेतुमारब्ध इवेत्यर्थः । अत्र प्रकृतं गुरुधेनुरक्षणं निषिध्याप्रकृतं दुष्टसत्त्वशिक्षणमुत्प्रेक्ष्यत इति सापह्नवेयमुत्प्रेक्षा । 'प्रकृतं यन्निषिध्यान्यत् साध्यते सा त्वपह्नुतिरिति' लक्षणम् ॥

विसृष्टपार्श्वानुचरस्य तस्य
पार्श्वद्रुमाः पाशभृता समस्य ।
उदीरयामासुरिवोन्मदाना-
मालोकशब्दं वयसां विरावैः ॥ ९ ॥

प्रका—विसृष्टेति ॥ पार्श्वानुचरा आसन्नसेवकाः । एतच्चोचितावसरे सेवां[1] दर्शयदुत्प्रेक्षामुपस्कुरुते । पार्श्वद्रुमाः द्रुमेष्वपि केचिदेव धन्या इति भावः । पार्श्वशब्देनासन्नत्वमुच्यते । तच्च वयसां विरावे हेतुः । पाशभृद्वरुणस्तेन समस्य । उचितवृत्तिव्यपेतानां शासितुरित्यर्थः । तदुक्तम् 'शास्ता हि वरुणो राजा मिथ्याव्याचरतां[2] नृष्वि'ति । वक्ष्यति च 'समतया वसुवृष्टी'त्यादि । उन्मदानामिति सहेलालोकशब्दोच्चारणसाधर्म्यसिध्यर्थम् । यथा कादम्बर्याम्— 'आलोकयालोकयेति सहेलमुच्चैरुच्चारयता'मिति । आलोकय इत्ययं शब्द आलोकशब्दः । वक्ष्यति च—'ययावुदीरितालोक' इति । आलोकयेति

1 द्योत । 2 पारताम् ।

शब्दमित्यर्थः। अत्रालोकशब्दोदीरणोत्प्रेक्षायां निमित्तं पाशभृत्साम्यम्। सा च तन्निमित्तमस्यानुभावं पोषयति। करणत्वेन विवक्षितो वयोविरावश्च तस्या विषयः। विसृष्टासन्नसेवकत्वादवसरोचितोपस्थानस्य वरुणस्येवोचितवृत्तिव्यपेत-शासितुस्तस्य केचिदेव दैवादासन्नवर्तिनो द्रुमाः उन्मदवयोविरावव्यपदेशेनासन्न-सेवकोदीरणीयमालोकशब्दमुदीरयामासुरिवेत्यर्थः[1]॥

पदा — विसृष्टेति॥ पार्श्वद्रुमाः वयसां विरावैः तस्य आलोकशब्दं उदीरयामासुरिव। पार्श्वद्वये वर्तमाना वृक्षाः। अनेनासन्नसेवकसाम्यमुक्तम्। तच्चोत्प्रेक्षां स्फुटयति। वयसां पक्षिणाम्। विरावैः शब्दैः करणैः। आलोक-यालोकयेति शब्दः आलोकशब्दः। स च राज्ञामागमननिवेदनसूचकः। वक्ष्यति च 'ययावुदीरितालोक' इति। उदीरणमुच्चारणम्। इवशब्द उत्प्रेक्षाद्योतकः। विसृष्टाः निवर्तिताः पार्श्वानुचरा आसन्नसेवका येन। पाशभृद्वरुणः। 'प्रचेता वरुणः पाशी'त्यमरः। तेन तुल्यस्य। अविनीतानां शासनमत्र सादृश्यम्। तदुक्तम्—'शास्ता हि वरुणो राजा मिथ्याह्याचरतां नृषु' इति। अनेनालोक-शब्दोच्चारणयोग्यतोक्ता। उन्मदानां उद्भूतमदानाम्। अनेनालोकशब्दस्य सहेलोच्चारणं प्रतीयते। यथा कादम्बर्यां, 'आलोकयालोकयेति सहेलमुच्चैरुच्चा-रयता'मिति॥

मरुत्प्रयुक्ताश्च मरुत्सखाभं
तमर्च्यमारादभिवर्तमानम्।
अवाकिरन् बाललताः प्रसूनै-
राचारलाजैरिव पौरकन्याः ॥ १० ॥

प्रका—मरुदिति॥ मरुता कुलवृद्धस्थानीयेन प्रयुक्ताः प्रेरिताः। मरुत्सखोऽग्निः। अर्च्यं दैवेनोपपादितमित्यर्थः। बालशब्दश्च रामणीयकाभिप्रायः। तत्प्रतिबिम्बतया च कन्याशब्द उपात्तः। न तु लाजावकिरणे कन्यानामेवाधि-कारः। 'अवाकिरन् वयोवृद्धाः' इति वक्ष्यमाणत्वात्। आचारार्था लाजा आचारलाजाः। अत्रौपमानिकीं प्रीतिमनुबध्नते व मरुता प्रेरिता इति हेतूत्प्रेक्षा मरुत्सखाभपदेन व्यज्यते॥

---

1 आलोकशब्दमिति ख पाठः।

पदा—मरुदिति ॥ बाललताः च प्रसूनैस्तमवाकिरन् । बाला अभिनवा लताः । अनेन लतानां रमणीयत्वमुक्तम् । अवाकिरन् 'कॄ विक्षेप' इति धातुः । पौरकन्या आचारलाजैरिव । पौरकन्याः पौरस्त्रियः । बाललताप्रतिबिम्बत्वसिध्यर्थं कन्याशब्दोपादानम् । आचारार्थाः लाजाः आचारलाजाः । राज्ञां निर्गमनसमयोचितैर्लाजैरित्यर्थः । वक्ष्यति च—'अवाकिरन् वयोवृद्धास्तं लाजैः पौरयोषितः' इति । मरुत्प्रयुक्ताः मरुता वायुना कुलवृद्धस्थानीयेन प्रयुक्ताः प्रेरिताः । मरुत्सखोऽग्निः तस्याभेवाभा शोभा यस्य । अनेन स्वबन्धुसादृश्यान्मरुता प्रेरिता इवेत्युत्प्रेक्षा ध्वन्यते । अर्च्यं पूज्यम् । आरादभिवर्तमानम् । 'आराद्दूरसमीपयो'रित्यमरः । समीपमेवावर्तमानम् । स्वत एव पूज्यस्य दैववशात्समीपागमने के नाम न पूजयेयुरिति भावः ॥

धनुर्भृतोऽप्यस्य दयार्द्रभाव-
माख्यातमन्तःकरणैर्विशङ्कैः ।
विलोकयन्त्यो वपुरापुरक्ष्णां
प्रकामविस्तारफलं हरिण्यः ॥ ११ ॥

प्रका—धनुर्भृतोऽपीति ॥ अस्येति अस्माकमप्यपरोक्षायमाणस्येत्यर्थः । दयार्द्रभावं दयार्द्रत्वम् । आख्यातं कथितम् । 'ब्रुविशासिगुणेन च यत्सचते' इत्यस्य व्याख्याने न्यासकारेण 'ब्रुवी'त्यर्थग्रहणमित्युक्तत्वात् ख्यातेर्द्विकर्मकत्वम् । विशङ्कैरन्तःकरणैर्दयार्द्रत्वमाख्यापितं वपुर्विलोकयन्त्य इत्यर्थः । अथवा दयार्द्रो भावो हृदयं यस्येति वपुर्विशेषणम् । दयार्द्रहृदयत्वेन कथितमित्यर्थः । अत्राख्यानस्य प्रतिपादनरूपत्वात्तथाविधायाश्च प्रतिपत्तेर्मृगीष्वनुपपत्तेरसंबन्धे संबन्धस्य सिद्धत्वेनोक्तत्वादतिशयोक्तिभेदत्वम् । प्रकामविस्तारस्य फलं प्रीत्यतिशयलक्षणम् । साधनपौष्कल्ये फलपौष्कल्यमिति ॥

पदा—धनुर्भृत इति ॥ अस्य वपुर्विलोकयन्त्यः हरिण्यः अक्ष्णां प्रकामविस्तारफलम् आपुः । या हरिणाङ्गना दैववशात्तदवलोकनलाभमनुबभूवुः ता निजविलोचनानामत्यन्तविस्तारफलं प्राप्तवत्यः । 'साधनाधिक्ये साध्यमप्यधिकं भवती'ति हि न्यायेन सुतरां प्रीतिमवापुरित्यर्थः । नान्येषामेवंविधा प्रीतिः संभाव्यते । साधनस्याल्पत्वात इति भावः । धनुर्भृतोऽपि । भयहेतुत्वेन प्रकामविस्तारफलानुभवविरोधपरिहारं द्योतयति । विशङ्कैरन्तःकरणै-

दयार्द्रभावम् आख्यातम्[1] । वपुर्विशेषणमिदम् । विशङ्कैः शङ्कारहितैः । अन्तःकरणैर्मृगीणामेव हृदयैः । दयया आर्द्रो भावो हृदयं यस्य इति बहुव्रीहिसमासः । आख्यातमिति कर्मणि क्तः । निजहृदयैरेव कर्तृभिर्दयार्द्रहृदयत्वेन कथितमित्यर्थः । अभिगम्यत्वगुणो राज्ञोऽनेन दर्शितः । यदयं तिरश्चामपि हृदयं सौभाग्येनाचकर्ष । अत्राख्यानस्य प्रतिपादनरूपत्वान्मृगीषु तथाविधप्रतीतिसंबन्धानुपपत्तेरसम्बन्धे सम्बन्धस्य सिद्धवत्कथनादतिशयोक्तिभेदः ॥

स कीचकैर्मारुतपूर्णरन्ध्रैः
कूजद्भिरापादितवंशकृत्यम् ।
शुश्राव कुञ्जेषु यशः स्वमुच्चै-
रुद्गीयमानं वनदेवताभिः ॥ १२ ॥

**प्रका—स कीचकैरिति ॥** मारुतसन्निधौ सरन्ध्रत्वाद्ये वेणवः स्वननयोग्यास्ते कीचकाः । 'वेणवः कीचकास्ते स्युर्ये स्वनन्त्यनिलोद्धताः' इति सिंहः । आपादितं वंशकृत्यं तानप्रदानं यस्य । यथा कुमारसम्भवे 'उद्गास्यतामिच्छति किन्नराणां तानप्रदायित्वमिवोपगन्तुम्' इति । शुश्राव । न त्वभिननन्द । सत्त्वप्रधानत्वात् । कुञ्जेषु स्वस्वनिवासगताभिरित्यर्थः । अनेन नित्यप्रवृत्तम्, न तु तत्सन्निधिप्रवृत्तं[2] तद्यशोगानमिति ध्वन्यते । उच्चैरिति यशोविशेषणम्[3] । उद्गीतमिति कोप्यलङ्कारः । तथा मातङ्गे—'तारदेकान्तरस्वरावरोहेणोद्गीत'मिति । उद्गीतेन गीयमानमुद्गीयमानम् । वनदेवताभिरिति देवतानामप्येतदेव गेयं किमुत मनुष्याणामिति ध्वन्यते ॥

**पदा—स इति ॥** सः कुञ्जेषु स्वं यशः शुश्राव । कुञ्जेषु लतागृहेषु । वनदेवताभिः उच्चैः उद्गीयमानं उद्गीतेन गीयमानम् । उद्गीतमिति कोऽप्यलङ्कारविशेषः । तदुक्तं मातङ्गे—'तारादेकान्तरस्वरावरोहेणोद्गीत'मिति ।

---

1 आख्यातमित्येतदनन्तरं "विशङ्कैः शङ्कारहितैः । अन्तःकरणैः मृगीणामेव हृदयैः । यदार्द्रभावो दयार्द्रत्वम् । आख्यातं कथितम् । वपुर्विशेषणमिदम् । 'ब्रुविशासिगुणेन च यत्सचते" इत्यस्यव्याख्याने न्यासकारेण 'ब्रुवि' इत्यर्थग्रहणमित्युक्तत्वात् ख्यातेर्द्विकर्मकत्वम् । आख्यातमिति कर्मणि क्तः । दयार्द्रभावमिति कर्तुरीप्सिततमं कर्म' इति कर्मसंज्ञा । तस्य क्तेनानभिहितत्वाद्द्वितीया । अथवा" इति 'दयया आर्द्र' इत्यतःपूर्वं क्वचिदधिकः पाठः । 2 प्रयुक्तम् । 3 क्रिया ।

कूजद्भिः कीचकैरापादितवंशकृत्यम्। कूजद्भिः शब्दायमानैः। कीचकैः। 'वेणवः कीचकास्ते स्युर्ये स्वनन्त्यनिलोद्धताः' इति सिंहः। आपादितं कृतं वंशकृत्यं तानप्रदानं यस्य। मारुतेन वायुना पूर्णं रन्ध्रं सुषिरं येषाम्॥

पृक्तस्तुषारैर्गिरिनिर्झराणा-
मनोकहाकम्पितपुष्पगन्धी[1]।
तमातपक्लान्तमनातपत्र-
माचारपूतं पवनः सिषेवे ॥ १३ ॥

**प्रका—पृक्त इति॥** तुषारैः सूक्ष्मकणैः। गिरिशब्द ऊर्ध्वदेशसम्बन्धात् तुषाराणां सुहरत्वं द्योतयति। गन्धीति पाठः। एते च विशेषणे रामणीयकाभिप्राये। आतपक्लान्तमनातपत्रमिति च हेतुहेतुमद्भावेन स्थिते सेवाया उचितावसरत्वं द्योतयतः[2]। आचारपूतमिति। कथं तथाविधे भूतानि न प्रह्वीभावं भजेयुरिति भावः। सिषेवे स्वोचितवीजनेनोपचारेण उपस्थानं कृतवान्॥

**पदा—पृक्त इति॥** पवनस्तं सिषेवे। स्वोचितेन वीजनेनोपस्थितवान्। पवनस्य रमणीयत्वमाह—पृक्त इत्यादिना। गिरिनिर्झराणां तुषारैः पृक्तः। गिरिषु ये निर्झराः वारिप्रवाहाः। 'वारिप्रवाहो निर्झरो झरः' इत्यमरः। तुषारैः सूक्ष्मकणैः। पृक्तः संपृक्तः। अनोकहाकम्पितपुष्पगन्धी अनोकहेषु वृक्षेषु यान्याकम्पितानि पुष्पाणि तेषां गन्धोऽस्यास्तीति इनिः। सेवाया उचितावसरत्वमाह—आतपक्लान्तमिति। आतपेन क्लान्तं पीडितम्। तत्र हेतुरनातपत्रमिति। छत्ररहितम्। श्रुतिस्मृतिविहितैराचारैः पूतं शुद्धान्तःकरणम्। कथं तथाविधे जने भूतानि न प्रह्वीभावं भजेयुरिति भावः॥

शशाम वृष्ट्यापि विना दवाग्नि-
रासीद्विशेषा[3]त्फलपुष्पवृद्धिः।
ऊनं न सत्त्वेष्वधिको बबाधे
तस्मिन्वनं गोप्तरि गाहमाने ॥ १४ ॥

1 न्धिः। 2 दर्शयतः। 3 पा फ।

**प्रका — शशामेति ॥** वृष्ट्या विनापीति विरोधः। विशेषादतिशयात्। अतिशयमाश्रित्येत्यर्थः। गोप्तरीति। एतदेवास्य लोकोत्तरं गोप्तृत्वम्, यत्प्रविशत्येवास्मिन् दैव्य आपद उपशान्ताः सिद्धयश्चाविर्भूता इति। गाहमान इति निमित्तसप्तमी। अनेन श्लोकत्रयेणास्य दिव्यानुभावित्वं दर्शितम् ॥

**पदा— शशामेति ॥** तस्मिन् वनं गाहमाने दवाग्निर्वृष्ट्या विनापि शशाम। गाहमान इति निमित्तसप्तमी। वृष्ट्या विनापीति विरोधः। नह्यरण्याग्निर्वर्षेण विना वनमनिश्शेषीकृत्य शाम्यति। अनेन दैवीनामापदां निवृत्तिरुक्ता। फलपुष्पवृद्धिः विशेषादासीत्। विशेषोऽतिशयः। विशेषमाश्रित्येत्यर्थः। फलानि पुष्पाणि च पूर्वस्माद्विशेषमाश्रित्य वृद्धिमीयुः। अनेन सिद्धीनामाविर्भावः। सत्त्वेषु अधिकः तनुं न बबाधे। वनजन्तुष्वधिकः सिंहादिः तनुमल्पं मृगादिकं न बाधितवान्। अनेन जन्तूनां मात्स्यन्यायनिवृत्तिरुक्ता। तत्र सर्वत्र हेतुः गोप्तरीति। लोकोत्तरं ह्यस्य रक्षितृत्वमिति भावः ॥

सञ्चारपूतानि दिगन्तराणि
कृत्वा दिनान्ते निलयाय गन्तुम्।
प्रचक्रमे पल्लवरागताम्रा
प्रभा पतङ्गस्य मुनेश्च धेनुः ॥ १५ ॥

**प्रका** --प्रकृतमनुसंधत्ते— **सञ्चारेति ॥** दिगन्तराणीति बहुवचनेन प्रदेशस्यापि सुलभतृणत्वे बहुदिगन्तरसञ्चारं पावनाभिप्रायेण कृतवतीति कारुणिकत्वं ध्वनितम्। निमित्ते सप्तमी। निलयायेति। 'गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि' इति चतुर्थी। निलयो गृहं नितरां लीयतेऽस्मिन्निति मण्डलं च। दीपकमत्रालङ्कारः। 'सकृद्वृत्तिस्तु धर्मस्य प्रकृताप्रकृतात्मनाम्। सैव क्रियासु बह्वीषु कारकस्येति दीपकम्' इति। अत्र चोपमानोपमेयसंबन्धिन्योर्गुणक्रिययोर्धर्मयोरेकवारमुपात्तयोरेकस्थयोः समस्तवाक्यदीपनात् दीपकमिति। अत्र धेन्वपेक्षया कालनिवेदिकायाः पतङ्गप्रभायाः अप्रकृतत्वम्। तत एव न तुल्ययोगिता, तस्या नियतविषयत्वात्। नापि समुच्चयः, साध्यसाधनभावाद्यविवक्षणात् ॥

1 मत्स्येषु हि बलिनो दुर्बलान् बाधन्ते।

पदा—प्रकृतमेवानुस्सृत्याह[1]—सञ्चारेति ॥ पतङ्गस्य प्रभा मुनेर्धेनुश्च दिगन्तराणि सञ्चारपूतानि कृत्वा दिनान्ते निलयाय गन्तुं प्रचक्रमे। पतङ्गः सूर्यः। 'पतङ्गौ पक्षिसूर्यौ च' इत्यमरः। सञ्चारेण पूतानि शुद्धानि। पतङ्गप्रभायाः शुद्धिकरत्वं स्मृतिप्रसिद्धम्। 'पन्थानश्च विशुध्यन्ति सूर्यसोमांशुमारुतैः' इति। दिनान्ते सन्ध्यायाम्। निलयो गृहं नितरां लीयतेऽस्मिन्निति व्युत्पत्त्या मण्डलं च। 'गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि' इति चतुर्थी। प्रभाया मण्डलप्राप्तिः प्रातिभासकी। पल्लवरागताम्रा पल्लवस्य रागो रक्तिमा तद्वत्ताम्रा रक्तवर्णा। नन्वेवं सति पल्लवताम्रेत्येव वक्तव्यम्। मैवम्। अतिशयद्योतनार्थत्वात् रागशब्दस्य। पद्मरागपुष्यरागादिवत् पल्लवरागोपि माणिक्यविशेष इति केचित्। अत्रोपमानोपमेयसंबन्धिन्योर्गुणक्रिययोरेकवारमुपात्तयोरेकस्थयोः समस्तवाक्यदीपनाद्दीपकमलङ्कारः। 'सकृद्वृत्तिस्तु धर्मस्य प्रकृताप्रकृतात्मनाम्। सैव क्रियासु बह्वीषु कारकस्येति दीपकम्'' इति ॥

तां देवतापित्रतिथिक्रियार्था-
मन्वग्ययौ मध्यमलोकपालः।
बभौ च सा तेन सतां मतेन
श्रद्धेव साक्षाद्विधिनोपपन्ना ॥ १६ ॥

प्रका—तामिति॥ देवतेत्यादि दिव्याया धेनोः स्वयंगमनोपक्रमहेतुत्वेन, श्रद्धासाधर्म्यनिर्वाहकत्वेन चोपात्तम्। अन्वक् अनुपदम्। क्रियाविशेषणं चैतत्। मध्यमलोकपालः भूलोकपालः। यथा 'अवततार मध्यमं लोकमंशुमाली' इति। अनेन कर्मभूमिपालनाधिकृतस्य तस्य देवतापित्रतिथिकर्मार्थाया धेनोरनुगमनं युक्तमेवेति द्योत्यते। सतां मतेनेति विधावप्यन्वेति। श्रद्धा अवश्यकर्तव्यतयाभिसन्धिः। विधिना चोदितकर्मानुष्ठानेन। साक्षात् प्रत्यक्षीभूय। उपपन्ना युक्ता। साक्षाच्छब्दबलादियमुत्प्रेक्षा। तया च तयोर्योगे किं न भवेच्छ्रेय इति द्योत्यते॥

पदा—तामिति॥ मध्यमलोकपालः तां अन्वक् ययौ। मध्यमलोकः स्वर्गपाताळापेक्षया भूलोकः। उक्तं च वासवदत्तायाम्। 'अवततार मध्यमं लोकमंशुमाली'

1 स्मृ।

इति । अन्वगिति क्रियाविशेषणम् अनुपदमित्यर्थः । देवतापितृतिथिसंबन्धिनी क्रिया अर्थः प्रयोजनं यस्याः ताम् । इदं च दिव्याया धेनोः सन्ध्यायां स्वयंगमनोपक्रमे हेतुः श्रद्धासाधर्म्यं च निर्वहति । सा तेन बभौ च । तत्रोत्प्रेक्षामाह — श्रद्धा विधिना उपपन्ना साक्षादिवेति । श्रद्धा अवश्यकर्तव्यताभिसन्धिः । विधिना चोदितकर्मानुष्ठानेन । उपपन्ना युक्ता । साक्षात् प्रत्यक्षीभूयावस्थितेव । सतां मतेन सज्जनानामिष्टेन । अयं साधारणधर्मः ॥

स पल्वलोत्तीर्णवराहयूथा-
न्यावासवृक्षोन्मुखबर्हिणानि ।
ययौ मृगाध्यासितशाड्वलानि
श्यामायमानानि वनानि पश्यन् ॥ १७ ॥

**प्रका**—स इति ॥ पल्वलेभ्य उच्चैर्देशप्राप्तानि पल्वलोत्तीर्णानि । ते ह्यातपभयात्पल्वलेषु दिवसमतिवाहयन्ति । शाड्वलानीति पाठः । एतानि विशेषणानि श्यामायमानत्वे हेतवः । श्यामायमानानि श्यामवदाचरन्ति । अथवा श्यामानि भवन्ति । 'लोहितादिडाज्भ्यः क्यष्' । पश्यन्नित्यनुवादेन दर्शनानाक्षिप्तत्वं द्योतयति ॥

**पदा**—स इति ॥ सः वनानि पश्यन् ययौ । अत्र पश्यन् ययावित्यनेन तादृशवनदर्शनेऽप्यनाक्षिप्तचित्तत्वं द्योत्यते । पल्वलेभ्य उत्तीर्णानि उच्चैर्देशप्राप्तानि वराहयूथानि येषु । 'पल्वलं चाल्पसरः' इत्यमरः । सूकरा ह्यातपभयात्पल्वलेषु दिवसमतिवाहयन्ति । आवासवृक्षं प्रति उन्मुखा बर्हिणाः शिखण्डिनः येषु । शिखण्डिनो हि दिवसावसानेपून्नतं वृक्षं व्याघ्रादिभयादधिवसन्ति । मृगैरध्यासिताः शाड्वलास्तृणविशेषा येषु । अत एव श्यामायमानानि वराहयूथबर्हिणशाड्वलानां श्यामळिम्ना श्यामवदाचरन्तीत्यर्थः । अथवा श्यामानि भवन्ति । [2]'लोहितादित्वात् क्यष्' । 'वा क्यषः' इत्यात्मनेपदम् । अत्र स्वभावोक्तिः ॥

आपीनभारोद्वहनप्रयत्नाद्-
गृष्टिर्गुरुत्वाद्वपुषो नरेन्द्रः ।

---

1 अत्रोत्प्रेक्षा । 2 लोहितादिडाज्भ्यः क्यष् ।

उभावलंचक्रतुरञ्चिताभ्यां
तपोवनावृत्तिपथं गताभ्याम् ॥ १८ ॥

**प्रका—आपीनेति ॥** आपीनमूधः। गृष्टिः सकृत्प्रसूता। आपीनभारोद्वहनप्रयत्नात् वपुषो गुरुत्वाच्चाञ्चिताभ्यां गताभ्यां गृष्टिर्नरेन्द्रश्चोभौ तपोवनावृत्तिपथमलंचक्रतुः इत्यन्वयः। आवृत्तिपथमिति येन पथा गमनं तेनैव निवृत्तिरिति द्योतयता प्रचारस्वातन्त्र्यमेवानुसंहितम्। अत्र भाविकत्वं स्फुटम्। पूर्वत्र स्वभावोक्तिः ॥

**पदा—आपीनेति ॥** आपीनभारोद्वहनप्रयत्नात् गृष्टिः वपुषः गुरुत्वात् नरेन्द्रश्च उभौ अञ्चिताभ्यां गताभ्यां तपोवनावृत्तिपथम् अलंचक्रतुः। आपीनमूधः। 'ऊधस्तु क्लीवमापीनम्' इत्यमरः। आपीनस्यैव भारस्य उद्वहने यः प्रयत्नः तस्माद्धेतोः। 'गृष्टिः सकृत्प्रसूता स्यात्' इति हलायुधः। अनेनापीनस्य नितरां दुर्वहत्वं द्योत्यते। नरेन्द्रश्चेति चशब्दोऽर्थाद्द्रष्टव्यः। अञ्चिताभ्यां सुन्दराभ्याम्। गताभ्यां गमनाभ्याम्। तपोवनात् प्रत्यावृत्तिः आगमनं तदर्थः पन्थाः तपोवनावृत्तिपथः तम्। 'ऋक्पू' इत्यादिना समासान्तः। अत्र भाविकमलङ्कारः ॥

वसिष्ठधेनोरनुयायिनं त-
मावर्तमानं वनिता वनान्तात्।
पपौ निमेषालसपक्ष्मपङ्क्ति-
रुपोषिताभ्यामिव लोचनाभ्याम् ॥ १९ ॥

**प्रका**—अथ नायिकावृत्तान्तं स्वावसरेऽनुसंदधाति—**वसिष्ठेति ॥** वसिष्ठधेनोरिति धन्यताभिमानं द्योतयति। वनान्तादावर्तमानमिति तत्प्रभावावेदिन्या अपि तस्याः स्त्रीस्वभावप्रवृत्ता या शङ्का तस्याः प्रशमावस्थां द्योतयति। अत एव वनितेत्युक्तम्। वनिताशब्दश्चात्र भार्यापर्यायः। पपाविति दर्शने पानोपचारः। तेन च पानकादिपानसुलभानां ग्लानिश्रमप्रशमप्रमोदादीनां पानकत्वोपचारस्य च ध्वननम्। निमेषेत्यादिनानुभाव उक्तः। निमेषे अलसा अनुद्यमिन्यः पक्ष्मपङ्क्तयो यस्याः। उपोषितः कृतोपवासः। तत्त्वो-

त्प्रेक्षया च औत्सुक्यातिशयो ध्वनितः। अत्र विभावादिसंपत्त्या प्रवासानन्तरः संभोगो दर्शितः[1]। तत्र[2] हि भुजेरभ्यवहारोऽर्थः। यथाह भोजराजः 'तत्र ह्युपोषितैरन्नमिव निर्विश्यते रतिः' इति। अतोऽत्र पानोपोषितत्वयोरारोपः। तस्य[3] च समा समासे संपूर्णत्वम्। तत्र च पपावित्येतदेव द्योतकम्। पानेन हि झटिति पूर्णता भवति। प्रवासानन्तर[4] इति च वृत्तिर्जहत्स्वार्था। न ह्यत्र प्रवासस्य[5] गन्धोऽपि विद्यते। अत एव वनान्तादावर्तमानमिति प्रवासस्य तद्व्यभिचारिणां च ग्लानिशङ्कादैन्यचिन्तादीनां प्रशम उक्तः॥

**पद।** — अथ 'सायं प्रत्युद्व्रजेदपि' इति पूर्वोक्तां नायिकायाः प्रत्युद्गमनावस्थामाह — **वसिष्ठेति**॥ वनिता वसिष्ठधेनोः अनुयायिनं वनान्तात् आवर्तमानं तं लोचनाभ्यां पपौ। वनिता भार्या। लोचनाभ्यां पपाविति दर्शने पानोपचारः। तेन च ग्लानिप्रशमप्राप्त्यादयो ध्वन्यन्ते। तादृशे पाने हेतुमुत्प्रेक्षते — उपोषिताभ्यामिवेति। कृतोपवासाभ्यामिवेत्यर्थः। निमेषे अलसाः अनुद्यमिन्यः पक्ष्मणामक्षिरोम्णां पङ्क्तयो यस्याः॥

पुरस्कृता वर्त्मनि पार्थिवेन
प्रत्युद्गता पार्थिवधर्मपत्न्या।
तदन्तरे सा विरराज धेनु-
र्दिनक्षपामध्यगतेव सन्ध्या ॥ २० ॥

**प्रका** — **पुरस्कृतेति**॥ वर्त्मनि तपोवनप्रवेशमार्ग इत्यर्थः। एतच्च प्रत्युद्गमनेन पुरस्कारेणापि संबध्यते। 'आ तपोवनात् प्रत्युद्व्रजेत्' इत्युक्तत्वात्। तदन्तरे तयोर्मध्ये। सेति उभयोरप्याराधनीयत्वेन एकलक्षीभूतेत्यर्थः। अत्रावसितप्रायस्य दिनस्य आरम्भमाणावस्थायाश्च निशाया मध्यगता तत्समयवर्तिनी परिस्फुटरूपा तदुभयलिङ्गैर्विराजिता येयं सन्ध्या तस्या उपमानत्वेनोपादानादुपमेयभूतायाः स्वयमर्चनीयत्वेन न्यग्भावितराजमिथुनायास्तदन्तरगतायास्तदनुगमनप्रत्युद्गमनविराजिताया धेनोः प्राधान्यं प्रतीयते॥

---

1 वर्णितः। 2 तत्र सम्भोगशब्दे। 3 तस्य भोगस्य। सम्पूर्णत्वमित्यनेन सम्बन्धः। समा समित्युपसर्गेण सह। समासे भोगशब्दस्य योगे। 4 प्रवासानन्तरस्सम्भोग इति स्वपूर्ववाक्यघटकेन प्रवासपदेन शङ्काग्लान्यादिजनकत्वसादृश्याद्व्यवधानं लक्षणीयमित्यर्थः। 5 प्रवासस्य प्रवासपदलक्षितस्य व्यवधानस्य।

**पदा**---**पुरस्कृतेति** ॥ वर्त्मनि पार्थिवेन पुरस्कृता पार्थिवधर्मपत्न्या प्रत्युद्गता सा धेनुः तदन्तरे विरराज। वर्त्मनि तपोवनप्रवेशमार्गे। एतच्च पुरस्कारेण प्रत्युद्गमनेनापि संबध्यते। 'आ तपोवनात्' इत्युक्तत्वात्। पुरस्कृता अग्रतः कृता। 'पुरस्कृतः पूजितेऽरात्यभियुक्तेऽग्रतः कृते' इति सिंहः। तदन्तरे तयोर्मध्ये। दिनक्षपामध्यगता सन्ध्या इवेति। तदानीं गतप्रायस्य दिनस्य प्रत्यासन्नप्रायाया रजन्याश्च मध्ये यथा सन्ध्या शुशुभे तथेत्युपमा। अनेन धेनोः प्राधान्यं प्रतीयते ॥

**प्रदक्षिणीकृत्य पयस्विनीं तां**
**सुदक्षिणा साक्षतपात्रहस्ता।**
**प्रणम्य चानर्च विशालमस्याः**
**शृङ्गान्तरं द्वारमिवार्थसिद्धेः** ॥ २१ ॥

**प्रका**—अथ गोष्ठगतायां प्रतिपत्तिमाह—**प्रदक्षिणीकृत्येति** ॥ पयस्विनीम्। प्रशंसायां मत्वर्थीयः। एतच्च तत्पयसो वक्ष्यमाणपुत्रलाभसाधनत्वाभिप्रायम्। साक्षतपात्रहस्तेति अक्षतानां अर्चाशेषत्वं[1] वाक्यात्। 'अथ स्यादक्षतं क्लीबलिङ्गकम्। धान्येऽपि तण्डुलेऽथ क्लीस्त्रियोर्लाजेषु ना यवे' इति केशवः। तत्राचारादक्षतानि तण्डुलानि गृह्यन्ते। तानि च गन्धमाल्याद्युपलक्षणम्। आनर्च अक्षतादिकमदत्तेत्यर्थः। विशालमिति प्रशस्तलक्षणत्वम्। शृङ्गान्तरं 'सर्वस्य गात्रस्य शिरः प्रधानम्' इति। अर्थसिद्धेः पुत्रलभस्य। द्वारमिवेत्युत्प्रेक्षाया निमित्तमर्चनम्। यथा देवतादिभवनेषु प्रविशद्भिर्द्वाराण्यर्च्यन्ते तथेति। फलं चोपेयार्थस्यासन्नताप्रतीतिः। संस्थानसादृश्यं च प्रतीयते निमित्तम् ॥

**पदा**—अथ गोष्ठगतायां धेनौ देव्याः प्रवृत्तिमाह—**प्रदक्षिणीकृत्येति** ॥ सुदक्षिणा तां पयस्विनीं प्रदक्षिणीकृत्य प्रणम्य च अस्याः शृङ्गान्तरम् आनर्च। पयस्विनीं धेनुम्। प्रशंसार्थेन मत्वर्थीयेन तत्पयसो वक्ष्यमाणपुत्रलाभसाधनत्वं ध्वनितम्। शृङ्गान्तरं शृङ्गयोर्मध्यभागम्। सर्वगात्रेषु शिरसः प्राधान्यात्तस्यार्चनीयत्वम्। शृङ्गान्तरस्य विशालत्वं प्रशस्तपशुलक्षणम्। अर्थसिद्धेर्द्वारमिव। अपेक्षितपुत्रसिद्धेर्विवरमिव। अत्रोत्प्रेक्षा ॥

---

1 अर्चनाशेषत्वम्।

वत्सोत्सुकापि स्तिमिता सपर्यां
प्रत्यग्रहीत्सेति ननन्दतुस्तौ ।
भक्त्योपपन्नेषु हि तद्विधानां
प्रसादचिह्नानि पुरःफलानि ॥ २२ ॥

**प्रका**—वत्सेति ॥ एतच्च तद्भक्त्यवगमपूर्विकां विस्मयादरावधानपरिष्कृतां प्रसादापरपर्यायां प्रीतिं द्योतयति । विरोधिवत्सौत्सुक्यसन्निधावपि स्तैमित्यस्यानुभावस्याम्लानत्वात् प्रीतेः प्रीत्यन्तरन्यग्भावकत्वात् परिपोषो दर्शितः । ननन्दतुः कृतकृत्यताभिमानेन । एतत्समर्थयति – भक्त्येति । उपपन्नेषु युक्तेषु । वैषयिकी सप्तमी । प्रसादस्य चिह्नानि स्तैमित्यादयः । पुरःफलानि पुरस्कृतफलानि । फलेन सहाविर्भवन्तीत्यर्थः । तथा च शाकुन्तले –'तव प्रसादस्य पुरस्तु संपदः' इति ॥

**पदा**—वत्सेति ॥ सा वत्सोत्सुका अपि स्तिमिता सपर्यां प्रत्यग्रहीत् इति तौ ननन्दतुः । स्तिमिता निश्चला । सपर्यां पूजाम् । इतिशब्दो हेतौ । चिरादागमने हि वत्सोत्सुकत्वमधिकं भवति । तथापि वत्समनादृत्य पूजाग्रहणतत्परत्वं तद्भक्त्यवगमपूर्विकां प्रीतिं द्योतयति । ननन्दतुः कृतकृत्यत्वाभिमानादिति भावः । तद्विधानां भक्त्या उपपन्नेषु प्रसादचिह्नानि पुरःफलानि हि । तद्विधानां धेनुसदृशानाम् । उपपन्नेषु युक्तेषु । विषयसप्तमी चेयम् । प्रसादस्य चिह्नानि लक्षणानि स्तिमितत्वादीनि । पुरःफलानीत्येकं पदम् । पुरः पूर्वमेव फलं येषाम् । पुरस्कृतफलानीत्यर्थः । 'तव प्रसादस्य पुरस्तु संपदः' इति शाकुन्तलोक्तः प्रकारोऽनेन दर्शितः ॥

गुरोः सदारस्य निपीड्य पादौ
समाप्य सान्ध्यं च विधिं दिलीपः ।
दोहावसाने पुनरेव दोग्ध्रीं
भेजे भुजोच्छिन्नरिपुर्निषण्णाम् ॥ २३ ॥

**प्रका**—गुरोरिति ॥ निपीड्योपसंगृह्य । सदारस्येति सामर्थ्याद्दारपादपीडनं गम्यते । ल्यबन्ताभ्यामुचितापरिहाणमुक्तम् । अनुवादरूपत्वात्तलाविश्रान्तिश्च प्रतीयते । दोहावसाने निषण्णामिति निषदनस्योचितसमय-

भावित्वम्। पुनरिति सेवायाः प्रकृतत्वं द्योतयति। दोग्ध्रीमेवेति सेवावधानम्। भुजोच्छिन्नरिपुः तस्यैवंविधा धेनुपरिचर्या कं नोत्कर्षमावहेदिति भावः। निषण्णामिति सेवाया उचितावसरत्वं द्योतयति॥

पदा—गुरोरिति॥ दिलीपः सदारस्य गुरोः पादौ निपीडय सान्ध्यं विधिं समाप्य च दोहावसाने पुनः निषण्णां दोग्ध्रीमेव भेजे। पादनिपीडनमभिवादनम्। सदारस्येत्यनेन दारपादपीडनमपि गम्यते। सान्ध्यं सन्ध्याकालभवम्। दोग्ध्रीं धेनुम्। निर्वचनं तु कर्मकर्तृत्वविवक्षया। 'स्वयं प्रदुग्धेऽस्य गुणैरुपस्नुता वसूपमानस्य वसूनि मेदिनी' इति भारविः। तत्कालोचितं कर्म समाप्य प्रकृतं धेनुपरिचरणमेव पुनश्चकारेत्यर्थः। भुजाभ्यामेवोच्छिन्ना उन्मूलिता रिपवो येन। अनेन 'सेना परिच्छदस्तस्य' इत्युक्तमनुसंहितम्। तादृशस्यैवंविधधेनुपरिचर्या कं नोत्कर्षमुत्पादयेदिति भावः॥

तामन्तिकन्यस्तबलिप्रदीपा-
मन्वास्य गोप्ता गृहिणीसहायः।
क्रमेण सुप्तामनुसंविवेश
सुप्तोत्थितां प्रातरनूदतिष्ठत् ॥ २४ ॥

प्रका—तामिति॥ अन्वास्य चरममुपविश्य। क्रमेण अनन्तरम्। अनुसंविवेश पश्चात्सुष्वाप। अथवा क्रमेण पर्यायेण। धेनुरक्षणे जागरं स्वापं च राजा राज्ञी च पर्यायेण चक्रतुरित्यर्थः। अत्र लिङ्गं 'गृहिणीसहायो गोप्ते'ति वचनम्। सुप्तोत्थितामिति पुनरपि स्वापानुवादेन मशकादिनिवारणात् तस्याः सुखस्वापः ताभ्यां निर्वर्तित इति द्योत्यते। अत एव प्रातरिति तत्पर्यन्ततापि स्वापस्य॥

पदा—तामिति॥ गोप्ता गृहिणीसहायः तामन्वास्य क्रमेण सुप्ताम् अनुसंविवेश। अन्वास्य पश्चादासित्वा। 'निषण्णाम्' इति पूर्वश्लोकेनोक्तत्वादासीनामन्वास्येति नोक्तम्। क्रमेण अनन्तरमित्यर्थः। अनुसंविवेश पश्चात् सुष्वाप। निषदनानन्तरं सुप्तां ताम् अनुसंविवेशेत्यर्थः। अथवा अस्य गोप्तृत्वे गृहिणीसहायत्वमुक्तम्। क्रमेण पर्यायेणेत्यर्थः। धेनुरक्षणे जागरणं, स्वप्नं च राजा राज्ञी च पर्यायेण चक्रतुरित्यर्थः। प्रातः सुप्तोत्थितां ताम् अनूदतिष्ठत्।

ताभ्यां मशकादिनिवारणस्य कृतत्वात् प्रभातपर्यन्तं सुखेन सुप्ताम् आनन्तरमुत्थितां च तामनूदतिष्ठत पश्चादुत्थितवान् ॥

इत्थं व्रतं धारयतः प्रजार्थं
समं महिष्या महनीयकीर्तेः ।
तस्य[1] व्यतीयुस्त्रिगुणानि सप्त
दिनानि दीनोद्धरणोचितस्य ॥ २५ ॥

प्रका---अथेत्थंभूतामहोरात्रचर्यामहोरात्रान्तरेष्वतिदिशन् व्रतावधिं दर्शयितुमुपक्रमते---इत्थमिति ॥ धारयतः अवस्थापयतः । न तु गमयतः । अनेनानिर्वेदः । अत एव 'इङ्धार्योः शत्रकृच्छ्रिणि' इत्यकृच्छ्रार्थे शतृप्रत्ययः । प्रजार्थमिति । अनन्यसाधनसाधारणसाध्यसाधकमित्यर्थः । समं सह । अथवा तुल्यम् । तादृश्यो हि कुलपालिकाः पुण्यकृत्येष्वास्तिक्यादनुकल्पस्पर्शं[2] न सहन्ते । तथेयमपीत्यर्थः । अथवा यथायं धैर्यादखिन्न एव व्रतं धारितवान्, तथेयमपि अतिसुकुमारापीति । तदुक्तम् "ध्रुवं वपुः काञ्चनपद्मधर्मि यन्मृदु प्रकृत्यापि ससारमेव तत्' इति । महनीयकीर्तेः महनीया कीर्तिः पुण्यकर्मप्रथा यस्य । स कथमेवं न कुर्यादिति भावः । त्रिगुणानि सप्तेति व्रतशेषः संख्याविशेषः । व्रतानां हि भूयसा[3] सप्तरात्रावधित्वं श्रूयते । तदवधि च व्रतं त्रिरावृतम् । अयमभिप्रायः---गोप्रसादनफलं हि व्रतम् । तच्च सप्तरात्रावधित्वेन प्रथममङ्गीकृतम् । तदधिकावधित्वे तु यदि फलमचिरकालभावि, तदा तदूर्ध्वमपि व्रतस्य नियतकालोपसंहरणीयत्वात् परिपालनविळम्बो माभूदिति तदवधित्वेन व्रतारम्भः । ततस्तावति फलादर्शनात् पुनस्तदवधि व्रतं धारितम् । ततस्तृतीयमपि तथाभावादेव प्रवृत्तमिति । अत एव त्रिगुणानीत्युक्तम् । तिस्रः आवृत्तयो येषां तानि तथा । व्यतीयुः । न त्वसःवत्यवाहयत् । अनेन व्रताभिरतस्य कालापरिगणनं द्योत्यते । दीनोद्धरणम् उचितं स्वभावो यस्य । अथवा तत्र योग्यः । "उचितं तु स्वभावे क्ली निश्चिताभ्यस्तयोः पुनः । त्रियुक्तेऽनुमिते चापि प्रोक्तवान् शाकटायनः ॥ योग्ये चिरानुयाते च" इति केशवः । 'अनेन मयि नियमव्यग्रे सति प्रजानामापदः संभविन्यः कथं सचिवैः प्रतिविधी-

1 सप्त व्यतीयुस्त्रिगुणानि तस्य । 2 स्पर्शनं । 3 सर्वेषां ।

यन्ते' इति चिन्तैव केवलमस्थायासकरीति ध्वन्यते । इयत्पर्यन्तं प्रतिमुखसन्धिः। प्रयत्नानुगमश्चात्र स्पष्टः । "लक्ष्यालक्ष्यतयोद्भेदस्तस्य प्रतिमुखं भवेत्" इति ॥

पदा—इत्थंभूतामहोरात्रचर्याम् अहोरात्रान्तरेष्वप्यतिदिशन् व्रतावधि दर्शयितुमुपक्रमते—**इत्थमिति** ॥ महिष्या समं प्रजार्थम् इत्थं व्रतं धारयतः तस्य सप्त दिनानि त्रिगुणानि व्यतीयुः । प्रजैवार्थः प्रयोजनं यस्य । धारयतः अनायासेन दधतः । 'इङ्धार्योश्शत्रकृच्छ्रिणि' इति अकृच्छ्रार्थे शतृप्रत्ययः । त्रयो गुणा आवृत्तयो येषाम् । व्रतानां हि प्रायेण सप्तरात्रावधित्वं प्रसिद्धम् । तत्र फलप्राप्त्यदर्शनात्पुनरपि सप्तरात्रपर्यन्ततया कल्पितं पुनरप्येवमित्येकविंशतिदिनान्यतीतानि । महनीया पूजनीया कीर्तिः पुण्यकर्मप्रथा यस्य । दीनानामुद्धरणं रक्षणम् उचितं स्वभावो यस्य । दीनोद्धरणयोग्यस्येति वा । "उचितं तु स्वभावे क्ली निश्चिताभ्यस्तयोः पुनः । त्रियुक्तेऽनुमिते चाथ प्रोक्तवान् शाकटायनः ॥ योग्ये चिरानुयाते च" इति केशवः ॥

**अन्येद्युरात्मानुचरस्य भावं**
**जिज्ञासमाना मुनिहोमधेनुः ।**
**गङ्गाप्रपातान्तविरूढशष्पं**
**गौरीगुरोर्गह्वरमाविवेश ॥ २६ ॥**

**प्रका—अन्येद्युरिति** ॥ अन्येद्युरित्यव्ययम् । पाश्चात्यानन्तरदिने । द्वाविंशे दिन इत्यर्थः । आत्मानुचरस्येत्यनुग्राह्यत्वमुक्तम् । भावमिति चर्यायाः प्रत्यक्षत्वात् । जिज्ञासमाना परीक्षितुमिच्छन्ती । परीक्षा च लोके तद्गुणप्रख्यापनाय भवन्ती प्रकृष्टफलदित्सयानुग्रहरूपा । एतच्च गह्वरप्रवेशोपक्रमस्य प्रकरणस्य परीक्षाङ्गतानयनेन घटकम्[1] । अत एव केचित्प्रकरणघटनेति व्यपदिशन्ति । अत एव प्रकरणान्ते परीक्षितोऽसीति निगमनम् । मुनिसंबन्धेन मननौचित्यं दर्शितम् । प्रपतत्यस्मिन्निति प्रपातः तस्यान्ते समीपे विशेषेण रूढानि शष्पाणि बालतृणानि यत्र । गौरीगुरोर्हिमवतः गह्वरं गुहाम् । तेन यद्यपि गुहा सिंहप्रतिवसनोचिता, तथापि रक्षणीयदेवदारुसन्निकर्षानौचित्यात् गोप्रवेशासंभवाच्च अद्रिकुक्षिर्लक्ष्यते । वक्ष्यति च 'अद्रिकुक्षा'विति । एतच्च दिव्यकेसरिवृत्तान्तसंभावनाभिप्रायम् ॥

---

1 प्रकरणपरीक्षाङ्गतया घटनम् ।

**पदा—अन्येद्युरिति ॥** मुनिहोमधेनुः अन्येद्युः गौरीगुरोर्गह्वरमाविवेश । अन्येद्युरिति अपरदिनवाचकमव्ययम् । 'सद्यःपरुत्' इत्यादिना निपातः । द्वाविंशतिदिन इति यावत् । गौरीगुरोः हिमवतः । गह्वरं गुहाम् । आत्मानुचरस्य भावं जिज्ञासमाना । आत्मानुचरस्येत्यनुग्राह्यत्वनिश्चय उक्तः । भावम् अभिप्रायम् । 'आकूतं भावोऽभिप्राय आशयः' इति यादवः । जिज्ञासमाना परीक्षितुमिच्छन्ती । परिचर्यायाः प्रत्यक्षत्वात् अप्रत्यक्षभावस्य परीक्ष्यत्वम् । परीक्षा च लोके तद्गुणख्यापनाय प्रकृष्टफलदानाय च दृष्टा । यथा कुमारसंभवे वटुरूपधारिणः परमेश्वरस्य [इति] साप्यानुग्रहरूपैव । गङ्गायाः प्रपातः प्रपतनस्थानम् । प्रपतत्यस्मिन्निति व्युत्पत्तिः । तस्यान्ते समीपे विशेषेण रूढानि शष्पाणि बालतृणानि यत्र । "शष्पं बालतृणम्" इत्यमरः ॥

सा दुष्प्रधर्षा मनसापि हिंस्रै-
रित्यद्रिशोभाप्रहितेक्षणेन ।
अलक्षिताभ्युत्पतनो नृपेण
प्रसह्य सिंहः किल तां चकर्ष ॥ २७ ॥

**प्रका— सेति ॥** मनसापि । न केवलं बाह्यकरणैः । हिंस्रैः हिंसाशीलैः । इतिः प्रकारे हेतौ च मननगर्भः । एवंभूतान्मननादित्यर्थः । अद्रिशोभायां प्रहितं न तु तदाक्षिप्तम् ईक्षणं न तु चित्तं यस्य । अनेनानवधानं दूरीकरोति । अलक्षिताभ्युत्पतन इति मयान्यत्र व्यग्रेण कथमेतन्न लक्षितमिति नृपबुध्यनुसारः । प्रसह्याभिभूय । किलेत्यपरमार्थे । अनेनानुसंधातॄणां धेनुप्रभावप्रतिपादकेषु वाक्येषु हृदयसंवादशैथिल्यं निराकरोति ॥

**पदा—सेति ॥** सिंहः प्रसह्य तां चकर्ष किल । प्रसह्य अभिभूय । बलात्कारेणेत्यर्थः । 'प्रसह्य तु हठार्थकम्, इत्यमरः । किलेत्यपरमार्थे । मायया राज्ञस्तदानीं तथा प्रतीतिर्जातेति भावः । अत एव नृपेण अलक्षिताभ्युत्पतनः अलक्षितम् अभिमुखीकृत्योत्पतनं यस्य । हेत्वन्तरमपि तदानीं तत्प्रभावात्किञ्चिज्जातमित्याह—सेत्यादिना । सा हिंस्रैर्मनसापि दुष्प्रधर्षेत्यद्रिशोभाप्रहितेक्षणेनेति । हिंस्रैः हिंसाशीलैः । मनसा अन्तःकरणेनापि । किं

1 तिपत्ति ।

पुनर्बाह्यकरणैरिति भावः । दुष्प्रधर्षा दुरभिभवा । इतिशब्दो हेतौ । 'इतिः प्रकारे हेतौ च' इति निघण्टुः । एवंभूतान्मननादित्यर्थः । अद्रेः शोभायां प्रहिते प्रेरिते ईक्षणे येन । ईक्षणमात्रमेव प्रेरितं न तु चित्तमपि । ईक्षणमपि नाद्रिशोभयाक्षिप्तम् । किन्तु तत्र प्रेरितमेव । तदानीमपि गोरक्षणसावधानत्वं न परित्यक्तमिति भावः ॥

तदीयमाक्रन्दितमार्तसाधो-
गुहानिबद्धप्रतिशब्ददीर्घम् ।
रश्मिष्विवादाय नगेन्द्रसक्तां
निवर्तयामास नृपस्य दृष्टिम् ॥ २८ ॥

**प्रका—तदीयमिति ॥** आक्रन्दितं क्रन्दनम् । शब्दशक्त्या च तत्क्रन्दनम् आह्वानमिवासीदित्युपमाध्वनिः । आर्तेषु साधोर्हितकारिणः । गुहासु निबद्धेन विरचितेन प्रतिशब्देन दीर्घम् । अत्र तदीयत्वेनादरः गुहानिबद्धप्रतिशब्दत्वेन पाटवं दीर्घत्वेनाभ्यासश्च तद्विषयज्ञानस्य प्रतीयते । रश्मिषु प्रग्रहेषु । समुदायस्यैव कर्मत्वविवक्षया रश्मीनामादानं प्रति न कर्मत्वम्[1] । आदायेवेति । यथा प्रग्रहेष्वायम्य जवी तुरङ्गो बलात् झटिति निवर्त्यते, तथा निवर्तनं द्योत्यते । नगेन्द्रसक्तामिति बलात्कारे हेतुः । दृष्टिं निवर्तयामास । न तु तथा प्रसारितदृष्टेरेव किमिदमिति वितर्को जातः । अपि त्वावेगापरपर्यायः सम्भ्रमः । यस्यानुभावः तथा दृष्टिनिवृत्तिः । तथाविधमाक्रन्दितं च विभावः । दृष्टिश्चक्षुरिन्द्रियम् । रश्मिशब्दस्य नयनकिरणवाचकत्वे तु चक्षुर्गोळस्य वा, दर्शनस्य वा, नगेन्द्रसक्तत्वासम्भवे दृष्टिशब्दस्य वाच्यमन्यदेषितव्यम् । बुध्यर्थत्वमपि न सुघटम्, मनस एव लोचनानुसारित्वात् । प्रहितेक्षणेनेत्युक्तम् । ईक्षणार्थश्चाननुसंहितः स्यात् ॥

**पदा—तदीयमिति ॥** तदीयम् आक्रन्दितं नृपस्य नगेन्द्रसक्तां दृष्टिं निवर्तयामास । आक्रन्दितं रोदनम् । अत्र शब्दशक्त्या तस्याः क्रन्दनमाह्वानमिवासीदित्युपमाध्वनिः । ससम्भ्रमं दृष्टिं निवर्तितवानित्यर्थः । अत्रोपमामाह—रश्मिषु आदाय इवेति । रश्मिषु प्रग्रहेषु । आदानमत्र

1 रश्मितुरगघटितसमुदायस्येत्यर्थः ।

कर्षणपर्यन्तम् ॥ यथा जवी तुरगो रश्मिषु निबिडं गृहीत्वा निवर्त्यते तथेत्यर्थः । आर्तेषु साधोः हितकारिणः । गुहासु निबद्धेन प्रतिशब्देन दीर्घम् । अत्र गुहासु प्रतिशब्दोत्पत्त्याक्रन्दनस्यातिमहत्त्वं द्योत्यते । दीर्घत्वं चात्र प्रातिभासिकम् ॥

स पाटलायां गवि तस्थिवांसं
धनुर्धरः केसरिणं ददर्श ।
अधित्यकायामिव धातुमत्यां
लोध्रद्रुमं[1] सानुमतः प्रफुल्लम् ॥ २९ ॥

**प्रका—स इति ॥** धनुर्धरः एकधनुर्धर इत्यर्थः । यथा विवादः [पार्थ एवायं] 'पार्थ एव धनुर्धर' इति । धनुर्धरत्वमालम्ब्य प्रकरणसिद्धत्वेन अनुपयोगबाधितत्वात् । एतच्च स्वाग्रतः स्वरक्षणीयविपत्तिः तथाविधस्य तस्य न कदाचिदाशङ्कितपूर्वेति तस्या विस्मयविभावतां द्योतयति । अधित्यका अग्रभूमिः । 'उपाधिभ्यां त्यकन्नासन्नारूढयोः' इति त्यकन्प्रत्ययः । धातुमद्याम् इति वा पाठः । धातुर्गैरिकम् । प्रफुल्लं विकसितपुष्पमित्यर्थः । लोध्रकेसरिणोर्धावल्यं सामान्यं उपमया[2] च आभोगवत्त्वं निराकुलस्थितिश्च व्यज्यते ॥

**पदा—स इति ॥** सः गवि तस्थिवांसं केसरिणं ददर्श । केसरिणं सिंहम् । पाटलायां रक्तवर्णायाम् । सानुमतः धातुमत्याम् अधित्यकायां प्रफुल्लं लोध्रद्रुममिव । सानुमतः पर्वतस्य । अधित्यकायाम् अग्रभूमौ । उपाधिभ्यां त्यकन्नासन्नारूढयोः' इति त्यकन्प्रत्ययः । 'उपत्यकाद्रेरासन्ना भूमिरूर्ध्वमधित्यका' इत्यमरः । [3]धातुर्मनःशिलाद्यद्रेः' इति सिंहः । 'ञिफला विशरणे, इत्यस्मात् कर्तरि निष्ठायां 'ति च' इत्यकारस्योकारे सति प्रफुल्लशब्दसिद्धिः । पुष्पविकासद्वारा द्रुमेष्वपि लक्षणयायं प्रयोगः । विकसितकुसुममित्यर्थः । लोध्रद्रुमो नाम धवळपुष्पो वृक्षविशेषः । तमिव । अत्र धेनुसानुमतो रक्तवर्णत्वं साधारणधर्मः । लोध्रकेसरिणोर्धावळ्यम् । आभोगवत्त्वं निराकुलत्वं च उपमया व्यज्यते । धनुर्धरः एकधनुर्धर इत्यर्थः । 'पार्थ एव धनुर्धर' इतिवत् ॥

---

1 ल्ल । 2 मयां । 3 एतत्पूर्वं, धातुर्मनःशिला तद्वत्याम् इत्यधिकं क्वचित् ।

ततो मृगेन्द्रस्य मृगेन्द्रगामी
वधाय वध्यस्य शरं शरण्यः ।
जाताभिषङ्गो नृपतिर्निषङ्गा-
दुद्धर्तुमैच्छत्प्रसभोद्धृतारिः ॥ ३० ॥

**प्रका—तत इति** ॥ ततो हेतोः । अथवा दर्शनानन्तरम् । अनेन क्षिप्रकारित्वरूपं दक्षत्वमुक्तम् । मृगेन्द्रस्य हिंस्रतया संप्रतिपन्नस्य । अत्रेन्द्रशब्दमसहमान इवेति ध्वन्यते । वक्ष्यते च 'नूनं तेषामभ्यसूयापरोऽभूद्वीर्योदग्रे राजशब्दे मृगाणाम्' इति । वध्यस्य न केवलं हिंस्रतया, प्रत्यक्षापकारितयापीत्यर्थः । मृगेन्द्रगामीति सत्त्वजो विलासगुण उक्तः, 'गतिः सधैर्या दृष्टिश्च[1] विलासे सस्मितं वचः' इति लक्षितः । अनेन सत्त्वोत्तरत्वादविषादः प्रतीयते । शरण्यः शरणं भवितुमर्हः । अनेनापद्यभिगतः सन्नपि यो रक्षितुमर्हः, स कथं रक्षणीयत्वेनाङ्गीकृतां धेनुं न रक्षेदिति ध्वन्यते । जाताभिषङ्गः इदंप्रथमतया जातः न तु सोढोऽभिषङ्गोऽभिभवो यस्य । स कथमेतन्मर्षयेदिति भावः । 'अभिषङ्गस्त्वभिभवे सङ्ग आक्रोशनेऽपि च' इति यादवः । निषङ्गात् तूणीरात् । ऐच्छदित्युपक्रमो लक्ष्यते । इच्छामात्रस्यानुपयोगात् । असाधकत्वं तु द्योत्यम् । उत्तरश्लोके च प्रतिष्टम्भोऽभिधास्यते । प्रसभेन बलात्कारेण उद्धृता उन्मूलिता अरयो येन । स कथमुपायान्तरपरामर्शव्यवधानं कुर्वीतेति भावः ॥

**पदा—तत इति** ॥ ततः नृपतिः मृगेन्द्रस्य वधाय निषङ्गात् शरमुद्धर्तुम् ऐच्छत् । ततः दर्शनानन्तरमेव । अनेन क्षिप्रकारित्वमुक्तम् । निषङ्गात् तूणीरात् । ऐच्छदित्यनेन उद्धरणारम्भो लक्ष्यते । इच्छामात्रस्यानुपयोगात् । आरम्भस्य निष्फलत्वप्रतीतिः फलम् । मृगेन्द्र इव गन्तुं शीलमस्येति तथा । शरण्यः शरणं भवितुमर्हः । आपदि शरणप्राप्तस्य रक्षणे समर्थः । जातः अभिषङ्गः पराभवः यस्य । 'अभिषङ्गस्त्वभिभवे सङ्ग आक्रोशनेऽपि च' इति यादवः । प्रसभेन बलात्कारेण उद्धृता उन्मूलिता अरयो येन ॥

वामेतरस्तस्य करः प्रहर्तु-
र्नखप्रभाभूषितकङ्कपत्रे ।
सक्ताङ्गुलिः सायकपुङ्ख एव
चित्रार्पितारम्भ इवावतस्थे ॥ ३१ ॥

1 वृत्ति ।

**प्रका**—वामेतर इति ॥ प्रहर्तुः क्वचिदप्यस्खलितसंप्रहारकर्तृत्वस्येत्यर्थः। नखप्रभारूषितं कङ्कस्य पक्षिणः पत्रं वाजतामुपगतं यत्र। सक्ताङ्गुलिरेवेत्ययोगं व्यवच्छिनत्ति। यथा चित्रार्पितारम्भः तद्व्यतिरिक्तक्रियोपहितो न लक्ष्यते, तथायमपीति। उपमाविवक्षायां तु चित्रार्पित इवेत्येव भवेत्। आरम्भस्य गतार्थत्वात्। नखप्रभारूषितत्वमपि सादृश्यनिर्वाहकम्, कुशलशिल्पिविरचितेषु चित्रेष्वपि तथा दृश्यत्वात् ॥

**पदा**—वामेतर इति ॥ प्रहर्तुस्तस्य वामेतरः करः सायकपुङ्खे सक्ताङ्गुलिरेवावतस्थे। प्रहर्तुः इतः पूर्वं कदाचिदप्यस्खलितप्रहरणस्येत्यर्थः। वामेतरः दक्षिणः। अत्रोत्प्रेक्षामाह—चित्रार्पितारम्भ इवेति। चित्रे अर्पितः न्यस्तः आरभो व्यापारो यस्य। नखानां प्रभया रूषितं कङ्कस्य पक्षिविशेषस्य पत्रं वाजतामुपगतं यत्र। एतदपि सादृश्यनिर्वाहकम्। कुशलशिल्पिविरचितेषु चित्रेषु तथात्वोपपत्तेः ॥

बाहुप्रतिष्टम्भविवृद्धमन्यु-
रभ्यर्णमागस्कृतमस्पृशद्भिः।
राजा स्वतेजोभिरदह्यतान्त-
र्भोगीव मन्त्रेण[1] निरुद्धवीर्यः ॥ ३२ ॥

**प्रका**—बाह्विति। 'स्तन्भेः' इति मूर्धन्यस्य। बाह्वोः प्रतिष्टम्भः प्रतिबन्धः तेन विवृद्धः उद्दीपितो मन्युः क्रोधो यस्य। अस्पृशद्भिः अविषयीकुर्वद्भिः। स्वस्य तेजोभिः तेजस्सहचरितैरधृष्यगुणैरित्यर्थः। 'अधिक्षेपाद्यसहनं तेजः प्राणात्ययेऽपि च' इति। अदह्यतेति मनआरम्भानुभावेन क्रोधव्यभिचारिणामभिव्यक्तिः। आगस्कृतमितीर्ष्याविभावः। ईर्ष्यया निर्वेदः स्वावमानितात्मा[2]। एवमन्येऽपि। अन्तरिति सत्त्वजं गाम्भीर्यमुक्तम्। 'गाम्भीर्यं यत्प्रभावेन विकारो नोपलक्ष्यते' इति। मन्त्रेणाचिन्त्यानुभावेनेत्यर्थः। भोगीति। अप्रतिबन्धो दग्धुं क्षमः। तेजोवीर्ययोर्बिम्बप्रतिबिम्बता ॥

**पदा**—बाह्विति ॥ राजा स्वतेजोभिः अन्तः अदह्यत। स्वस्यैव तेजोभिः कर्तृभिः। अन्तः अदह्यत दग्धोऽभूत्। 'अधिक्षेपाद्यसहनं तेजः प्राणात्य-

---

1 मन्त्रौषधि। 2 स्वावमानतात्मा ॥

येष्वपि' इति तेजोलक्षणम्. अन्तरित्यनेन सत्त्वजं गाम्भीर्यमुक्तम्। यथाहुः— 'गाम्भीर्यं यत्प्रभावेन विकारो नोपलक्ष्यते' इति। बाह्वोः प्रतिष्टम्भेन प्रतिबन्धेन। 'स्तन्भेः' इति मूर्धन्यादेशः। विवृद्धो विशेषेण वृद्धिं प्राप्तो मन्युः क्रोधो यस्य। धेनुकर्षणसंजातो मन्युः करप्रतिबन्धेनास्य विशेषतो वृद्धोऽभूदिति भावः। अलोपमामाह — मन्त्रेण निरुद्धवीर्यो भोगीवेति। अचिन्त्यानुभावेन मन्त्रेण निरुद्धं वीर्यं यस्य। यथा सर्पः प्रतिबन्धाभावेऽपकारिणं सहसैव दग्धुं क्षमः, तथायमपीत्यर्थः। अभ्यर्णम् आगस्कृतम् अस्पृशद्भिः। अभ्यर्णं समीपस्थम्। अनेन कोपाधिक्यं ध्वन्यते। आगस्कृतं अपकारिणम्। अस्पृशद्भिः अविषयीकुर्वद्भिः ॥

तमार्यगृह्यं निगृहीतधेनु-
र्मनुष्यवाचा मनुवंशकेतुम्।
विस्माययन्विस्मितमात्मवृत्तौ
सिंहोरुसत्त्वं निजगाद सिंहः ॥ ३३ ॥

**प्रका—तमार्येति ॥** गृह्यं पक्ष्यम्। पदास्वैरिबाह्यापक्ष्येषु च' इति क्यप्। एतच्च परमेश्वराज्ञानुवृत्तिपरेषु[1] क्रोधोऽनुचित इति क्रोधप्रशमहेतुत्वं वक्ष्यमाणवाक्यस्याभिप्रेत्योपात्तम्[2]। निगृहीतधेनुरिति प्रागल्भ्यद्योतकेन आत्मवृत्ताविति निर्दिश्यमानां वृत्तिं विवृणोति। एतच्चोपलक्षणं बाहुस्तम्भनस्यापि। अत एव वृत्ताविति सामान्येन निर्देशः। मनुवंशकेतुमिति तदुक्तौ बहुमानगर्भत्वं द्योतयति। विस्मापयन्नित्यपपाठः। मनुष्यवाचेति करणतो विस्मयकथनात्। अत प्रयोजककर्तृरूपाद्धेतोः विस्मयो न संभवति। तत्संभवे हि 'नित्यं स्मयतेः' इत्यात्वं पुगागमश्च भवतः। न च मनुष्यवाचा निजगादेति, सिंहः स्वयं विस्मापयन्निति चान्वये प्रयोजकादेव विस्मयो भवति, तदानीमात्वं पुगागमश्च भवति इति वाच्यम्, तदानीं 'भीस्म्योर्हेतुभये' इत्यात्मनेपदप्रसङ्गात्। तस्माद्विस्माययन्निति पाठः। यथ 'रूपेण विस्माययति' इति। विस्मयश्चायमामुख एवेत्यनुसंधेयम्, दिव्यताप्रतिपत्तौ तन्निवृत्तेः। विस्मितमिति। कथमयं तिर्यङ् दिव्यां धेनुं निगृहीतवानिति, कथं च मे बाहुस्तम्भनं कृतवानिति च प्रागेव[3] राजानं विस्मितमित्यर्थः। सिंहोरुसत्त्वमिति। तदीयसत्त्वोत्कर्षदर्शनेन सिंहस्यापि विस्मयावेशो ध्वन्यते ॥

1 पराज्ञा। 2 ग्योक्तम्। 3 प्रागेवेत्यादि अर्थ इत्यन्तं क्वचिन्नास्ति।

**पदा—तमिति ॥** सिंहः तं निजगाद। आर्यगृह्यं आर्यपक्ष्यम्। 'पदाखैरिवाह्यापक्ष्येषु' च इति ग्रहेः क्यप्। सज्जनबन्धुमित्यर्थः। निगृहीता नितरां गृहीता धेनुर्येन। मनुष्यवाचा विस्माययन्। कथं तिर्यग्योनिरयं मनुष्यवाचा वदति इति विस्मयं कुर्वन्नित्यर्थः। मनुवंशकेतुं मनुवंशालङ्कारभूतम्। अनेन वचनस्य बहुमानपूर्वकत्वं सूचितम्। आत्मवृत्तौ विस्मितम् आत्मनो वृत्तौ व्यापारे, कथमयं तिर्यग्योनिः दिव्यां गां जग्राह, कथं च मे बाहुस्तम्भं चक्रे इति पूर्वमेव विस्मितमित्यर्थः। सिंहवदुरुसत्त्वं महापराक्रमम्। अनेन सिंहस्यपि तदीय-सत्त्वोत्कर्षदर्शनेन विस्मयप्राप्तिर्ध्वन्यते ॥

अलं महीपाल तव श्रमेण
प्रयुक्तमप्यस्त्रमितो वृथा स्यात्।
न पादपोन्मूलनशक्ति रंहः
शिलोच्चये मूर्छति मारुतस्य ॥ ३४ ॥

**प्रका—अलमिति ॥** महीपालेति महीमण्डलपालनोपयोगिषु त्वद्गुणेष्वद्यापि का परिहाणिरिति द्योतयति। श्रमेण आयासेन। कुत इत्याह—प्रयुक्तमस्त्रमपीति। न केवलमयमुद्यमः। अथवा प्रयुक्तमपीति। यथा त्वमप्रयुक्तं वृथेति मन्यसे, तथा प्रयुक्तमपीति। पादपोन्मूलने शक्तिर्यस्य तत्तथा। रंहो वेगः। मूर्छति प्रसरति। कार्यकरं भवतीत्यर्थः ॥

**पदा—अलमिति ॥** महीपाल तव श्रमेण अलम्। महीपाल तव पालनादिना भूमण्डलप्रार्थितेषु गुणेषु कश्चिदपि नानेन हीयत इति भावः। श्रमेण आयासेन। अलं पर्याप्तम्। 'अलं भूषणपर्याप्तिशक्तिवारणवाचकम्' इत्यमरः। तव सायकोद्धरणप्रहरणपरिश्रमो निरर्थक इत्यर्थः। कुत इत्यत्राह – अस्त्रम् इतः प्रयुक्तमपि वृथा स्यादिति। अस्त्रं, न केवलं शरमात्रं, महामन्त्राभिमन्त्रितमस्त्रं चेति भावः। इतः मदभिमुखम्। प्रयुक्तमपि निष्फलमेव स्यात्। उक्तमर्थं प्रतिवस्तुनोपपादयति -- मारुतस्य पादपोन्मूलनशक्ति रंहः शिलोच्चये न मूर्छतीति। पादपानामुन्मूलने शक्तिर्यस्य। रंहो वेगः। 'रंहस्तरसी तु रय स्यदः' इत्यमरः। शिलोच्चये शैले। न मूर्छति न प्रसरति। तत्र स्वकार्यं न करोतीत्यर्थः ॥

कैलासगौरं वृषमारुरुक्षोः
पादार्पणानुग्रहपूतपृष्ठम् ।
अवेहि मां किंकरमष्टमूर्तेः
कुम्भोदरं नाम निकुम्भतुल्यम्[1] ॥ ३५ ॥

**प्रका**—कस्तवायमनुभाव इत्याह — **कैलासेति** ॥ कैलासगौरमित्युपमाबलात् उच्छ्रायादिप्रतीतिः । सा च पादार्पणं प्रयोजयति । पादार्पणरूपोऽनुग्रहः प्रसादः तेन पूतपृष्ठम् । अनेनारोहणसौकर्याय भूमिन्यस्तहस्तद्वयावाङ्मुखस्थितिर्द्योत्यते । अवेहीति । न त्वस्मीति । एवंविधेनावगमेन तव विस्मयो व्यपैत्विति भावः । किंकरं कुत्सितकर्मकारिणं भृत्यम् । न तु नन्द्यादिवत्साचिव्याधिकृतम् । अनेनेदृशमेव किंकरत्वं मम स्यात् । यतो देवो यदा वृषमारुरुक्षति, तदा मय्येवायमसाधारणः प्रसादः । परमेश्वरपादविन्यासधन्योऽन्यः कः शरीरीति द्योत्यते । अष्टमूर्तेः चेतनाचेतनवर्गा[2]धिष्ठायिन इत्यर्थः । कुम्भोदरं नाम कुम्भोदर इति प्र[3]सिद्धमित्यर्थः । निकुम्भेन तुल्यं तुल्यप्रभावम् । अनेन "पुरा किल वाराणस्यां चैत्यवृक्षे निकुम्भो नाम गणः प्रतिवसति स्म । तं च वृक्षं काशीराजः कुतोऽपि हेतोः छेदयामास । स कुपितो राजानं सप्रकृतिकं स्वतेजसा ददाह" । इति महाभारतप्रसिद्धमितिहासं दृष्टान्तयन् परमेश्वरानुभावोपबृंहितेषु सर्वपुरुषकारा विफलीभवन्तीति द्योतयति ॥

**पदा**—कस्तव तादृशानुभाव इत्यत्राह —**कैलासेति** ॥ त्वं मामष्टमूर्तेः कुम्भोदरं नाम किंकरमवेहि । अष्टमूर्तेः चेतनाचेतनव्यापिनः परमेश्वरस्य । कुम्भोदर इति प्रसिद्धम् । किंकरं भृत्यम् । अवेहि जानीहि । भृत्यवर्गेषु मम विशेषोऽस्तीत्याह —वृषमारुरुक्षोः पादार्पणानुग्रहपूतपृष्ठम् । वृषं स्ववाहनभूतं वृषभम् । आरुरुक्षोः आरोढुमिच्छोः भगवतः । पादार्पणेनैवानुग्रहेण प्रसादेन पूतं पृष्ठं यस्य । धन्योऽहमिति भावः । कैलासवद्गौरम् । अत्र वृषस्य कैलासोपमानेन दुरारोहत्वं ध्वन्यते । अत एवारोहणे सहायान्तरापेक्षा । निकुम्भेन तुल्यप्रभावम् । "वाराणस्यां चैत्यवृक्षे निकुम्भाख्यो गणोऽवसत् । काशीराजस्तु तं वृक्षं भृत्यैः केनापि हेतुना ॥ छेदयामास सोऽप्येनं क्रुद्धः स्वेनैव

1 मितम् । 2 वर्गव्यापिनः । 3 प्रसिद्धं निकुम्भतुल्यं निकुम्भेन तुल्यप्रभावं इति च ।

तेजसा। ददाह सप्रजामात्यं सपुत्रपितृबान्धवम् ॥" इति श्रीमहाभारतप्रसिद्धा कथानेन दर्शिता। त्वमपि तथा मा भूरिति भावः ॥

अमुं पुरः पश्यसि देवदारुं
पुत्रीकृतोऽसौ वृषभध्वजेन।
यो हेमकुम्भस्तननिःसृतानां
स्कन्दस्य मातुः पयसां रसज्ञः ॥ ३६ ॥

**प्रका**—तर्हि तथाविधः कुत एतत्कृतवानसीत्यत आह—**अमुमिति** ॥ अदःशब्दः अपरोक्षणीयत्वमाचष्टे। पुर इत्ययत्नदृश्यत्वम्। पश्यसि। स्वयमेवेति शेषः। कोऽस्य विशेष इत्याह—पुत्रीकृत इति। पुत्रीकरणस्याप्यसंभवत्वात् परिग्रहो लक्ष्यते। फलं च वात्सल्यातिशयः। वृषभध्वजेनेति। वृषभस्य धर्मरूपत्वात् धर्मस्य च दयासारत्वात् दयालुत्वमत्र हेतुत्वेन द्योत्यते। परिग्रहमुपपादयति—य इति। अनेन परमेश्वरीस्वहस्तसिक्तत्वमुक्तम्। हेमकुम्भस्य स्तनरूपणात् पयश्शब्देऽपि पय एव पय इति रूपितमिति श्लिष्टशब्दं परम्परितरूपकम् 'नियतारोपणोपायः स्यादारोपः परस्य यत्। तत्परम्परितं श्लिष्टे वाचके भेदभाजि वा ॥' इति लक्षितम्। स्कन्दस्य मातुरिति भुवनैकमातृत्वेऽपि भगवत्या असाधारणपुत्राभिमानविषयतां भगवतः षण्मुखस्य द्योतयत् तत्तुल्यवत्सतया वृक्षेऽपि वात्सल्यातिशयं द्योतयति ॥

**पदा**—तर्हि किमर्थं तादृशस्त्वं सिंहरूपमवलम्बसे इत्यत्राह—**अमुमित्यादिना** ॥ त्वं पुरः अमुं देवदारुं पश्यसि। पुरः अग्रे। अनेन दर्शनसौकर्यमुक्तम्। देवदारुं वृक्षविशेषम्। असौ वृक्षभध्वजेन पुत्रीकृतः। परमेश्वरेण पुत्रवद्गृहीत इत्यर्थः। यः स्कन्दस्य मातुः हेमकुम्भस्तननिःसृतानां पयसां रसज्ञः। स्कन्दस्य मातुः पार्वत्याः। हेमकुम्भाभ्यामेव स्तनाभ्यां निःसृतानां क्षरितानाम्। अनेन पुत्रवात्सल्यात् पयसां स्वयमेव क्षरणं प्रतीयते। रसं जानातीति रसज्ञः। अत्र हेमकुम्भयोः स्तनरूपणात् जलक्षीरोभयार्थवाचिनि पयश्शब्देऽपि पय एव पय इति रूपणं द्रष्टव्यमिति श्लिष्टपरम्परितरूपकम्। "नियतारोपणोपायः स्यादारोपः परस्य यत्। तत्परम्परितं श्लिष्टे वाचके भेदभाजि वा" इति ॥

---

1 सूचिता। 2 एवं कृत ॥

कण्डूयमानेन कटं कदाचि-
द्वन्यद्विपेनोन्मथिता त्वगस्य ।
अथैनमद्रेस्तनया शुशोच
सेनान्यमालीढमिवासुरास्त्रैः ॥ ३७ ॥

**प्रका**—ततः किमस्येत्याह—कण्डूयेति । कटमिति । कटे हि मदजलपायिमधुकरसंपर्कात् कण्डूलत्वं भवति । कदाचिदिति याद्दच्छिकत्वेन प्रकरणार्थस्य दैवोपपादितत्वं द्योतयति । वन्यद्विपेनेति । द्विप एव तावन्मददोषादविवेकः । तत्राप्यसौ वन्यः । तत्कथमसौ विशेषं चेतयताम्[1]इति भावः । आलीढमिति त्वग्विकृतिमात्रं लक्षयति । फलं च नातिपीडा । यथा परुषगवादिजिह्वालेहने । यथा च तस्याल्पमपि क्षतं देव्याः शोकाय, तथास्यापीति ध्वन्यते ॥

**पदा**—ततः किमत्यत्राह—कण्डूयमानेनेति । कदाचित् वन्यद्विपेन अस्य त्वक् उन्मथिता । कदाचिदित्यनेन यदृच्छाप्राप्तत्वमुक्तम् । वन्यद्विपेन वने भवेन गजेन । उन्मथिता । त्वङ्मात्रोन्मथनमप्यस्य देव्या न सह्यत इति भावः । कटं कण्डूयमानेन । कटं गण्डप्रदेशम् । तत्र हि मदजलस्यन्दनेन तत्पिपासुमधुकरसपातेन च क[2]ण्डूयनत्वं भवति । अथ अद्रेः तनया एनं शुशोच । एनमुद्दिश्य शोकं कृतवती । 'शुच शोके' इति धातुः । असुरास्त्रैः आलीढं सेनान्यमिवेत्युपमा । आलीढम् । 'लिह आस्वादने' इत्यस्माद्धातोः कर्मणि क्तः । तेन च त्वग्विकृतिमात्रं लक्ष्यते । फलं च पीडाया अल्पत्वम् । यथा गवादिजिह्वालेहने । सेनानीः षण्मुखः । यथा षण्मुखस्य त्वङ्मात्रविकारोऽपि न देव्या सह्यते तथास्यापीति भावः ॥

तदाप्रभृत्येव वनद्विपानां
त्रासार्थमस्मिन्नहमद्रिकुक्षौ ।
व्यापारितः शूलभृता विधाय
सिंहत्वमङ्कागतसत्त्ववृत्ति ॥ ३८ ॥

**प्रका**—ततश्च किमित्याह—तदेति ॥ तदाप्रभृति तत्कालादारभ्य । वनद्विपानामिति संबन्धमात्रस्य विवक्षितत्वात् न यत्प्रत्ययः । अद्रिकुक्षाविति

1 चेतयतात् ॥ 2 कण्डूलत्वम् ।

सिंहोचितत्वम्। व्यापारितः व्यापारं क्रियामात्रं कारितः। अत्रैव स्थितेन सर्वाः क्रियाः कर्तव्या इति देवादेशो ध्वन्यते। सिंहत्वम्, न तु सिंहरूपमात्रम्। ततश्च तज्जात्युचितधर्मयोगः। अत एवाङ्केति। अङ्कं समीपम् आगतैः सत्त्वैः प्राणिभिः वृत्तिर्जीविका यत्र तत्तथा। इदं च मे गोनिग्रहे हेतुरिति भावः॥

पदा—अस्त्वेवम्, प्रकृते किमायातमित्यत्राह—**तदाप्रभृतीति**॥ अहं तदाप्रभृत्येव शूलभृता वनद्विपानां त्रासार्थं सिंहत्वं विधाय अस्मिन् अद्रिकुक्षौ व्यापारितः। तदाप्रभृति तत्कालादारभ्यैव। सिंहत्वं विधायेत्यनेन तत्कालादारभ्य सिंहत्वमेव मे जातम्। न सिंहरूपमात्रग्रहणमित्युक्तम्। तेन च [सिंहोचितभक्षण-प्रवृत्तत्वमपि न दोषायेति ध्वन्यते। अद्रिकुक्षावित्यनेन] सिंहोचितदेशप्राप्तिः। व्यापारित इत्यनेनात्रैव स्थित्वा त्वया सर्वाः क्रियाः कर्तव्याः, न देशान्तरे इति ध्वन्यते। अत एवाह— अङ्कागतसत्त्ववृत्तीति। सिंहत्वविशेषणमेतत्। अङ्के समीपे आगतैः सत्त्वैः जन्तुभिः वृत्तिर्जीविका यस्य। 'अङ्कश्चिह्नेऽन्तिकोरसोः' इति यादवः। 'अङ्कः समीप उत्सङ्गे चिह्ने स्थानापराधयोः' इति केशवश्च। भक्षणान्वेषणार्थमपि न दूरगमनं कर्तव्यमिति भावः। इयं गौरवश्यं भक्षितव्यै-वेत्यर्थः॥

तस्यालमेषा क्षुधितस्य तृप्त्यै
प्रदिष्टकाला परमेश्वरेण।
उपस्थिता शोणितपारणा मे
सुरद्विषश्चान्द्रमसी सुधेव ॥ ३९ ॥

प्रका—अथावश्यकत्वेन अमोच्यत्वं दर्शयति—**तस्येति**॥ तस्य प्रतिपादितप्रकारस्य। अलं पर्याप्ता। एषेति। गृष्टित्वात् पूर्णधातुशरीरेत्यर्थः। अत एव शोणितपारणात्वारोपः। शोणितस्य तु सद्यस्तृप्तिहेतुत्वादुपादानम्। क्षुधितस्य। क्षुधितो हि किं नाद्यादिति भावः। तृप्त्यै इति। अपर्याप्तिबुद्धिहेतुकम् उपेक्षणीयत्वं निराकरोति। प्रदिष्टकालेति षष्ठादिकालविशेषविधिर्द्योत्यते। परमेश्वरेण अलङ्घनीयाज्ञेन। उपस्थिता दैवात्स्वयमुपस्थिता। अतो न कथञ्चिदपि त्यक्ष्यामीति वाक्यशेषः। शोणितपारणा नियमोपोषितस्य भोजनं पारणा। सुरद्विषः राहोः। अत्र चेतोहारिसाधर्म्यं व्याख्यातप्रायमेव॥

1 कुण्डलितः पाठः क्वचिन्न दृश्यते।

**पदा—तस्येति ॥** उपस्थिता एषा शोणितपारणा क्षुधितस्य मे तृप्त्यै अलम्। नियमवशादुपोषितस्य भोजनं पारणा। शोणितमेव पारणा। तत्साधनमित्यर्थः। अथवा शोणितेन पारणेति विग्रहः। क्षुधितस्य बुभुक्षितस्य। 'बुभुक्षितः स्यात् क्षुधितो जिघत्सुरशनायितः' इत्यमरः। अलं पर्याप्ता। सुरद्विषश्चान्द्रमसी सुधेवेत्युपमा। सुरद्विषः असुरस्य। राहोरित्यर्थः। परमेश्वरेण प्रदिष्टकाला। परमेश्वरेण अलङ्घनीयशासनेन प्रदिष्टो नियुक्तः कालो यस्याः। परमेश्वरेण स्वयमेव पारणायाः कालनियमोऽपि कृतः। स चायमिदानीं संप्राप्त इति भावः॥

स त्वं निवर्तस्व विहाय लज्जां
गुरौ[1] भवान्दर्शितशिष्यभक्तिः।
शस्त्रेण रक्ष्यं यदशक्यरक्षं
न तद्यशः शस्त्रभृतां क्षिणोति ॥ ४० ॥

**प्रका—**अथ दिव्यत्वोचितमौदार्यं प्रकटयन् राज्ञोऽनन्तरकर्तव्यतामाह—**स त्वमिति ॥** स इति उक्तप्रकारेण मनागप्यपरिक्षतौदार्यः। एतच्च लज्जाविहाने हेतुः। गुरुसकाशे च कथं धार्ष्ट्याभावलक्षणां लज्जां मुञ्चेयमित्यत आह—दर्शितेति। दर्शिता सर्वप्रकारं शिष्यभक्तिः शिष्योचिता भक्तिः येन। तथापि यशो हीयत इत्याह—शस्त्रेणेति। यद्रक्ष्यं शस्त्रेणाशक्यरक्षं शस्त्रशक्तेरगोचरक्षेमम्, तत् शस्त्रभृतां शस्त्रोपजीविनां यशो न क्षिणोति न हापयति। व्यापाद्यमानमिति शेषः॥

**पदा—स त्वमिति ॥** सः त्वं लज्जां विहाय निवर्तस्व। एवं मया बोधितपरमार्थः स त्वं लज्जां परित्यज्य गुरुसकाशमेव गच्छ। गुरुस्तु त्वां प्रति न कुप्यतीत्याह—भवान् गुरौ दर्शितशिष्यभक्तिरिति। गुराविति विषयसप्तमि। दर्शिता प्रकाशिता शिष्योचिता भक्तिर्येन। यथाशक्ति प्रयासादिति भावः। यशसोऽपि न ते कापि हानिरित्याह—रक्ष्यं यत् शस्त्रेण अशक्यरक्षं तत् शस्त्रभृतां यशः न क्षिणोतीति। शस्त्रेण अशक्या रक्षा यस्य। शस्त्रशक्तेरगोचरक्षेममित्यर्थः। व्यापाद्यमानमिति शेषः। शस्त्रभृतां शस्त्रो-

1 गुरोर्भ।

पजीविनाम्। व्यापाद्यमानं वस्तु शस्त्ररक्षणीयं न चेत् तदरक्षणे शस्त्रभृतां का यशोहानिरिति भावः ॥

इति प्रगल्भं पुरुषाधिराजो
मृगाधिराजस्य वचो निशम्य।
प्रत्याहतास्त्रो गिरिशप्रभावा-
दात्मन्यवज्ञां शिथिलीचकार ॥ ४१ ॥

प्रका— इतीति ॥ प्रगल्भमिति संप्रत्ययहेतुः। यथार्थवादी हि प्रायो निस्साध्वसो भवति। प्रत्याहतास्त्रत्वमनूदितं हेतुपरामर्शार्थम्। गिरिशप्रभावात् ब्रह्मादिभिरप्यनुल्लङ्घनीयादिति भावः। अवज्ञां स्वावज्ञां स्वावमानलक्षणं निर्वेदम्। शिथिलीचकार प्राशमयत्। निर्वेदप्रशमेन ईर्ष्यायाः प्रशम; तेन क्रोधस्येति गम्यते। अत्र निशमनानन्तरं प्रतिवचने वक्तव्ये मध्ये यदवज्ञाशिथिलीकरणवचनम्, तदुक्त्यनुसारेणार्थावधारणं प्रत्यानन्तर्यं संरम्भाद्यनुपहतत्वं च प्रतिवचनस्य प्रतिपादयितुमित्यवसेयम् ॥

पदा— इतीति ॥ पुरुषाधिराजः मृगाधिराजस्य इति प्रगल्भं वचः निशम्य आत्मनि अवज्ञां शिथिलीचकार। प्रगल्भमित्यनेन सत्यवादित्वं द्योत्यते। असत्यवादिनो हि साध्वसेन सम्यङ्न वदन्ति। अवज्ञां अवमाननाम्। शिथिलीचकार प्रशमयामास। हेतुमाह— गिरिशप्रभावात् प्रत्याहतास्त्र इति। परमेश्वरप्रभावो हि ब्रह्मादिभिरप्यलङ्घ्य इति भावः। प्रत्याहतः प्रतिहतोऽस्त्रो यस्य ॥

प्रत्यब्रवीच्चैनमिषुप्रयोगे
तत्पूर्वसङ्गे[1] वितथप्रयत्नः
जळीकृतस्त्र्यम्बकवीक्षितेन[2][3]
वज्रं मुमुक्षन्निव वज्रपाणिः ॥ ४२ ॥

प्रका— प्रत्यब्रवीदिति ॥ चः शिथिलीकरणेन सह समुच्चिनोति। ततश्चाविलम्बः ततः प्रतिभागुणश्च द्योत्यते। तत्पूर्वसङ्गे स एव पूर्वसङ्गो यस्य।

1 भङ्गे। 2 जडी। 3 वीक्षणेन।

वितथो व्यर्थः । वितथत्वस्यापि तत्पूर्वत्वमार्थमवसेयम्[1] । अत्र भूयसा सिद्धानुवादेन प्रथमं सिंहबुद्ध्या दण्डमुपक्रम्य ततस्तदनुभाववचनाभ्यां जातपरमेश्वरानुचरत्वसंप्रत्ययः दण्डाविषयत्वं निश्चित्य उपायान्तरप्रयुयुक्षया प्रतिवचनं दत्तवानिति द्योत्यते । तेन च विहन्यमानादपि गोरक्षणव्यवसायादचलनेन सत्त्वजः स्थैर्यगुणः प्रतीयते । तदुक्तं 'व्यवसायादचलनं स्थैर्यं विघ्नाकुलादपि' इति। अत्रोपमया नायकस्य तेनैव देहेन सुरलोकगमनादिना दिव्यानुभावत्वेन 'दिव्यं दिव्येन शातयेत्' इति किमसौ सामादौ प्रवृत्त इति श्रोतृजनशङ्कां परमेश्वरप्रभावस्य सकलदिव्याभिभावित्वप्रदर्शनेन परिहरति ॥

**पदा**— प्रत्यब्रवीदिति ॥ एनं प्रत्यब्रवीच्च । अवज्ञाशिथिलीकरणसमुच्चयार्थश्चशब्दः । आत्मावज्ञाकोपादिकं शिथिलीकृत्य प्रत्युक्तवांश्चेत्यर्थः। अन्यथा वचनं परिहासास्पदं भवेदिति भावः। इषुप्रयोगे वितथप्रयत्नः। वितथो निष्फलः प्रयत्नो यस्य। इषुप्रयोगं विशिनष्टि - तत्पूर्वसङ्ग इति। सङ्गः प्रतिबन्धः। स एव पूर्वसङ्गो यस्य। अत्र तच्छब्देन सङ्ग एव परामृश्यते। 'इतः पूर्वं मम नैवं जातम्। इह तु परमेश्वरप्रभाव एव कारणम्। तस्मादुपायान्तरेणैवैनां मोचयिष्यामि' इति राज्ञश्चिन्तानेन द्योत्यते। तेन च स्थिरव्यवसायत्वं दर्शितम्। अत्रोपमामाह—वज्रं मुमुक्षन् त्र्यम्बकवीक्षितेन जळीकृतः वज्रपाणिरिवेति। मुमुक्षन् मोक्तुमिच्छन्। पुनश्च त्र्यम्बकस्य परमेश्वरस्य वीक्षितेन वीक्षणेन। जळीकृतः वज्रपाणिः इन्द्रः इव । तदुक्तं लैङ्गपुराणे पार्वतीस्वयंवरे "अथ दृष्ट्वा शिवं देवास्तस्या उत्सङ्गवर्तिनम् । कोऽयमत्रेति संमन्त्र्य चुक्रुशुश्चिरमागताः। वज्रमाहरयंस्तस्थौ बाहुमुत्क्षिप्य वृत्रहा ॥ स बाहुरुत्थितस्तेन तथैव समतिष्ठत" इति ॥

संरुद्धचेष्टस्य मृगेन्द्र कामं
हास्यं वचस्तद्यदहं विवक्षुः ।
अन्तर्गतं प्राणभृतां हि वेद
सर्वं भवान् भावमतोऽभिधास्ये ॥ ४३ ॥

**प्रका**— तत्र तावत्स्ववचनावकाशं दर्शयति— **संरुद्धेति** ॥ संरुद्धचेष्टो हि वैलक्ष्यादसंभावितमपि ब्रूयात् । मृगेन्द्रेति । स्वेच्छया शरीरान्तरग्रहणेऽपि मृगेन्द्रत्वमेव तवोचितमिति स्तुतिः प्रार्थनाभिप्रायेण । काममित्यनुमते।

1 त्वमर्थादवसेयम् ।

हास्यमिति । हास्यत्वं चासंभावितत्वात् । यदहं विवक्षुरिति । स त्वं मदीयेनेत्यादि वक्ष्यमाणमसंभावितार्थं वचनं विवक्षितम् । तर्हि न वक्तव्यमित्याह— अन्तर्गतमिति । मनोगतम् । अतः, यतो न मृषा मन्यसे । भावमभिधास्य इत्यन्वयः । भावोऽभिप्रायः ॥

पदा—स्ववचनावकाशं दर्शयति—**संरुद्धेति** ॥ मृगेन्द्र संरुद्धचेष्टस्य तद्वचः हास्यं कामम् । संरुद्धा प्रतिबद्धा चेष्टा व्यापारो यस्य तस्य । तादृशं वचो हास्यम् । संरुद्धचेष्टो हि वैलक्ष्यादसंभावितमपि ब्रूयादिति भावः । काममित्यकामानुमतौ । 'अकामानुमतौ कामम्' इत्यमरः । सर्वेषां हास्यमपि तव न हास्यमित्यर्थः । कीदृशं तद्वच इत्यत्राह — अहं यत् विवक्षुरिति । विवक्षुः वक्तुमिच्छुः । 'स त्वं मदीयेन शरीरवृत्तिं देहेन निर्वर्तयितुं प्रसीद' इति वक्ष्यमाणं वचनमत्र विवक्षितम् । तच्चात्यन्तमसंभावितत्वात् परिहासास्पदमेव । को हि नाम भक्षयितुं स्वशरीरमन्यस्मै प्रयच्छति । ननु यदि परिहासास्पदं, तर्हि न वक्तव्यमित्याशङ्कायां देवानुचरस्यास्य विशेषं वदन् वक्तव्यतामाह—अन्तर्गतमित्यादिना । भवान् प्राणभृताम् अन्तर्गतं सर्वं वेद हि । प्राणभृतां शरीरिणाम् । अन्तर्गतं मनोगतम् । वेदेति लटि 'विदो लटो वा' इति णलादेशे रूपम् । भवान् हि परमेश्वरप्रभावात् प्राणिनां मनोगतं सर्वमपि जानाति । अतः भावमभिधास्ये । भावोऽभिप्रायः । यतस्त्वं मद्वचनं मृषा न मन्यसे, ततोऽभिधास्ये इत्यर्थः ॥

**मान्यः स मे स्थावरजङ्गमानां**
**सर्गस्थितिप्रत्यवहारहेतुः ।**
**गुरोरपीदं धनमाहिताग्ने-**
**र्नश्यत्पुरस्तादनुपेक्षणीयम्** ॥ ४४ ॥

**प्रका**—अथ हेतुपुरस्सरं विवक्षितं प्रस्तौति— **मान्य इति** ॥ स्वनिर्दिष्टपारणानुकूलाचरणेन माननीयः । स इति सकलप्रमाणसंसिद्धः । कथं सिद्ध इत्याह—स्थावरेति । प्रत्यवहारः संहारः । हेतुः स्वविभूतिभिः कारयितेत्यर्थः । गुरोरिति प्राणैरप्यनुवर्तनीयस्य । अपिशब्दो मान्यत्वानुपेक्षणीयत्वे गोरक्षणाननुकूलानुकूलत्वाभ्यां विरोधिनावस्मदर्थे समुच्चिनोति । इदमिति गोरूपम् ।

धनमिति । धनमात्रमनुपेक्ष्यम्, किमुत गौरित्यर्थः । आहिताग्नेरिति अरक्षणे धर्मलोपमाह । नश्यत्, न तु नष्टम् । अनेन प्रतिक्रियाकालानतिवृत्तिः । पुरस्तादिति देशस्यानतिवृत्तिः । अनुपेक्षणीयं प्रतिकर्तव्यम् ॥

**पदा**—अथ स्वाभिलषितमेवार्थं वक्तुकामस्तत्र हेतुमाह—**मान्य इति**॥ स्थावरजङ्गमानां सर्गस्थितिप्रत्यवहारहेतुः स मे मान्यः । प्रत्यवहारः संहारः । स्थावरजङ्गमात्मकस्य प्रपञ्चस्य सृष्टिस्थितिप्रलयानां हेतुभूतः । स भगवान् । मया माननीय एव । तन्निर्दिष्टं अङ्कागतसत्त्ववृत्तित्वं मया परिपालनीयमेवेत्यर्थः । गुरोरिदं धनमप्यनुपेक्षणीयम् । गुरोः प्राणैरप्यनुवर्तनीयस्य । इदं दृश्यमानं गोरूपं धनम् । पारणानिवर्तनमपि मयैव कर्तव्यम् । गुरुधेनुरक्षणमपि । उभे च ते विरुद्धे इत्यपिशब्दार्थः । अनुपेक्षणीयम् । अत्र प्रतिक्रिया कर्तव्यैवेत्यर्थः । अग्निराहितो येन स आहिताग्निः । अरक्षणे धर्मलोपोऽनेन दर्शितः । पुरस्तात् नश्यत्, न तु नष्टम् । अनेन प्रतिक्रियाकाल उक्तः ॥

**स त्वं मदीयेन शरीरवृत्तिं**
**देहेन निर्वर्तयितुं प्रसीद ।**
**दिनावसानोत्सुकबालवत्सा**
**विसृज्यतां धेनुरियं महर्षेः ॥ ४५ ॥**

**प्रका**—अथाविरोधोपायरूपं स्वाभिलषितं प्रार्थयते—**स त्वमिति**॥ स इति । य एवमुदात्तप्रकृतिः । मदीयेन, स्वाधीनेनेत्यर्थः । शरीरस्य वृत्तिं यात्राम् । अवश्यं निर्वर्त्यामित्यर्थः । देहेन क्षणप्रध्वंसिना । प्रसीदेति । प्रसादायत्तो हि विनिमयः । दिनेत्यादिना दयनीयत्वं द्योतयति । दिनावसाने हि औत्सुक्यस्यावश्यंभावित्वात् । बालेति तृणाग्रहणम् । महर्षेरिति । तवापि माननीयोऽयमिति भावः । एवं कृते त्वयाप्यनुचितपरिहारः स्वाम्यादेशः स्वशरीरयात्रा च संपादिता भवेदिति भावः ॥

**पदा**—उभयोरप्यपरित्याज्यत्वात् अयमेव तत्रोपाय इति स्वमनीषितं प्रार्थयते—**स त्वमिति** ॥ सः त्वं मदीयेन देहेन शरीरवृत्तिं निर्वर्तयितुं प्रसीद । मदीयेनेत्यनेन स्वाधीनत्वमुक्तम् । शरीरस्य वृत्तिं जीविकाम् । संकल्पितस्य

व्यत्यासो हि प्रसादमात्रायत्त इति प्रसीदेत्युक्तम् । महर्षेरियं धेनुर्विसृज्यताम् । महर्षेरित्यनेन तवापि माननीयोऽयमिति द्योत्यते । विसृज्यतां मुच्यताम् । धेनोर्दयनीयत्वमाह--- दिनावासानोत्सुकबालवत्सेति । दिनावसाने सन्ध्यायाम् उत्सुकः सश्रद्धो बालः तृणादिभक्षणासमर्थः वत्सो यस्याः । 'सन्ध्यायामवश्य-मागमिष्यति मे माता' इति बुद्ध्या वत्सस्य तद्विषयमौत्सुक्यम् ॥

अथान्धकारं गिरिगह्वराणां
दंष्ट्रामयूखैः शकलानि कुर्वन् ।
भूयः स भूतेश्वरपार्श्ववर्ती
किंचिद्विहस्यार्थपतिं बभाषे ॥ ४६ ॥

प्रका — अथ पुनरपि राजव्यवसायचालनपरस्य सिंहस्य वृत्तान्तमाह— **अथेति** ॥ अन्धकारं शकलानि कुर्वन्निति विकार्यं कर्म । यदुक्तम्---'विकार्यं तु कर्म द्वेधा व्यवस्थितम् । प्रकृत्युच्छेदसंभूतं किञ्चित्काष्ठादि भस्मवत् । किञ्चिद्गुणान्तरोत्पत्त्या सुवर्णादिविकारवत्' इति । शकलीकरणं मध्ये मध्ये प्रसारणात् । भूय इति निर्बन्धद्योतकम् । भूतानां सकलभावानामीश्वरः तस्य पार्श्ववर्ती यः । तस्य किं न संभाव्यमिति भावः । किञ्चिदिति उत्तमानां हसितं दर्शयति । तच्च वक्ष्यमाणोपालम्भाङ्गम् । अर्थपतिमिति अर्थपतित्वा-भिमानिनोऽर्थेनोपप्रलोभनीयतामभिप्रेत्योक्तम् ॥

पदा—इत्थं प्रार्थितस्य सिंहस्य वचनं प्रस्तौति --- **अथेति** ॥ अथ सः भूतेश्वरपार्श्ववर्ती किञ्चित् विहस्य भूयः अर्थपतिं बभाषे । सकलभूतानां पतिः परमेश्वरः तस्य पार्श्ववर्ती सेवकः । राज्ञो बहुमानद्योतकमिदं वचनम् । किञ्चि-द्विहस्येति महतां हसितं दर्शयति । तच्च वक्ष्यमाणोपालम्भाङ्गम् । अर्थपतिं राजानम् । गिरिगह्वराणामन्धकारं दंष्ट्रामयूखैः शकलानि कुर्वन् । अन्धकारमन्ध-तमसम् । दंष्ट्रामयूखैः हासकालसमुत्थितैः रश्मिभिः । शकलीकरणं मध्ये मध्ये प्रकाशप्रसरणात् ॥

**एकातपत्रं जगतः प्रभुत्वं**
**नवं वयः कान्तमिदं वपुश्च ।**

अल्पस्य हेतोर्बहु हातुमिच्छन्
विचारमूढः प्रतिभासि मे त्वम् ॥ ४७ ॥

**प्रका**— तल्लोपालम्भव्याजेन विवक्षिते हेतुमुपन्यस्यति— **एकेति** ॥ एकातपत्रं च राजान्तराणां छत्रशून्यत्वात्। वक्ष्यति च 'रजो विश्रामयन्' इत्यादिना। जगतः न तु मण्डलादिमात्रस्य। प्रभुत्वं स्वामित्वम्। नवं वयो यौवनम्। इदमिति सर्वशेषोऽनन्तगुणगणद्योतकम्। विशेषणानि तु व्यङ्ग्यविशेषोपस्थापकानि प्रभुत्वादीनामेकैकस्य पुण्यसहस्रैरप्यनासादनीयत्वं द्योतयन्ति। वपुः रूपम्। अल्पस्येति। 'षष्ठी हेतुप्रयोगे' इति षष्ठी। बहु प्रभूतम्। विचारे मूढः प्रतिभासीति काकुसहायेन तथा भवसीति ध्वन्यते। मे इति। न तु तव प्रतिभासि। तथात्वे नैवं ब्रूया इति भावः ॥

**पदा—एकेति** ॥ मे त्वं विचारमूढः प्रतिभासि। विचारे मूढो विचारमूढः। तत्र हेतुमाह—अल्पस्य हेतोर्बहु हातुमिच्छन्निति। 'षष्ठी हेतुप्रयोगे' इति षष्ठी। अल्पेन फलेन हेतुना पुण्यसहस्रैरपि अलभ्यानि बहूनि वस्तूनि परित्यक्तुमिच्छन्। तानि वस्तून्येवाह—एकातपत्रमित्यादिना। एकातपत्रं जगतः प्रभुत्वं नवं वयः कान्तमिदं वपुश्च। एकमेवातपत्रं यस्य। अनेनान्येषामातपत्रशून्यत्वमुक्तम्। वक्ष्यति च 'रजो विश्रामयन् राज्ञां छत्रशून्येषु मौलिषु' इति। जगतः लोकस्य, न तु मण्डलमात्रस्य। नवं वयो यौवनम्। इदं दृश्यमानम् ॥

भूतानुकम्पा तव चेदियं गौ-
रेका भवेत्स्वस्तिमती त्वदन्ते।
जीवन् पुनः शश्वदुपप्लवेभ्यः
प्रजाः प्रजानाथ पितेव पासि ॥ ४८ ॥

**प्रका**— अथ राज्यादिजिहासायां हेतुमाशङ्कते— **भूतानुकम्पा तव चेदिति** ॥ जिहासाहेतुरिति शेषः। भूतानुकम्पा प्राणिमात्रे दया। परिहरति—इयमिति। एका केवला। स्वस्तिमती कल्याणिनी। त्वदन्ते

1 जिहासाहेतुम्।

त्वदवसाने। निमित्तसप्तमी। जीवन्निति हेतौ शता। पुनरिति अन्ताज्जीवनस्य व्यतिरेकं द्योतयति। शश्वत् सदा। उपप्लवेभ्यः अनर्थेभ्यः। प्रजाः भूलोकवर्तिनीः। प्रजानाथेति। एतदेव तवोचितमिति भावः। पितेवेति। वात्सल्यात्सावधानत्वमुक्तम्। पासि। न तु पास्यसि। अद्याप्यविच्छिन्नमेव ते पालनमित्यर्थः। तस्माज्जीवनमेव तव दयाया अप्यनुरूपमिति वाक्यार्थः। यत्तु अत्र कुन्तळकः, 'प्रजानाथपदं धेन्वरक्षणमसंभाव्यमित्यभिप्रेत्य प्रयुक्तम्। यतः प्रत्यक्षविपद्यमानप्राणिपरित्राणविमुखस्य जीवतस्तवानेन न्यायेन कदाचिदपि प्रजारक्षणं न संभाव्यत इति प्रमाणोपपन्नम्। प्रमाणवत्त्वादायातः प्रवाहः केन वार्यते' इत्युक्तवान्। तत्प्रकृतापरामर्श इति मन्तव्यम्। यतो धेनुरेव सिंहरूपेण ब्रवीति। तस्याश्च परीक्षितुकामाया रक्षणस्यैवासंभाव्यता वक्तुमुचिता। न त्वरक्षणस्य। परमार्थवचनस्य परिक्षाविरोधित्वादित्यलम्। यदपि तेन 'अलं महीपाल' इत्यादौ आमन्त्रणस्यासंभाव्यार्थगर्भीकार उक्तः। तदप्यनुपयोगि द्रष्टव्यम्॥

पदा — ननु सकलभूतानुकम्पी कथमहमेवं न कुर्यामित्यत्राह — **भूतेति**॥ तव भूतानुकम्पा चेत् त्वदन्ते इयं गौः एका स्वस्तिमती भवेत्। सर्वभूतेष्वनुकम्पा चेत्। शरीरत्यागे हेतुरिति शेषः। तर्हि नैवं कर्तव्यमित्याह — त्वदन्त इत्यादिना। निमित्तसप्तमी चेयम्। इयं दृश्यमाना गौः। एका केवला। स्वस्तिमती कल्याणिनी। जीवने विशेषमाह — जीवन्निति। प्रजानाथ त्वं जीवन् पुनः प्रजाः उपप्लवेभ्यः पिता इव शश्वत् पासि। प्रजानाथेत्यनेन प्रजापालनमेव ते स्वधर्म इत्युक्तम्। स्वधर्मं मा परित्यजेति भावः। जीवन्निति हेतौ शता। उपप्लवेभ्यः अनर्थेभ्यः। पितेवेत्यनेन वात्सल्यपूर्वकं पालनमुक्तम्। तव दयालुत्वस्यापि जीवनमेवोचितमिति भावः, 'त्यजेदेकं कुलस्यार्थे' इति न्यायात्॥

**अथैकधेनोरपराधचण्डाद्-**
**गुरोः कृशानुप्रतिमाद्बिभेषि।**
**शक्योऽस्य मन्युर्भवता विनेतुं**
**गाः कोटिशः स्पर्शयता घटोध्नीः ॥ ४९ ॥**

**प्रका** — अथ हेत्वन्तरमाशङ्कते— **अथेति** ॥ अथ प्रश्ने । एकधेनोरिति । अकोपनस्यापि कोपो भवेदिति भावः । अपराधे सति चण्डात् अत्यन्तकोपनात् । कृशानुप्रतिमात् विश्वमपि दग्धुं क्षमात् । बिभेषि । ततश्च राज्यादि जिहासति इति शेषः । कोटिश इति मन्युविनयसौकर्यं द्योतयति । स्पर्शयता ददता । ननु विशिष्टेयं गौरित्याह— घटोध्नीरिति ॥

**पदा** — हेत्वन्तरमाशङ्क्य परिहरति— **अथेति** ॥ अथ गुरोः बिभेषि । अथशब्दः प्रश्नान्तरे प्रश्ने वा । गुरोः सकाशात् । गुरुभयात्किं शरीरत्याग इत्यर्थः । एकैव धेनुर्यस्य । अनेनाकोपनस्यापि कोपावकाश उक्तः । अपराधे सति चण्डात् क्रूरात् । कृशानुना अग्निना प्रतिमा सादृश्यं यस्य । कृतापराधस्य कुलं समूलं दग्धुं समर्थादित्यर्थः । परिहरति —भवता अस्य मन्युः विनेतुं शक्य इति । मन्युः क्रोधः । कथमित्यत्राह— घटोध्नीः कोटिशः गाः स्पर्शयतेति । घटः कुम्भः तद्वदूधो यासाम् बहुक्षीराः । कोटिशः अनेकशः । स्पर्शयता ददता । हेतौ शता । 'विश्राणनं वितरणं स्पर्शनं प्रतिपादनम्' इत्यमरः । एवंभूता दिव्या गाः कोटिशः प्रदातुं समर्थो हि भवानिति भावः ॥

**तद्रक्ष कल्याणपरम्पराणां**
**भोक्तारमूर्जस्वलमात्मदेहम् ।**
**महीतलस्पर्शनमात्रभिन्न-**
**मृद्धं हि राज्यं पदमैन्द्रमाहुः** ॥ ५० ॥

**प्रका** — अथ विवक्षितमवतारयति—**तद्रक्षेति** ॥ तत् तस्मात् यस्माद्राज्यादि श्रेयस्करं दया च निर्वाह्या गुरुश्च शक्यानुनयः । रक्ष मा त्याक्षीः । कल्याणपरम्पराणामिति । इतः परं जीवतो भाविनीनामपीत्यर्थः । भोक्तारं भोक्तृत्वेन प्रतीयमानम् । ऊर्जस्वलं सर्वार्थसाधनक्षमम् । आत्मशब्देनारादुपकारित्वमुक्तम् । अनेन पूर्वं राजोक्तौ मदीयेनेति यदात्मीयत्वं त्यागहेतुत्वेनोपात्तं तदेवात्यागहेतुत्वेनानूदितमित्यवसातव्यम् । एवं कृते धेनुरक्षणकृतः स्वर्गो न भवेदित्याह- महीतलेति । ऋद्धमिति । न तु राज्यमात्रं विवक्षामीति भावः । ऐन्द्रमिति । न केवलं स्वर्गतुल्यम् ॥

**पदा**—विवक्षितमर्थमेवाह— **तद्रक्षेति** ॥ तत् त्वं आत्मदेहं रक्ष। तत् यस्मात् अयं देहो राज्यपालनादिरूपस्य श्रेयसः साधनम्, यस्माच्च गुरुकोपप्रशमने साधनान्तरमस्ति तस्मादित्यर्थः। कल्याणपरम्पराणां भोक्तारं मङ्गलसमूहानामनुभवितारम्। ऊर्जस्वलं शक्तिमन्तम्। सर्वार्थसाधक्षममित्यर्थः। नन्वेवं सति धेनुरक्षणकृतः स्वर्गः परित्यक्तः स्यात्, अत आह— ऋद्धं राज्यं हि ऐन्द्रं पदमाहुरिति। ऋद्धं समृद्धम्। तव पदादैन्द्रस्य पदस्य न कमप्यतिशयं पश्यामीति भावः। एतावानेव तु भेद इत्याह—महीतलेति। महीतलस्य भूमेः स्पर्शनमात्रेणैव भिन्न भेदयुक्तम्॥

एतावदुक्त्वा विरते मृगेन्द्रे
प्रतिस्वनेनास्य गुहागतेन।
शिलोच्चयोऽपि क्षितिपालमुच्चैः
प्रीत्या तमेवार्थमभाषतेव ॥ ५१ ॥

**प्रका**—अथ सिंहस्य वाक्योपसंहारेण राज्ञो वचनावकाशं दर्शयति— **एतावदिति** ॥ एतावत् इयत्परिमाणं हेतूपन्यासोपक्रमं बाधकपरिहारपर्यन्तम्। न तु विधिमात्रमित्यर्थः। विरते किमसौ ब्रूयादिति। न तु वाग्दारिद्र्यात्। प्रतिस्वनेन प्रतिबिम्बभूतेन स्वनेन हेतुभूतेन। अस्य वचनस्य मृगेन्द्रस्य वा। गुहागतेन गुहासंभविना। उच्चैः स्फुटम्। प्रीत्या गुणानुरागेण। अथवा हृदयङ्गमार्थश्रवणजेन हर्षेण। तमेव। न तु न्यूनमधिकं वा। अभाषत अनूदितवान्। उच्चैरनुभाषणं हि प्रीत्यनुभावः। एवं शिलोच्चयस्यापि प्रीत्युत्प्रेक्षया सिंहवचनस्य सर्वहृदयङ्गमत्वं द्योतितम्॥

**पदा**—सिंहस्य वचनावसानमाह— **एतावदिति** ॥ मृगेन्द्रे एतावत् उक्त्वा विरते अस्य गुहागतेन प्रतिस्वनेन शिलोच्चयोऽपि प्रीत्या क्षितिपालं तमर्थमेव उच्चैरभाषतेव। एतावत् एतत्परिमाणं हेतूपन्यासमारभ्य बाधकपरिहारपर्यन्तं न विधिमात्रमित्यर्थः। अनेन युक्तियुक्तत्वमुक्तम्। विरते अस्य वचनावकाशं दातुं उपरते। अस्य मृगेन्द्रस्य वचनस्य वा। प्रतिस्वनेन प्रतिबिम्बभूतेन स्वनेन। शिलोच्चयः पर्वतः। उच्चैर्भाषणं हि प्रीतेरनुभावः। एवं शिलोच्चयस्यापि प्रीत्युत्प्रेक्षया सिंहवचनस्य सर्वहृदयङ्गमत्वं सूचितम्॥

निशम्य देवानुचरस्य वाचं
मनुष्यदेवः पुनरप्युवाच ।
धेन्वा तदध्यासितकातराक्ष्या
निरीक्ष्यमाणः सुतरां दयालुः ॥ ५२ ॥

**प्रका**—अथैवमप्यभिन्नधैर्यस्य नेतुर्वृत्तान्तं वर्णयति— **निशम्येति** ॥ निशमनमत्रावधारणपर्यन्तम् । अन्यथा अनुपयोगात् । देवानुचरस्येति श्रद्धेयवाचः । मनुष्यदेव इति तद्वाक्यस्य विपर्यासाद्यनुपहतत्वाभिप्रायम् । पुनरिति स्थैर्यं दर्शयति । अपिरसंभावनां द्योतयति । क एतन्निशम्य प्रतिवचनं कुर्यात्, अपि तु क्रियामेव केवलमुत्तरीकुर्यात् ऋते महासत्त्वादस्मादित्यर्थः । तदध्यासितेन तदधिष्ठानेन कातरे भीते अक्षिणी यस्या इति । तन्निरीक्षणं च दयावीरोद्दीपनम् । अत एवाह —सुतरामिति । अतिशयेन । दयालुर्दयावान् ॥

**पदा—निशम्येति** ॥ मनुष्यदेवः देवानुचरस्य वाचं निशम्य पुनरप्युवाच । पुनरपीत्यनेन तादृशवचनश्रवणेऽपि धैर्यादप्रच्युतत्वमुक्तम् । धेन्वा निरीक्ष्यमाणः नितरामीक्ष्यमाणः । मा त्वमेतद्वचनेन मां परित्यज इति निरीक्षणस्याभिप्रायः । तस्य सिंहस्य अध्यासितेन अधिष्ठानेन कातरे भीते अक्षिणी यस्याः । तादृशं निरीक्षणं राज्ञो दयावीरोद्दीपनम् । अत एवाह—सुतरां दयालुरिति । अतिशयेन दयावान् ॥

क्षतात्किल त्रायत इत्युदग्रः
क्षत्रस्य शब्दो भुवनेषु रूढः ।
राज्येन किं तद्विपरीतवृत्तेः
प्राणैरुपक्रोशमलीमसैर्वा ॥ ५३ ॥

**प्रका**—तत्र प्रबलतरयुक्त्युपन्यासेन तद्युक्तिं दूषयति—**क्षतादिति** ॥ क्षतादापदः । किलेत्यपरमार्थे । इयतः कालान्मामेकमधन्यमासाद्यापरमार्थता संवृत्तेति भावः । इतीति । एवंविधान्निर्वचनवाक्यादित्यर्थः । न तु केवला रूढिः प्रयोजिकेति भावः । उदग्रो गुणोन्नतः । ततश्च श्लाघागर्भमुच्चैरुच्चार्यमाणः । क्षत्रस्य वर्णस्य । यथा क्षत्रं नाम वर्ण इति । शब्द इति । तद्वाचकः

क्षत्रशब्दः क्षत्रियशब्दो वा। रूढः प्रसिद्धः। राज्येनेति। त्वद्विवक्षितगुण-विशिष्टेनापीति भावः। तदिति त्राणम्। तद्विपरीता वृत्तिः नाशनम्। शक्यस्य रक्षणस्याकरणं नाशनमेवेति भावः। उपक्रोशेन निन्दया मलीमसैर्मलिनैः। एतद्राज्येनापि संबध्यते। अत्र च यस्तावत् त्वया दुरवापवयोवपुर्विशिष्टत्वात् भाविनिरवधिकल्याणभोक्तृत्वाच्च रक्षणीयो देह उक्तः, यच्च प्रधानफलभूतं निस्साधारणं प्रभुत्वं तदुभयमपि अरक्षितव्यापन्नायां गवि श्वलीढपुरोडाशतामुपेयादिति भावः॥

पदा—तेनोक्तानां वक्ष्यमाणानां च युक्तीनां परिहरणे निपुणां युक्तिमाह—क्षतादिति॥ क्षतात् त्रायते इति किल क्षत्रस्य शब्दः भुवनेषु रूढः। क्षतात् आपदः। इतिशब्दो हेतौ। क्षतात् त्रायत इत्येतस्मान्निर्वचनवाक्याद्धेतोरित्यर्थः। किलेत्यपरमार्थे। इदानीं मामासाद्यापरमार्थता जातेति भावः। भुवनेषु रूढः प्रसिद्धः। उदग्रः उत्कृष्टः। उत्कर्षोऽपि रक्षणनिमित्त एवेति भावः। तद्विपरीतवृत्तेः राज्येन किम्। तस्माद्रक्षणात् विपरीता वृत्तिर्यस्य। 'ऋद्धं हि राज्यम्' इत्यस्य परिहारोऽयम्। उपक्रोशमलीमसैः प्राणैर्वा। उपक्रोशो निन्दा। मलीमसैर्मलिनैः। नायं क्षत्रियशब्दवाच्यो भवितुं योग्य इति निन्द्यमानैरित्यर्थः। वाशब्दः समुच्चये। प्राणैश्च किं प्रयोजनमित्यर्थः। 'आत्मदेहं रक्ष' इत्यस्य परिहारोऽयम्॥

कथं च शक्यानुनयो महर्षि-
विश्राणनादन्यपयस्विनीनाम्।
इमां[1] तनूजां सुरभेरवेहि
रुद्रौजसा तु प्रहृता त्वया स्यात् ॥ ५४ ॥

प्रका—अथ बाधकपरिहाररूपस्यानुनयस्य शक्यत्वेऽप्यनुचितत्वम् आत्मनश्च तदूर्ध्वमजीवनमध्यवस्यन्नपि तन्मताभ्युपगमेनाह—कथं चेति॥ विश्राणनं दानम्। पयस्विनीनामिति भूमादयोस्त्यर्थानुयायिनो[2] मत्वर्थाः सम्भविनो विवक्षिताः। अशक्यत्वं दर्शयति—इमामिति। एवंविधामवस्थां प्राप्तामित्यर्थः। तर्हि परिभवः कथमित्याह—रुद्रौजसेति। तत्र किन्न संभाव्यम्। यतो रुत् रोदनं संसारदुःखं द्रावयति यः तस्येति। अत एव स्यादिति सम्भावनायां लिङ्। प्रहृतं त्वया[3] स्यादिति पाठे प्राहारीत्यर्थः॥

---

1 इमामनूनां। 2 स्य। 3 त्वयास्यामि।

**पदा**—त्वदुक्तप्रकारेण महर्षिरपि न शक्यानुनय इत्याह— **कथमिति** ॥ महर्षिरन्यपयस्विनीनां विश्राणनात्कथं शक्यानुनयश्च । घटोध्नीरित्यस्य परिहारार्थः पयस्विनीशब्दः । प्रशस्तबहुक्षीराणामित्यर्थः । विश्राणनं दानम् । शक्यः अनुनयो यस्य । अशक्यत्वमेवाह— त्वम् इमां सुरभेः तनूजामवेहीति । तर्हि कथं मया हन्यत इत्यत्राह— त्वया रुद्रौजसा तु प्रहृता स्यादिति । रुद्रस्य ओजसा प्रभावेन । न केवलं त्वदोजसेति भावः । रुदिति रोदनम् । संसार-दुःखमिति यावत् । तद्द्रावयतीति रुद्रः । तस्य प्रभावात् किं किं न संभाव्य-मिति भावः । अत एव स्यादिति संभावनायां लिङ्प्रयोगः ॥

**सेयं स्वदेहार्पणनिष्क्रयेण**
**न्याय्या मया मोचयितुं भवत्तः ।**
**न पारणा स्याद्विहता तवैवं**
**भवेदलुप्तश्च मुनेः क्रियार्थः ॥ ५५ ॥**

**प्रका**—तदत्र किं युक्तं मन्यसे इत्याह— **सेति** ॥ सा या सर्वप्रकारेणानुपेक्षणीया । स्वदेहस्य न त्वन्यवस्तुनः । निष्क्रयो नाम परगृहीतस्य प्रतिशीर्षकेण प्रत्याहरणम् । न्याय्या योग्या । मया सुहृदा । भवत्तः एवं-विधसौजन्यशालिनः । अयं भावः—यतो न वञ्चनीयः सुहृत्, अतो लघीयोभि-र्गरीयसी धेनुः निष्क्रेतव्येति । एवं कृते प्रयोजनमाह— न पारणेति । एव-मित्युक्तप्रकाराचरणे । क्रियार्थ इति कर्मधारयः । यथा 'सङ्गीतार्थो ननु पशुपतेः' इति । एवं कृते मम युक्तकारिता तव च पारणा मुनेः क्रियार्थः च संपन्ना भवेयुरिति भावः ॥

**पदा**—तस्मादयमेव तत्रोपाय इत्याह— **सेयमिति** ॥ सा इयं मया स्वदेहार्पणनिष्क्रयेण भवत्तः मोचयितुं न्याय्या । स्वदेहार्पणेनैव निष्क्रयेण तुल्यवस्तुप्रत्यर्पणेन । भवत्तः माननीयात् भवतः सकाशात् । न्याय्या योग्या । न्याय्यत्वमेव विवृणोति— नेति । एवं तव पारणा विहता न स्यात् । मुनेः क्रियार्थः अलुप्तश्च भवेत् । क्रियैव अर्थः क्रियार्थः । एवं कृते तव पारणा-नाशोऽपि नास्ति, नापि मुनेः क्रियानाश इत्यर्थः ॥

भवानपीदं परवानवैतु
महान् हि यत्नस्तव देवदारौ ।
स्थातुं नियोक्तुर्न हि शक्यमग्रे
विनाश्य रक्ष्यं स्वयमक्षतेन ॥ ५६ ॥

**प्रका**—प्रकारान्तरे बाधकमाह—**भवानिति** ॥ अपीति । न केवलमहम् । इदमिति वक्ष्यमाणम् । परवान् पराधीनः । अनेनावगमनस्य शक्यत्वं द्योतयति । अवैत्विति प्रार्थनायां लोट् । अवैतीति वा पाठः । कथं अवैतीति गम्यत इत्याह—महानिति । नियोक्तुः स्वामिनः गुरोर्वा । विनाश्य । अरक्षणेनेति शेषः । स्वयमात्मना । अतः प्रागुक्तमेव युक्तमित्यर्थः ॥

**पदा**—प्रकारान्तरेण मुनेरशक्यानुनयत्वं सिंहदृष्टान्तेनैवोपपादयति—**भवानपीति** ॥ भवानपीदमवैति । न केवलमहमित्यपिशब्दार्थः । इदं स्थातुमित्यादिना वक्ष्यमाणम् । अवगमस्य शक्यत्वे हेतुमाह—परवानिति । पराधीनः । पराधीनो हि पराधीनस्य पीडां जानाति । 'न हि वन्ध्या विजानाति गुर्वीं प्रसववेदनाम्' इति न्यायादिति भावः । अवैतीत्यत्र को निश्चयः, अत आह—तव देवदारौ यत्नः महान् हीति । देवदाराविति विषयसप्तमी । महता प्रयासेन हि भवता देवदारुः परिपाल्यते एवमेव धेनुर्मयापीति भावः । रक्ष्यं विनाश्य स्वयमक्षतेन नियोक्तुरग्रे स्थातुं न शक्यं हि । क्षतो न भवतीत्यक्षतः क्षतमात्रेणापि रहितेनेत्यर्थः । आत्मरक्षणीयमरक्षणेनैव विनाश्य कथं स्वामिनो गुरोर्वा समीपे स्थीयते, विचारयेत्यर्थः ॥

किमप्यहिंस्यस्तव चेन्मतोऽहं
यशश्शरीरे भव मे दयालुः ।
एकान्तविध्वंसिषु मद्विधानां
पिण्डेष्वनास्था खलु भौतिकेषु ॥ ५७ ॥

**प्रका**—अथ तदप्रवृत्तिहेतुमाशङ्क्य परिहरति—**किमपीति** ॥ किंशब्दो हेतुवितर्के । दयया दाक्षिण्येन सौजन्येनान्येन वा केनापि हेतुनेत्यर्थः । यशश्शरीर इति कर्मधारयः । अहमभिमानस्यापि तदेव मे विषय इति भावः । दयालुः अनुग्रहतत्परः । प्रसिद्धशरीरे किं नेत्याह —एकान्तेति । एकान्तेन

नियमेन विध्वंसिषु तच्छीलेषु। यशसस्तु तद्व्यतिरेको द्योत्यः। मद्विधानां सारासारविदाम्। एतच्च प्रवर्तनाङ्गम्। 'स्वगुणाविष्क्रिया दोषो नात्र भूतार्थशंसिनः' इति निर्दोषं चेत्यवसेयम्। पिण्डेषु संघातेषु। अनास्था अतात्पर्यम्। 'स्यादास्था त्ववलम्बने। प्रतिज्ञायत्नतात्पर्यगोष्ठीषु' इति केशवः। तथा विध्वंसित्वे हेतुमाह-भौतिकेषु भूतमयेषु। ततश्च सावयवत्वादनित्यत्वम्॥

**पदा**—पुनरपि सिंहस्याप्रवृत्तौ हेत्वन्तरमाशङ्क्य परिहरति— **किमपीति**॥ अहं तव किमप्यहिंस्यः मतश्चेत् त्वं मे यशश्शरीरे दयालुर्भव। किंशब्दो हेतुवितर्के। केनापि हेतुनेत्यर्थः। हेतवश्च दाक्षिण्यसौजन्यदयादयो द्रष्टव्याः। यशस्येव शरीरे। दयालुः दयाशीलः। मद्विधानां भौतिकेषु पिण्डेषु अनास्था खलु। मद्विधानां शरीरस्य विनश्वरत्वमवगच्छताम्। भौतिकेषु पाञ्चभौतिकेषु। पिण्डेषु तत्संघातात्मकेषु। अनास्था अतात्पर्यम्। 'स्यादास्था त्ववलम्बने। प्रतिज्ञायत्नतात्पर्यगोष्ठीषु' इति केशवः। नात्रात्मप्रशंसा दोषाय, परमार्थत्वात्। तदुक्तं 'स्वगुणाविष्क्रिया दोषो नात्र भूतार्थशंसिनः' इति॥

संबन्धमाभाषणपूर्वमाहु-
र्वृत्तः स नौ संगतयोर्वनान्ते।
तद्भूतनाथानुग नार्हसि त्वं
संबन्धिनो मे प्रणयं विहन्तुम् ॥ ५८ ॥

**प्रका**—अथ प्रवृत्तिहेतुं दर्शयति—**सम्बन्धमिति**॥ सम्बन्धमात्मीयत्वम्। आभाषणं पूर्वो हेतुर्यस्य स तथा। आहुः। त्वद्विधाः सन्त इति शेषः। वृत्तो जातः। वनान्त इति याद‍ृच्छिकत्वेन दैवोपपादितत्वं संगतस्योक्तम्। भूतनाथानुग इति परमेश्वरपरिसरवर्ती त्वमेव औचित्यं वेत्सीत्यर्थः। सम्बन्धिनः आत्मीयस्य। प्रणयं याच्ञाम्। विहन्तुं प्रत्याख्यातुम्। अत्र सख्यमिति सख्युरिति च नोक्तम् आत्मनो निकृष्टत्वबुद्ध्या। एतानि च वाक्यानि प्रकृतप्रार्थनाशेषतयावगन्तव्यानि॥

**पदा**—**सम्बन्धमिति**॥ संबन्धं आभाषणपूर्वम् आहुः। संबन्धः सख्यम्। आभाषणमेव पूर्वं यस्य। आभाषणहेतुकमित्यर्थः। संबन्धः भवादृशा इति शेषः। वनान्ते सङ्गतयोः नौ सः वृत्तः। आहुः। वनान्ते वनमध्ये।

अनेन संगमस्य दैवोपपादितत्वादपरित्याज्यत्वमुक्तम् । सः संबन्धः । वृत्तो जातः । भूतनाथानुग तत् त्वं संबन्धिनः मे प्रणयं विहन्तुं न अर्हसि । भूतनाथानुगशब्देन स एव ममापि नाथ इति द्योत्यते । संबन्धिनः आत्मीयस्येत्यर्थः । प्रणयं याच्ञाम् । 'प्रणयास्त्वमी । विस्रंभयाच्ञाप्रेमाणः' इत्यमरः । विहन्तुं नाशयितुम् ॥

तथेति गामुक्तवते दिलीपः
सद्यः प्रतिष्टम्भविमुक्तबाहुः ।
सन्यस्तशस्त्रो हरये स्वदेह-
मुपानयत्पिण्डमिवामिषस्य ॥ ५९ ॥

**प्रका**—अथ सिंहाभ्युपगमपूर्वकं तस्योक्तानुष्ठानं दर्शयति—**तथेतीति** ॥ तथेत्यभ्युपगमे । गामुक्तवत इत्यभ्युपगतानुष्ठानम् । दिलीप इति । यः स्तथा परार्थैकफलजन्मा । सद्यः अभ्युपगमकाले । प्रतिष्टम्भेन विमुक्तौ बाहू यस्य । सम्यक् दूरात्साकल्येन च न्यस्तानि शस्त्राणि येन । स्वदेहम् अतिदुस्त्यजमित्यर्थः । उपानयत् अन्तिकं प्रापितवान् । आमिषम् उपादानम् । उपहार इत्यर्थः । 'उपादानेऽप्यामिषं स्यात्' इति सिंहः । अत्रोपमया त्वनात्मबुद्धिः शरीरे दर्शिता ॥

**पदा**—**तथेति** ॥ दिलीपः तथा इति गामुक्तवते हरये स्वदेहमुपानयत् । गां वाणीम् । हरये सिंहाय । उपानयत् अन्तिकं प्रापयामास । आमिषस्य पिण्डमिव । आमिषस्य उपादानस्य । उपहारस्येत्यर्थः । संबन्धषष्ठी चेयम् । उपहारार्थमोदनादिपिण्डमिवेत्यर्थः । 'उपादानेऽप्यामिषं स्यात' इति सिंहः । उपमया शरीरे तस्यानात्मत्वबुद्धिरुक्ता । आत्मीयत्वं तु पिण्डेऽपि तुल्यमिति भावः । आमिषं मांसं वा । 'पललं क्रव्यमामिषम्' इत्यमरः । मांसपिण्डमिवेर्थः । सद्यः अभ्युपगमकाल एव । प्रतिष्टम्भेन प्रतिबन्धेन विमुक्तौ बाहू यस्य । सम्यक् साकल्येन दूराच्च न्यस्तानि शस्त्राण्यायुधानि येन ॥

**तस्मिन् क्षणे पालयितुः प्रजाना-**
**मुत्पश्यतः सिंहनिपातमुग्रम् ।**

अवाङ्मुखस्योपरि पुष्पवृष्टिः
पपात विद्याधरहस्तमुक्ता ॥ ६० ॥

प्रका—अथैवं परीक्षिततद्भावाया धेनोः प्रसादं दर्शयितुमुपक्रमते—तस्मिन्निति ॥ प्रजानां पालयितुरिति। वाञ्छतोऽपि तस्य कथमीदृशो भुवनविद्विष्टो विनाश उपनमेदिति भावः। उत्पश्यत इति। अयमयं पततीत्युत्सवापत्तिबुद्धया संभावयमानस्येत्यर्थः। सिंहनिपातं गात्रासंसक्तभूतलनिखन्यमाननखकुलिशम्। उग्रं चिन्त्यमानमपि भीरुहृदयविदारणम्। अवाङ्मुखस्येति तदधीनतासम्पादनाय। उपरि पृष्ठे इत्यर्थः। विद्याधराणां हस्तेभ्यः स्वयं मुक्ता। अनेन तेषामप्येतत्पदामदर्शनजन्माद्भुतावेशविस्मृतान्तःकरणता द्योत्यते ॥

पदा—तस्मिन्निति ॥ तस्मिन् क्षणे प्रजानां पालयितुः उपरि विद्याधरहस्तमुक्ता पुष्पवृष्टिः पपात। उपरि पृष्ठभागे। विद्याधराणां हस्तेभ्यः मुक्ता विस्मयाविष्टहृदयत्वादविज्ञानपूर्वमेव गलिता। सिंहस्य निपातं आपतनम्। उत्पश्यतः उत्प्रेक्षमाणस्य। चिन्तयत इत्यर्थः। गोरक्षणसुकृतलाभनिमित्तः सिंहवक्त्रसंबन्ध इदानीमिदानीं मे भविष्यतीति संभावयत इति भावः। उग्रं भयावहम्। अवाङ्मुखस्य नम्रस्य। देहस्य तदधीनताप्रतिपादनमस्य फलम् ॥

उत्तिष्ठ वत्सेत्यमृतायमानं
वचो निशम्योत्थितमुत्थितः सन्।
ददर्श राजा जननीमिव स्वां
गामग्रतः प्रस्नविनीं[1] न सिंहम् ॥ ६१ ॥

प्रका—उत्तिष्ठेति ॥ उत्तिष्ठ नैवमवस्थानं तवोचितमिति भावः। वत्सेति पुत्रवद्व्यवहारः। अमृतायमानमिति अनातङ्कव्यञ्जकत्वात्। उत्थितमुच्चैरुच्चारितम्। निशम्य। उत्थितः तन्निदेशादरेणोत्थितः। न तु देहत्यागवैमुख्येन। जननीमिवेति। प्रस्नवादिसाधर्म्यात् ॥

1 स्रविणीं।

पदा—उत्तिष्ठेति ॥ वत्स त्वम् उत्तिष्ठेति उत्थितममृतायमानं वचः निशम्य उत्थितः सन् राजा अग्रतः गां ददर्श । सिंहं न । वत्सेति पुत्रवद्व्यवहारः । उत्थितमुच्चैरुच्चारितम् । अमृतवदाचरत् । स्वां जननीमिव । प्रस्नवादि-साधर्म्यमुपमाहेतुः । प्रस्नविनीं प्रस्नववतीम् ॥

तं विस्मितं धेनुरुवाच साधो
मायां मयोद्भाव्य परीक्षितोऽसि ।
ऋषिप्रभावान्मयि नान्तकोऽपि
प्रभुः प्रहर्तुं किमुतान्यहिंस्राः ॥ ६२ ॥

प्रका—तमिति ॥ विस्मितमिति । निरातङ्कधेनुदर्शनात् । साधो[1] तव सज्जनता संमतेति भावः । मायामिति । न खलु सिंहः कश्चित् । मया न त्वन्येन । परीक्षितः । परीक्षा निर्वृत्तेत्यर्थः । इदमेव च संभाव्यमित्याह—ऋषिप्रभावादिति । प्रहर्तुं हिंसितुम् । किमुत सुतराम् । 'बलवत्सुष्ठु किमुत स्वत्यतीव च निर्भरे' इति सिंहः ॥

पदा—तमिति ॥ धेनुः तमुवाच । विस्मितम् । निरातङ्कधेनुदर्शनं सिंहादर्शनं च विस्मयहेतुः । साधो त्वं मया मायामुद्भाव्य परीक्षितः असि । उद्भाव्य प्रकाशयित्वा । ऋषिप्रभावात् अन्तकोऽपि मयि प्रहर्तुं न प्रभुः । अन्यहिंस्राः किमुत । अन्तं करोतीत्यन्तकः । सोऽपि मयि प्रहर्तुमसमर्थः । अन्ये सिंहादयः । हिंस्राः हिंसाशीलाः । किमुत । सुतरामशक्ता इत्यर्थः । 'बलवत्सुष्ठु किमुत स्वत्यतीव च निर्भरे' इति सिंहः । अन्तकस्याप्यशक्तेऽर्थे सिंहादीनां तु का कथेति भावः ॥

भक्त्या गुरौ मय्यनुकम्पया च
प्रीतास्मि ते हन्त वरं वृणीष्व ।
न केवलानां पयसां प्रसूति-
मवेहि मां कामदुघां प्रसन्नाम् ॥ ६३ ॥

प्रका—भक्त्येति ॥ गुर्वादिविषया रतिर्भक्तिः । हन्त हर्षे । वरमभिलषितम् । अत्र मा विचार इत्याह—नेति । केवलानामेकेषाम् ।

1 पुत्र ।

'निर्णिक्ते केवलमिति त्रिलिङ्गं त्वेककृत्स्नयोः' इति सिंहः। मत्प्रसादो न तावन्मात्रफल इत्यर्थः। इयत्पर्यन्तोऽयमभूताहरणोपक्रमो गर्भबीजोद्भेदलक्षणाक्षेपपर्यन्तः प्राप्त्याशात्मको गर्भसन्धिः। पताका चात्र सिंहवृत्तान्तः। 'गर्भस्तु दृष्टनष्टस्य बीजस्यान्वेषणं मुहुः' इति। इतः परमवमर्शसन्धिः॥

**पदा—भक्त्येति॥** अहं गुरौ भक्त्या मयि अनुकम्पया च ते प्रीतास्मि। अनुकम्पया दयया। ते इति संबन्धषष्ठी। हन्त वरं वृणीष्व। हन्तेति वाक्यारम्भे अनुकम्पायां वा। 'हन्त हर्षेऽनुकम्पायां वाक्यारम्भविषादयोः' इति सिंहः। त्वं मां केवलानां पयसां प्रसूतिं न प्रसन्नां कामदुघाम् अवेहि। केवलानां एकेषाम्। प्रसूतिं उद्भवस्थानम्। काममभिलषितं वस्तु दोग्धीति कामदुघा ताम्॥

**ततः समानीय स मानितार्थी**
**हस्तौ स्वहस्तार्जितवीरशब्दः।**
**वंशस्य कर्तारमनन्तकीर्तिं**
**सुदक्षिणायां तनयं ययाचे ॥ ६४ ॥**

**प्रका**—अथ लब्धनियमफलस्य नेतुर्वृत्तान्तमाह—**तत इति॥** ततो निदेशानन्तरम्। समानीय सङ्गतौ कृत्वा। अञ्जलिं बध्वेत्यर्थः। मानिताः मानं प्रापिताः न तु केवलमभिलषितदानेनोपच्छन्दिताः अर्थिनो येन। ततश्च तेषामपि दैन्यसूचकान्यञ्जलिबन्धादीनि यस्य नित्यपरोक्षाणि सोऽपि गुरुधेनुप्रसादं मानयन् अञ्जलिमबध्नात्। न त्वर्थितादैन्यादिति भावः। अथवा मानितामर्थयितुं शीलं यस्य। मानधनत्वात्। स कथमुक्तप्रकारव्यतिरेकेणाञ्जलिं कुर्यादिति भावः। स्वहस्तेनार्जितोऽसाधारणीकृतो वीरशब्द एव येन। तस्येदृशे फले पराधीनवृत्तेर्याचनमपि न दैन्यदोषावहमिति भावः। वंशस्य पुत्रपौत्रादिपरम्परारूपस्य। कर्तारं प्रवर्तयितारम्। कूटस्थव्यपदेशभाजमिति यावत्। अनेन तदूर्ध्वं वंशप्रवृत्तिरपि सामर्थ्याद् ध्रियेत[1] इत्यवसेयम्। अनन्ता पुष्कला पुरुषार्थसंपादनेन देशकालानवच्छिन्ना कीर्तिर्यस्य तम्। आत्मानुरूपमित्यर्थः। सुदक्षिणायां तस्या अपि नियमसमविभागिन्याः पुत्रमुखदर्शनलालसायाः तपस्विन्याः फलसंविभागो भवत्विति भावः। अनेन 'तस्यामात्मानुरूपायाम्' इत्याद्यनुसंहितम्॥

1 घि।

पदा—तत इति ॥ ततः सः हस्तौ संमानीय सुदक्षिणायां वंशस्य कर्तारं अनन्तकीर्तिं तनयं ययाचे। समानीय सङ्गतौ कृत्वा। अञ्जलिं बध्वेत्यर्थः मानिताः संमानिता अर्थिनो याचका येन। स्वहस्तेनैवार्जितो वीर इति शब्दो येन। विशेषणाभ्यां राज्ञस्तादृशफललाभयोग्यतोक्ता ॥

सन्तानकामाय तथेति कामं
राज्ञे प्रतिश्रुत्य पयस्विनी सा।
दुग्ध्वा पयः पत्रपुटे मदीयं
पुत्रोपयु[1]ङ्क्ष्वेति तमादिदेश ॥ ६५ ॥

प्रका—सन्तानेति ॥ सन्तानकामाय स्थानाभिनिवेशिन इत्यर्थः। तथेति। इतिस्तथाशब्दस्य प्रतिश्रुतिप्रकारतामाचष्टे। तथाशब्दश्चाभ्युपगमे। ददानीति प्रतिश्रवरूपश्चाभ्युपगमः। पयस्विनीति प्रशंसायां मत्वर्थीयेन तन्मनोरथसम्पादकत्वं तत्पयसो ध्वन्यते। दुग्ध्वोपयुङ्क्ष्वेत्यन्वयः। पत्रपुट इत्यवसरोचितपात्रकथनम्। मदीयमिति अचिन्तितानामप्यर्थानां प्रसावकम् ॥

पदा—सन्तानेति ॥ सा पयस्विनी सन्तानकामाय राज्ञे कामं तथा इति प्रतिश्रुत्य पुत्र त्वं मदीयं पयः पत्रपुटे दुग्ध्वा उपयुङ्क्ष्व इति तम् आदिदेश। पयस्विनीति प्रशंसायां मतुप्। अनेन पयसस्तन्मनोरथसम्पादनसामर्थ्यमुक्तम्। सन्ताने कामोऽभिलाषो यस्य। पत्रपुट इत्यनेन तत्कालदेशोचितं पात्रमुक्तम् ॥

वत्सस्य होमार्थविधेश्च शेषं
गुरोरनुज्ञामधिगम्य मातः।
[2]ऊधस्यमिच्छामि तवो[3]पयोक्तुं
षष्ठांशमुर्व्या इव रक्षितायाः ॥ ६६ ॥

प्रका—अथैवंविधेऽप्यभ्युदये नायकस्यौचित्यम् ...नेन धैर्यातिशयं दर्शयन् वीरव्यभिचारिण्या मतेः परिपोषं दर्शयति—व... ...ेति ॥ 'वत्सप्रस्रवने मेध्यः' इति वचनात्, अतच्छेषस्य निषिद्धत्वाच्च वत्सग्रहणम्। होमार्थो विधिर्दोहनम्। ऊधस्यं पयः। रक्षिताया इति। अत्र मनुः 'राजा हि

1 भु। 2 औ। 3 भो।

फलषड्भागं तस्मादाप्नोति रक्षितात्' इति । यथा प्रजानां देवपित्रतिथिपूजाभृत्यात्मभरणोपयोग्यांशपञ्चकव्यतिरिक्तं भुवः षष्ठं फलांशं रक्षावेतनमादाय गुरुनियुक्तः स्वकृत्येषूपयुञ्जीत तथा तवाप्युचितकृत्योपयुक्तशेषं पयः स्वप्रभावगुप्तायाः कृतरक्षणविडम्बनो गुरुनियोगादहमुपयोक्ष्य इत्यर्थः ॥

पदा—वत्सस्येति ॥ मातः अहं गुरोः अनुज्ञामधिगम्य वत्सस्य होमार्थविधेश्च शेषं तव ऊधस्यं उपयोक्तुमिच्छामि । "विशिष्टविप्रभाषितं शुभग्रहस्य चोदयः शुभग्रहस्य वर्गता त्रयोमहागुणाः स्मृताः" इति वचनात् गुरुनियोगपूर्वकत्वोपादानम् । 'गवामूधोगतं क्षीरं वत्सपानेन शुध्यति' इति वचनात् तच्छेषत्वोपादानम् । होमार्थो विधिर्दोहनविधिः । हुतशेषस्य मेध्यतरत्वात्तच्छेषत्वोक्तिः । ऊधस्यं पयः । रक्षितायां उर्व्याः षष्ठांशमिवेत्युपमा । "रक्षावेतनमादाय गुरुनियुक्तः स्वकृत्येषूपयुञ्जीत" इति कौटल्यः । 'राजा हि फलषड्भागं तस्मादाप्नोति रक्षितात्' इति मनुः ॥

इत्थं क्षितीशेन वसिष्ठधेनु-
विज्ञापिता प्रीततरा बभूव ।
तदन्विता हैमवताच्च कुक्षेः
प्रत्याययावाश्रममश्रमेण ॥ ६७॥

प्रका—इत्थमिति ॥ विज्ञापितेत्यनेन प्रश्रयादि द्योत्यते । प्रीततरेति । स्वशरीरवितरणादपीत्यर्थः । तदन्विता तेनानुगता । अश्रमेणेति कृतकृत्यतयाऽव्यग्रभोगकारिणी धृतिर्दर्शिता । अत्र धेनोरपि कारुणिकत्वात् तदनुग्रहेण कृतकृत्यताभिमानोऽनुसंधेयः ॥

पदा—इत्थमित्येति ॥ क्षितीशेन इत्थं विज्ञापिता वसिष्ठधेनुः प्रीततरा बभूव । विज्ञापिता प्रश्रयतादिपूर्वमभ्यर्थिता । प्रीततरा स्वशरीरवितरणादपीत्यर्थः । तदन्विता हैमवताद् धियत्नमेणाश्रमं प्रत्याययौ च । तदन्विता तेनानुगता । हैमवतात् हिमवत्संबन्धिनः कुक्षेः गुहायाः । अश्रमेणेत्यनेन भक्तानुग्रहकृतया कृतकृत्यतया प्रीतिरुक्ता ॥

तस्याः प्रसन्नेन्दुमुखः प्रसादं
गुरुर्नृपाणां गुरवे निवेद्य ।

प्रहर्षचिह्नानुमितं प्रियायै
शशंस वाचा पुनरुक्तयेव ॥ ६८ ॥

प्रका — तस्या इति ॥ प्रसन्नेन्दुना तुल्यं मुखमस्येति प्रसन्नेन्दुमुखः। अत्रेन्दुवत्कादाचित्कप्रसादं नास्य मुखमिति व्यतिरेकध्वनिः। नृपाणां गुरुर्माननीयः। अनेन यस्य प्रसादं नृपाः प्रार्थयन्ते तस्य धेनुप्रसादेन गुरुं दयितां च वर्धयतः प्रहर्षः शोभत एवेति द्योत्यते। प्रहर्षस्य चिह्नानि मुखनयनप्रसादमन्दस्मितादीनि। अनेन नित्यप्रसन्नस्य मुखरागस्य तदानीं सविशेषता द्योत्यते। वाचेति विशेषणदानार्थमुपादानम्। पुनरुक्तयेवेति गतार्थसाम्यादुत्प्रेक्षा। अत्र प्रत्युद्गमसमय एव नायिकाया दर्शने सत्यपि विविक्त एव वृत्तान्तस्य कथयितुमुचितत्वात् गुरवे निवेद्यशंसनमौचित्यप्राप्तमित्यवसेयम् ॥

पदा — तस्या इति ॥ नृपाणां गुरुः तस्याः प्रसादं गुरवे निवेद्य प्रहर्षचिह्नानुमितं प्रियायै वाचा शशंस। नृपाणां राज्ञाम्। गुरुर्माननीयः। प्रहर्षस्य चिह्नानि मुखप्रसादादीनि तैरनुमितम्। प्रत्युद्गमनवेळायामेवेति शेषः। विशेषणदानार्थं वाचेत्युक्तम्। न ह्यन्यथा पुनरुक्तयेति विशेषणमुपपद्यते। प्रियां प्रति वृत्तान्तकथनस्य विविक्तप्रदेश एवोचितत्वात् आदौ गुरवे निवेदनम्। पुनरुक्तया इव। गतार्थत्वसाम्यमुत्प्रेक्षाहेतुः। प्रसन्नः इन्दुः प्रसन्नेन्दुः तद्वन्मुखं यस्य। अनेन स्वाभाविको मुखराग उक्तः। तदानीं तु तस्मादप्यधिको जात इति भावः। ननु गुरवे निवेद्येत्यत्रापि वाचेति योजना कार्या। प्रहर्षचिह्नानुमानस्य तत्राप्यविशिष्टत्वात्। मैवम्। गुरुर्हि ध्यानमयेन चक्षुषा सकलमपि वृत्तान्तं पूर्वमेवावगतवान् इति न तस्य प्रहर्षचिह्नानुमानं किमपि रामणीयकमापादयति। निवेदनं तु गुरुभक्तिविशेषादौचित्यार्थम्। तस्मात्प्रियायै वाचा शशंसेत्येवान्वयः ॥

स नन्दिनीस्तन्यमनिन्दितात्मा
सद्वत्सलो वत्सनिपीतशेषम्।
पपौ वसिष्ठेन कृताभ्यनुज्ञः
शुद्धं यशो मूर्तमिवातितृष्णः ॥ ६९ ॥

---

1 अ। 2 मूर्तमि।

**प्रका**—सनन्दिनीति ॥ अनिन्दितात्मा प्रशस्तात्मा । तथाविधस्य दिव्यपयःपाने सम्यग्रैव योग्यतेति भावः । सति शोभने वत्सलः स्निग्धः । तस्य यथोचितोपयोगशेषे सतृष्णत्वं युक्तमित्यर्थः । वत्सनिपीतशेषमित्यनेन तत्सह-चरितदोहशेषत्वमर्थादायातम् । वत्सहुताशशेषमिति वा पाठः । शुद्धं निसर्गपूतम् । भूयः बहुतरम् । अतितृष्णः अतिमात्रेच्छः । एष च भूयःपाने हेतुः । अत्र शब्दशक्त्या पिपासित इवेत्यादरातिशयः प्रतीयते । अत्र च नायकापचारस्यैव प्रतिबन्धकत्वात् तस्यैव पानमुक्तम् । नायिकायास्तु सहधर्मचारिणीत्वात् व्रतानुष्ठानमित्यवसेयम् । यशसः पानं श्रवणेनास्वादनम् । अत्र यथा शुद्धस्य स्वयशसः सतृष्णश्रवणे यशोधनस्य धन्यंमन्यता तथा तत्पयःपानेऽपीति द्योत्यते ॥

**पदा**—स इति ॥ सः नन्दिनीस्तन्यं भूयः पपौ । भूयः बहुतरम् । शुद्धं यश इव । यशसः पानं श्रवणेनास्वादनम् । यथात्मीयस्य यशसः श्रवणे कृतार्थताप्रतीतिः तथात्रापीत्युपमया ध्वन्यते । अनिन्दितः प्रशस्तः आत्मा यस्य । अनेन दिव्यपयः पाने योग्यतोक्ता । सति सज्जने वत्सलः स्निग्धः । वत्सहुताशयोः शेषम् । वसिष्ठेन कृतनियोगः । अतितृष्णः अत्यन्ता तृष्णा यस्य । इदं च भूयःपाने हेतुः ॥

प्रातर्यथोक्तव्रतपारणान्ते
प्रास्थानिकं स्वस्त्ययनं प्रयुज्य ।
तौ दम्पती स्वां प्रति राजधानीं
[1]संप्रेषयामास वशी वसिष्ठः ॥ ७० ॥

**प्रका**—प्रातरिति ॥ यथोक्तायाः यथाचोदितायाः व्रतपारणायाः व्रतावसानविधेः अन्ते अवसाने । प्रास्थानिकं प्रस्थानकालोचितम् । स्वस्त्ययनं मङ्गलाशिषम् । ताविति सर्वाकारमधुरौ । सम्प्रेषयामास गन्तुमनुजज्ञे । वशी कामाद्यनभिभूतः । अत्र राजधान्या अवश्यगन्तव्यत्वात् तथा वत्सलोऽपि मुनिस्तथा दुस्त्यजावपि तौ वशित्वाद्विसृष्टवानित्यर्थः ॥

**पदा**—प्रातरिति । वसिष्ठः प्रातः यथोक्तव्रतपारणान्ते प्रास्थानिकं स्वस्त्ययनं प्रयुज्य तौ दम्पती स्वां राजधानीं प्रति सम्प्रेषयामास । यथोक्तायाः

1 प्रस्थाप ।

यथाचोदितायाः। विध्यनुसारिण्या इत्यर्थः। यथोक्तमिति क्रियाविशेषणं वा। व्रतपारणायाः व्रतावसानविधेः अन्ते अवसाने। प्रास्थानिकं प्रस्थानकालोचितम्। स्वस्त्ययनं मङ्गळाशिषम्। सम्प्रेषयामास गन्तुमनुज्ञातवान्। वशी जितेन्द्रियः। विरहकातरोऽपि जितेन्द्रियत्वात्प्रेषितवानित्यर्थः॥

प्रदक्षिणीकृत्य हुतं हुताश-
मनन्तरं भर्तुररुन्धतीं च।
धेनुं सवत्सां च नृपः प्रतस्थे
सन्मङ्गळोदग्रतरप्रभावः ॥ ७१ ॥

**प्रका — प्रदक्षिणीकृत्येति॥** प्रतस्थे गन्तुमारभत। सद्भिः शोभनैर्मङ्गळैः। अथवा सति शोभने हुताशादौ मङ्गळानि प्रदक्षिणशिखत्वादीनि। तैः उदग्रतरः प्रभावो यस्य। अत्र सर्वदेवतामयत्वाद्धुताशस्येतरेषां तु यथापूर्वं गौरवातिशयात् प्रदक्षिणीकरणे विवक्षित एव क्रमः॥

**पदा — प्रदक्षणीकृत्येति॥** नृपः हुतं हुताशं भर्तुरनन्तरम् अरुन्धतीं च सवत्सां धेनुं च प्रदक्षिणीकृत्य प्रतस्थे। सर्वदेवतामयत्वादादौ हुताशस्य प्रदक्षिणीकरणं, भर्तुरनन्तरमरुन्धत्याः, धेनोस्तु वत्सेन सहैव तदानीं तयोरवियुक्तत्वादिति प्राधान्यक्रमोऽत्र प्रदक्षिणे विवक्षितः। प्रतस्थे गन्तुमारेभे। सद्भिः अत्यन्तशोभनैः मङ्गळैः सुनिमित्तैः उदग्रतरः अत्यन्तप्रवृद्धः प्रभावो यस्य। तदानीं तु पूर्वस्मादपि प्रभावाधिक्यं जातमित्यर्थः॥

श्रोत्राभिरामध्वनिना रथेन
स धर्मपत्नीसहितः सहिष्णुः।
ययावनुत्खातसुखेन मार्गं
स्वेनेव पूर्णेन मनोरथेन ॥ ७२ ॥

**प्रका — श्रोत्राभिरामेति॥** ध्वनिः शब्दमात्रं तद्वाचकवाक्यं च। सहिष्णुरिति। तस्य कथमेवं मनोरथः पूर्णो न भवेदिति भावः। उत्खातो विषमभूभागः प्रतिबन्धश्च तदभावोऽनुत्खतः। तेन सुखेनानुकूलेन। मनोरथस्याप्यत्र पूर्णस्य प्रतिप्रयाणाङ्गत्वमवसेयम्॥

पदा — श्रोत्राभिरामेति ॥ सः धर्मपत्नीसहितः रथेन ययौ। अत्र उपमामाह—पूर्णेन स्वेन मनोरथेनेवेति। रथविशेषणानि मनोरथेऽपि योजनीयानि। श्रोत्रयोरभिरामो ध्वनिः शब्दमात्रं मनोरथवाचकशब्दश्च यस्य। रथस्वनस्य विशेषेण श्रोत्राभिरामत्वं मनसः प्रसादात्। "चित्ते तु सुखिते सर्वं भवेत्सुखमयं जगत्। उपानद्गूढपादस्य ननु चर्मास्तृतैव भूः" इति वचनादिति भावः। मनोरथवाचकस्य शब्दस्य श्रोत्राभिरामत्वं प्रसिद्धम्। उक्तं च नैषधकाव्ये 'तृणेऽपि तन्व्या नळनामनि श्रुते' इत्यादि। सहिष्णुः शीतोष्णादिसहनशीलः। अनेन मनोरथपूरणे हेतुरुक्तः। मार्गे। अनुत्खातसुखेन उत्खातो विषमभूभागः प्रतिबन्धश्च तदभावोऽनुत्खातः तेन सुखेनानुकूलेन ॥

तमाहितौत्सुक्यमदर्शनेन
प्रजाः प्रजार्थव्रतकर्शिताङ्गम्।
नेत्रैः पपुस्तृप्तिमनाप्नुवद्भि-
र्नवोदयं नाथमिवौषधीनाम् ॥ ७३ ॥

प्रका — तमिति ॥ आहितमौत्सुक्यं येन तम्। प्रजार्थेन प्रजा मदूर्ध्वमराजका मा भूवन्नित्यप्यर्थो विवक्षितः। पपुरिति दर्शने पानोपचारः। तत्प्रयोजनं चासंख्यमनुसन्धेयम्। तृप्तिमनाप्नुवद्भिरिति, यथा यथा दृश्यते तथा तथा नवोऽभवदित्यर्थः। प्रजार्थेति चन्द्रपक्षे प्रजानां त्रैलोक्यान्तर्वर्तिनां देवपितृनराणामर्थे आप्यायने यद्व्रतं नियमः अमृतविसृष्टिरूपः तेन कर्शितं कलाशेषमङ्गं यस्य। यदुक्तं, यस्मिन् सोमः सुरपितृनरैरन्वहं पियमानः क्षीणः क्षीणः प्रविशति यतो वर्धते चापि भूयः। यस्मिन्वेदा मधुनि सरधाकारवद्भान्ति चाग्रे तच्चण्डांशोरमितममृतं मण्डलस्थं प्रपद्ये" इति। न तु नवोदयत्वमपि साधारणम्। विशिष्टस्यैवोपमानत्वात्, तस्यैव च इतरधर्मद्वययोगात् ॥

पदा — तमिति ॥ प्रजास्तं नेत्रैः पपुः। पपुरिति दर्शने पानोपचारः। तत्फलं च बहुविधमनुसन्धेयम्। नवोदयम् ओषधीनां नाथमिव। नवः अभिनवः उदयः सूर्यात्पृथग्भावो यस्य। चिरकालदर्शनेन हेतुना आहितं विहितम् औत्सुक्यं येन। चन्द्रोऽप्यदर्शनेनौत्सुक्यमापादयत्येव। प्रजा सन्ततिरर्थः प्रयोजनं यस्य तेन। अथवा प्रजार्थेन व्रतेन, मदूर्ध्वं प्रजा अराजका मा भूवन्निति प्रजार्थत्वं व्रतस्य। कर्शितं कृशतां नीतं अङ्गं यस्य। चन्द्रपक्षे

तु त्रैलोक्यवर्तिनां जनानां अमृतप्रदानरूपेण व्रतेन नियमेन कर्शितं कलामात्रशेषमङ्गं यस्य। तदुक्तं 'यस्मिन् सोमः सुरपितृनरैरन्वहं पीयमानः' इति। अत एव तृप्तिमनाप्नुवद्भिस्तृप्तिमगच्छद्भिः ॥

पुरन्दरश्रीः पुरमुत्पताकं
प्रविश्य पौरैरभिनन्द्यमानः ।
भुजे भुजङ्गेन्द्रसमानसारे
भूयः स भूमेर्धुरमाससञ्ज ॥ ७४ ॥

**प्रका—पुरन्दरेति ॥** उत्पताकं राजप्रवेशादिषु पताकोच्छ्रयणं पौराणामाचारः। पौरैर्लाजविकिरणादिभिरभिनन्द्यमानः। भूय इत्यनेन 'सचिवेषु निचिक्षिपे' इत्यनेन यत्प्रत्यादानं सूचितं तदनुसंहितम्। आससञ्ज अर्पयामास। स्वायत्तां सिद्धिमकरोदित्यर्थः ॥

**पदा—पुरन्दरेति ॥** सः पुरं प्रविश्य भूमेर्धुरं भूयः भुजे आससञ्ज। भूमेर्धुरं रक्षाव्यापारम्। भूयः पुनरपि। आससञ्ज अर्पयामास। पुरन्दरस्य देवेन्द्रस्य श्रीरिव श्रीर्यस्य। उत्पताकमुच्छ्रितपताकम्। पौरैर्लाजविकिरणादिभिः अभिनन्द्यमानः। भुजङ्गेन्द्रोऽनन्तः तेन समानसारे तुल्यशक्तौ। अनेन भूभरणसामर्थ्यमुक्तम् ॥

अथ नयनसमुत्थं ज्योतिरत्रेरिव द्यौः
सुरसरिदिव तेजो वह्निनिष्ठ्यूतमैशम् ।
नरपतिकुलभूत्यै गर्भमाधत्त राज्ञी
गुरुभिरभिनिविष्टं लोकपालानुभावैः ॥ ७५ ॥

**प्रका**—अथानन्तरसर्गार्थस्य निर्वहणसन्धेः बिन्दुमुपक्षिपति—**अथेति ॥** नयनसमुत्थं ज्योतिरिति चन्द्रः। 'पदार्थे वाक्यवचनमिति प्रौढिप्रकारश्चायम्। वह्निना निष्ठ्यूतं क्षिप्तम्। 'नुत्तनुन्नास्तनिष्ठ्यूताविद्धक्षिप्तेरिताः समाः' इति सिंहः। ऐशं तेज इति स्कन्दोत्पत्तिबीजम्। आधत्तेति। आङो ग्रहणार्थत्वात् गृहीतवतीत्यर्थः। गुरुभिरनल्पैः। अभिनिविष्टमनुप्रविष्टम्। लोकपालानामनुभावैः शक्तिभिः। अत्र मनुः 'अष्टानां लोकपालानां वपुर्धारयते नृपः' इति। अत्र चन्द्रस्योक्तन्यायेन त्रैलोक्ययोगावहत्वात् स्कन्दस्य च भगवतो

भुवनक्षेमायोत्पन्नत्वात् तदुभयोपमित्या गर्भस्य भुवनयोगक्षेमावहत्वं द्योत्यम् । अत एव भूत्यै इत्युक्तम् । भूतिश्च नरपतिकुलस्य प्रजाभूतिहेतुत्वम् । तदुक्तं 'प्रजासुखे सुखं राज्ञः प्रजानां च हिते हितम्' इति । तद्योग्यत्वोपपादनं च चतुर्थपादेन कृतम् । अयं नियताप्त्यात्मावमर्शसन्धिः । अङ्गानां तु यथासंभवं प्रयोगः । यदाह —'सन्धिसन्ध्यङ्गघटनं रसादिव्यक्त्यपेक्षया' इत्यादि ।।

इत्यरुणगिरिनाथविरचितायां रघुवंशप्रकाशिकायां
द्वितीयः सर्गः ।।

**पदा — अथेति ।।** अथ राज्ञी नरपतिकुलभूत्यै गर्भम् आधत्त । नरपतिकुलस्य भूत्यै समृद्धयै । आधत्त गृहीतवती । आङोऽत्र ग्रहणार्थत्वात् । द्यौरत्रेर्नयनसमुत्थं ज्योतिरिव । द्यौराकाशः । अत्रेरत्रिमहर्षेः नयनात् समुत्तिष्ठतीति नयनसमुत्थम् । तथाभूतं ज्योतिः चन्द्रमित्यर्थः । "ऋक्षेशः स्यादत्रिनेत्रप्रसूतिः" इति हलायुधः । सुरसरित् वह्निनिष्ठ्यूतमैशं तेज इव । सुरसरित् गङ्गा । वह्निना निष्ठ्यूतं निक्षिप्तम् । 'नुत्तनुन्नास्तनिष्ठ्यूताविद्धक्षिप्तेरिताः समाः' इत्यमरः । ईशस्य परमेश्वरस्य इदमैशं तेजो रेतः । परमेश्वरेण पार्वत्यामुत्पादितं तेजो देवी वह्नौ निक्षिप्तवती, स तु गङ्गायामिति सुब्रह्मण्योत्पत्तौ प्रसिद्धिः । आभ्यामुपमानाभ्यां चन्द्रस्य पूर्वोक्तन्यायेन त्रैलोक्ययोगावहत्वात् स्कन्दस्य च भुवनक्षेमायोत्पन्नत्वात् गर्भस्य भुवनयोगक्षेमावहत्वं द्योत्यते । गुरुभिर्लोकपालानुभावैरभिनिविष्टम् । गुरुभिरनल्पैः । लोकपालानामनुभावैः शक्तिभिः । अभिनिविष्टमनुप्रविष्टम् । अत्र मनुः 'अष्टानां लोकपालानां मात्राभिर्निर्मितो नृपः' इति । अनेनोत्तरसर्गार्थबिन्दुनिक्षेपः कृतः ।।

इति श्रीकृष्णप्रियशिष्यस्य नारायणस्य कृतौ रघुवंशव्याख्यायां
पदार्थदीपिकायां द्वितीयः सर्गः ।।



# तृतीयः सर्गः ।

— o —

अथेप्सितं भर्तुरुपस्थितोदयं
सखीजनोद्वीक्षणकौमुदीमुखम् ।
निदानमिक्ष्वाकुकुलस्य सन्ततेः
सुदक्षिणा दौहृदलक्षणं दधौ ॥ १ ॥

प्रका -- अथ कुमारोदयं वर्णयितुमुपक्रमते--अथेति ॥ ईप्सितं मनोरथं पुत्रलाभादिरूपम् । उपस्थितः उदयः आविर्भावः यस्य । साक्षाद् भूतमित्यर्थः । अयं तु सर्वशेषः । सखीजनस्योदञ्चितानां वीक्षणानां चन्द्रिकाप्रारम्भम् । अथवा -- कौमुदी दीपोत्सवपौर्णमासी तस्या मुखम् । सा हि सर्वस्य हर्षहेतुरुत्सवदिनम् । विशेषतः स्त्रीबालानाम् । तथा च भवभूतिः-- 'बन्धुतानयनकौमुदीमहः' इति । कौमुदीमहमिति वात्र पाठः । सन्ततेरूर्ध्वमविच्छेदस्य । निदानमादिकारणम् । तच्चादृष्टविशेषः । एतानि च विशिष्टेप्सितमुखनिदानानि कृतकृत्यताभिमानादिहेतुत्वेन दौहृदलक्षणे आरोप्यन्त इति मालारूपकम् । अत्रैव च कञ्चिद्विशेषलेशमाश्रित्य उल्लेखालङ्कारं केचिदाहुः । 'एकस्यापि निमित्तवशादनेकधा ग्रहणे उल्लेखः इति । अत्र कृतकृत्यताभिमानहेतुत्वेन भर्तुराविर्भूतं आत्मेप्सितमेवेति हर्षहेतुत्वेन सखीजनोद्वीक्षणानां कौमुदीमुखमेवेत्यभ्युदयहेतुत्वेन कुलस्योर्ध्वमविच्छेदनिदानमदृष्टविशेष एवेति च एक एव दौहृदलक्षणलक्षणोऽर्थः अनेकधा प्रतिभाति । अत्र च रुच्यादयः कारणम् । यदाह-- 'यथारुचि यथार्थित्वं यथाव्युत्पत्ति भिद्यते । आभासोऽप्यर्थ एकस्मिन्ननुसन्धानसाधितः' इति । तत्र भर्तर्यर्थित्वं सखीषु रुचिः कुले व्युत्पत्तिः । तस्य हि सन्ततिहेतुत्वेन पुण्यसंचये व्युत्पत्तिः । यथाह --महामुनेर्विश्रवसस्तपोभिर्निधाय बीजं यदि नः कुलं स्यात्' इति । एवंभूतं दौहृदलक्षणं गर्भचिह्नम् । वक्ष्यमाणस्वरूपम् । दधौ । द्विहृदयां नारीं दौहृदिनीत्याचक्षते' इति संग्रहे दर्शनात् गर्भिणी गर्भहृदयेन स्वहृदयेन च द्विहृदया भवतीति । तद्भावश्च दौहृदम् । तेन च गर्भ उच्यते ॥

**पदा**—अथ दिलीपस्य कुमारोत्पत्तिं वर्णयितुमुपक्रमते—**अथेति** ॥ अथ सुदक्षिणा दौहृदलक्षणं दधौ। गर्भहृदयेन स्वहृदयेन च द्वे हृदये यस्याः सा दौहृदिनी। यदुक्तं संग्रहे—'द्विहृदयां नारीं दौहृदिनीत्याचक्षते' इति। तद्भावो दौहृदम्। तस्माद्गर्भ एव दौहृदमित्युच्यते। गर्भचिह्नं दधावित्यर्थः। तच्च मुखपाण्डुत्वादीनि। भर्तुरुपस्थितोदयं ईप्सितम्। उपस्थितः प्राप्तः उदयः आविर्भावो यस्य। ईप्सितं मनोरथम्। भर्तुरभिमतमेव वस्तु साक्षाद्भूतमिव दृश्यमानमित्यर्थः। सखीजनानामुद्वीक्षणस्य उदञ्चितस्य वीक्षणस्य कौमुदीमुखं चन्द्रिकाप्रारम्भः। चन्द्रिकाप्रारम्भो हि हृदयमाह्लादयति। इक्ष्वाकुकुलस्य सन्ततेः निदानम्। 'निदानं त्वादिकारणम्' इति सिंहः। उपस्थितोदयमिति सर्वत्र योजनीयम्। अत्रैकमेव गर्भलक्षणं कृतकृत्यताभिमानहेतुत्वादिभिर्निमित्तैरनेकधा प्रतिभाति इत्युल्लेखालङ्कारः 'एकस्यापि निमित्तवशादनेकधा ग्रहणमुल्लेखः' इति ॥

शरीरसादादसमग्रभूषणा
मुखेन सालक्ष्यत लोध्रपाण्डुना ।
तनुप्रकाशेन विचेयतारका
प्रभातकल्पा शशिनेव शर्वरी ॥ २ ॥

**प्रका**—अथ तत्प्रकारं दर्शयति—**शरीरेति** ॥ सादो बलहानिः। कार्श्यं च। मुखेनेतीत्थंभूतलक्षणे तृतीया। लोध्रपाण्डुनेति लावण्यापचयः प्रतीयते। विचेया मृग्यास्तारका यस्याः विरळतारकेत्यर्थः। प्रभातकल्पा अवसितप्राया। एतदुक्तधर्मसिध्यङ्गम्। इतराणि चत्वारि विशेषणानि बिम्बप्रतिबिम्बभावेनोपात्तानि ॥

**पदा**—**शरीरेति** ॥ सा लोध्रपाण्डुना मुखेन अलक्ष्यत। लोध्रवत्पाण्डुना मुखेनेत्युपलक्षणे तृतीया। अलक्ष्यत दृष्टाभूत्। जनैरिति शेषः। शरीरसादादसमग्रभूषणा। शरीरस्य सादो बलहानिः तस्मात् असंपूर्णाभरणा। विचेयतारका प्रभातकल्पा शर्वरी तनुप्रकाशेन शशिनेव। विचेया मृग्यास्तारका यस्याः। विरळनक्षत्रेत्यर्थः। प्रभातकल्पा प्रभातप्राया। शर्वरी रात्रिः। तनुप्रकाशेन विरळकान्तिना। अत्र विशेषणानां बिम्बप्रतिबिम्बभावेनावस्थानम्। प्रभातकल्पत्वं तु साम्यसिध्यर्थम् ॥

तदाननं मृत्सुरभि क्षितीश्वरो
रहः समाघ्राय न तृप्तिमाययौ ।
करीव सिक्तं पृषतैः पयोमुचां
शुचिव्यपाये वनराजिपल्वलम् ॥ ३ ॥

**प्रका**—तदाननमिति ॥ मृत्सुरभीति । गर्भिण्यो मृद्भक्षणं कुर्वन्तीति । रहः विविक्ते । शुचिव्यपाये ग्रीष्मात्यये । पल्वलमल्पसरः । 'वेशन्तः पल्वलं चाल्पसरः' इति सिंहः । जलाशयः शुष्कस्सन् सिक्तः केवलस्थलात् सुरभिर्भवतीति पल्वलोपादानम् । वनराजिर्नायिकाप्रतिवस्तुतयोपात्ता ॥

**पदा**—तदाननमिति ॥ क्षितीश्वरः रहः तदाननं समाघ्राय तृप्तिं न आययौ । रहः विजने । तदाननं तस्या आननम् । तस्य तदानीं विशेषमाह—मृत्सुरभीति । मृदा सुरभि घ्राणप्रीतिकरम् । करी शुचिव्यपाये पयोमुचां पृषतैः सिक्तं वनराजिपल्वलमिव । शुचिव्यपाये ग्रीष्मावसाने । पयोमुचां मेघानाम् । पृषतैर्जलबिन्दुभिः । वनराजिर्वनसमूहः । पल्वलमल्पसरः । 'वेशन्तः पल्वलं चाल्पसरः' इत्यमरः । जलाशयस्य शुष्कस्य वृष्टिपाते स्थलान्तरात् सौरभ्याधिक्यमिति अत्र तदुदाहरणं कृतम् ॥

दिवं मरुत्वानिव भोक्ष्यते भुवं
दिगन्तविश्रान्तरथो हि तत्सुतः ।
अतोऽभिलाषे प्रथमं तथाविधे
मनो बबन्धान्यरसान् विलङ्घ्य सा ॥ ४ ॥

**प्रका**—अत्राक्षिप्ते मृद्भक्षणे हेतुं कविरुत्प्रेक्षते—दिवमिति ॥ भोक्ष्यते अभ्यवहरिष्यति । 'भुजोऽनवने' इत्यात्मनेपदम् । भौमानर्थानात्मसात्करिष्यतीत्यर्थः । दिगन्तेति चक्रवर्तीत्यर्थः । हिर्यस्मादित्यर्थे । अभिलाषे आस्वाद्ये । तथाविधे भूविकारात्मके मृत्तिकारसे । विलङ्घ्य अतिक्रम्य । अत्र तथाभिलाषस्य भाव्यर्थो हेतुत्वेनोत्प्रेक्षितः । ये तु वास्तवमेव हेतुभावं मन्वते ते गर्भिणीस्वभावानभिज्ञा एव । उत्प्रेक्षा च व्यञ्जकाप्रयोगेऽप्यङ्गीकृतैव । यथा—'महिलासहस्सभरिए तुह हिअए सुहअ सा अमाअंती दिअहं अणण्णअंमा अंगं तणुअं पि तणुएइ' इति । यथा समुच्चयादयश्चाद्यप्रयोगेऽपि ॥

**पदा**—अत्राक्षिप्ते मृद्भक्षणे हेतुं कविरुत्प्रेक्षते—**दिवमिति** ॥ तत्सुतः दिगन्तविश्रान्तरथः मरुत्वान् दिवमिव भुवं भोक्ष्यते हि। अतः सा प्रथमं अन्यरसान् विलङ्घ्य तथाविधे अभिलाषे मनः बबन्ध। तत्सुतः तस्याः सुतः। दिगन्तेषु विश्रान्त उपरतप्रसरो रथो यस्य। अनेन चक्रवर्तित्वमुक्तम्। मरुत्वानिन्द्रः। दिवं स्वर्गम्। भोक्ष्यते अभ्यवहरिष्यति। 'भुजोऽनवने' इत्यात्मनेपदम्। भौमानर्थानात्मसात्करिष्यतीत्यर्थः। हिशब्दो यस्मादर्थे। अन्यरसान् अन्नादिरसान्। विलङ्घ्य अतिक्रम्य। तथाविधे भूविकारात्मके मृद्रूपे। अभिलाषे आस्वाद्यवस्तुनि। अत्र महाकविस्तथाविधस्य गर्भिणीस्वभावरूपस्याभिलाषस्य भाव्यर्थं हेतुत्वेनोत्प्रेक्षितवान्। उत्प्रेक्षाव्यञ्जकः शब्दस्त्वप्रयुक्तोऽपि कल्प्ये। यथा—'महिळासहंसभरिएतुहहिअएसुहअसाअमा। अंतीदि अहं अणंणअंमाअंगतणुअंपितणुएइ इति'॥

न मे ह्रिया शंसति किञ्चिदीप्सितं
स्पृहावती वस्तुषु केषु मागधी।
इति स्म पृच्छत्यनुवेलमादृतः
प्रियासखीरुत्तरकोसलेश्वरः ॥ ५ ॥

**प्रका**—**न मे इति** ॥ किञ्चित् किमपि। न शंसति। पृष्टापीति शेषः। मागधीत्यभिजननामोदीरणं बहुमानं द्योतयति। अनुवेलमनुक्षणम्। उत्तरकोसलशब्दः उत्तरेषां कोसलानां भूमण्डलात् सर्वस्मादपि सुलभसमृद्धिकत्वेनेप्सितसंपादनशक्ततां तदीश्वरस्य द्योतयति॥

**पदा**—**न मे इति** ॥ उत्तरकोसलेश्वरः अनुवेलं प्रियासखीः इति पृच्छति स्म। दिलीपः प्रियायाः सखीजनमनुक्षणमेवं पृष्टवान्। मागधी केषु वस्तुषु स्पृहावती ह्रिया मे ईप्सितं किञ्चिन्न शंसति। स्पृहावती इच्छावती। मे मह्यम्। किञ्चिदपि न वदति। आदृतः कृतादरः। 'मातृजं ह्यस्य हृदयं मातुश्च हृदयेन तत्। संबद्धं तेन गर्भिण्या नेष्टं श्रद्धाविमाननम्' इति वाहटः॥

उपेत्य सा दौहददुःखशीलतां
यदेव वव्रे तदपश्यदाहृतम्।
न हीष्टमस्यास्त्रिदिवेऽपि भूपते-
रभूदनासाद्यमधिज्यधन्वनः ॥ ६ ॥

प्रका—इत्थं सखीमुखेन पृष्टायाः किमित्याह—उपेत्येति ॥ दोहदेति वा पाठः। 'दोहदं तु नरेच्छायामिति सिंहो नरे पुनः। दत्त आहाथ गर्भिण्या इच्छाभेदे प्रकीर्तितम्' इति केशवः। यदेव। न तु तत्प्रतिनिधिः कश्चित्। अथ च वरणमेवोपाधिराहरणे। न तु सुकरत्वादि। आहृतमेवेत्यप्यन्वयः। न त्वाहरिष्यमाणं आह्रियमाणं वा। अपश्यत्। न त्वशृणोत्। अस्येति वा पाठः। अधिज्यधन्वन इति विक्रमव्यवसितस्येत्यर्थः ॥

पदा—उपेत्येति ॥ सा दौहददुःखशीलताम् उपेत्य यत् वव्रे तत् आहृतमेवापश्यत्। दौहदं गर्भिण्या इच्छाभेदः तेन दुःखशीला तस्य भावः तत्ताम्। दौहदं तु नपी(?)च्छायामिति सिंहो नरे पुनः। दत्त आहाथ गर्भिण्या इच्छाभेदे प्रकीर्तित'मिति केशवः। आहृतमेवापश्यत्। न त्वाहरिष्यमाणं शुश्राव। वरणमेवाहरणे हेतुः न सुकरत्वादि इति भावः। तत्र हेतुमाह—नहीति। भूपतेरस्याः इष्टं त्रिदिवेऽपि अनासाद्यं नाभूत् हि। त्रिदिवेऽपि। न भूमण्डलमात्रे। अनासाद्यं अप्राप्यम्। नाभूत्। हिर्यस्मादर्थे। तदपि विक्रममात्रेणैवेत्याह—अधिज्यधन्वन इति ॥

क्रमेण निस्तीर्य च दौहृदव्यथां
प्रचीयमानावयवा रराज सा।
पुराणपत्रापगमादनन्तरं
लतेव संनद्धमनोज्ञपल्लवा ॥ ७ ॥

प्रका—अथ द्वितीयामवस्थां वर्णयति—क्रमेणेति ॥ क्रमः कालान्तरोपनिपातः। निस्तीर्यातिक्रम्य। दौहृदव्यथां गर्भोपक्रमपीडाम्। प्रचीयमाना वर्धमाना अवयवा यस्याः। आदावपचयः पश्चादुपचय इति गर्भस्वभावः। सन्नद्धं संजातम्। यथा—'सन्नद्धं यदपि स्थितं कुरवकम्' इति ॥

पदा—अथ गर्भस्य द्वितीयामवस्थामाह—क्रमेणेति ॥ क्रमेण दौहृदव्यथां निस्तीर्य च प्रचीयमानावयवा सा रराज। क्रमः कालान्तरप्राप्तिः। दौहृदव्यथां गर्भोपक्रमपीडाम्। निस्तीर्य अतिक्रम्य। प्रचीयमानाः वर्धमानाः अवयवाः यस्याः। कर्मकर्तरि प्रयोगः। गर्भादाववयवानां परिक्षयः पुनश्च क्रमेण वर्धनमिति स्वभावः। अत्रोपमा—पुराणेति। पुराणपत्रापगमात्

अनन्तरं सन्नद्धमनोज्ञपल्लवा लतेव। संनद्धाः संजाता मनोज्ञा मनोहराः पल्लवा यस्याः ॥

दिनेषु गच्छत्सु नितान्तपीवरं
तदीयमानीलमुखं स्तनद्वयम् ।
तिरश्चकार भ्रमराभिलीनयोः
सुजातयोः पङ्कजकोशयोः श्रियम् ॥ ८ ॥

प्रका—तृतीयामवस्थां वर्णयति—दिनेष्विति ॥ निमित्ते सप्तमी। तिरश्चकार परिबभूव। परिभूतोऽतर्हितवद्भवतीत्यन्तर्धेरुपचारात् 'तिरोऽन्तर्धौ' इति गतिसंज्ञायां 'तिरसोऽन्यतरस्याम्' इति सकारः। भ्रमराभ्यामभिलीनयोरधिष्ठितयोः। सुजातयोः सुन्दरयोः॥

पदा—तृतीयामवस्थामाह—दिनेष्विति ॥ दिनेषु गच्छत्सु नितान्तपीवरं आनीलमुखं तदीयं स्तनद्वयं सुजातयोः भ्रमराभिलीनयोः पङ्कजकोशयोः श्रियं तिरश्चकार। दिनेषु गच्छत्स्विति निमित्तसप्तमी। नितान्तमत्यन्तं पीवरं महत्। आभीक्ष्ण्येन नीलं मुखं यस्य। सुजातयोः सुन्दरयोः। भ्रमराभ्यामभिलीनयोरधिष्ठितयोः। तिरश्चकार परिबभूव। परिभूतोऽन्तर्हितवद्भवतीत्यन्तर्धेरुपचारात 'तिरोऽन्तर्धौ' इति गतिसंज्ञायां 'तिरसोऽन्यतरस्याम्' इति सकारः॥

निधानगर्भामिव सागराम्बरां
शमीमिवाभ्यन्तरलीनपावकाम् ।
नदीमिवान्तःसलिलां सरस्वतीं
नृपः ससत्त्वां महिषीममन्यत ॥ ९ ॥

प्रका—तस्यामभिव्यक्तगर्भायां राज्ञः प्रतीतिमाह—निधानेति ॥ निधानं निधिः। सागराम्बरामिति विशेषणमेव प्रयुक्तं तत एव भुवः प्रतीतेः। यथाह कविसमये वामनः—'विशेषणमात्रप्रयोगो विशेष्यप्रतिपत्तौ' इति। शमीमिति वह्निगर्भा शमीति प्रसिद्धिः। अन्तस्सलिलां गूढप्रवाहा सरस्वतीति च प्रसिद्धम्। ससत्वां सजन्तुकां सगर्भामित्यर्थः। यथाह—'आपन्नसत्वायां महिष्यामृत्विजश्चरुमैन्द्रावार्हस्पत्यं निर्वपेयुः' इति। अत्रोपमानेभ्यः क्रमात्

गर्भस्य सर्वार्थसाधनक्षमत्वतेजस्वित्वपावनत्वानि प्रतीयन्ते । निगूढसारत्वं त्वनुगतमेव ॥

पदा—निधानेति ॥ नृपः ससत्त्वां महिषीं निधानगर्भां सागराम्बरामिव अभ्यन्तरलीनपावकां शमीमिव अन्तःसलिलां सरस्वतीं नदीमिवामन्यत । निधानं निधिः गर्भेऽन्तर्भागे यस्याः । सागराम्बरां भुवम् । अभ्यन्तरे लीनः स्थितः पावको यस्याः । अग्निगर्भः शमीवृक्ष इति प्रसिद्धिः । अन्तर्भागे सलिलं जलप्रवाहो यस्याः । गूढप्रवाहा सरस्वती नदीति प्रसिद्धम् । चकारोऽर्थाद् द्रष्टव्यः । ससत्त्वां सजन्तुकां सगर्भामित्यर्थः । 'आपन्नसत्वा स्याद् गुर्विण्यन्तर्वत्नी च गर्भिणी' इत्यमरः । अत्रोपमात्रयेण क्रमाद्गर्भस्य सर्वार्थसाधनक्षमत्वं तेजस्वित्वं पावनत्वं च प्रतीयते ॥

प्रियानुरागस्य मनःसमुन्नते-
र्भुजार्जितानां च दिगन्तसम्पदाम् ।
यथाक्रमं पुंसवनादिकाः क्रिया
धृतेश्च धीरः सदृशीर्व्यधत्त सः ॥ १० ॥

प्रका—प्रियेति ॥ मनस्समुन्नतेर्महेच्छतायाः । भुजार्जितानामिति पुनरपि सुसंपादनत्वादि द्योत्यते । दिशामन्ता अन्तराळानि तेषां संपदः समृद्धयः । बहुवचनेन नानाविधत्वमुक्तम् । यथाक्रमं यथाविधि । 'क्रमोऽङ्घ्रौ परिपाट्यां च वेदपाठान्तरे विधौ' इति केशवः । धृतेः सन्तोषस्य । 'धृतिर्धारणसन्तोषशौर्यधैर्येषु कीर्त्यते' इति केशवः । सदृशीरनुरूपाः । अपरिमितद्रव्यत्यागोपबृंहिता इत्यर्थः । धीरः प्राज्ञः । उचितवेदीत्यर्थः । अत्र तुल्ययोगिता ॥

पदा—प्रियेति ॥ स यथाक्रमं पुंसवनादिकाः क्रियाः व्यधत्त । यथाक्रमं यथाविधि । 'क्रमोऽङ्घ्रौ परिपाट्यां च वेदपाठान्तरे विधौ' इति केशवः । आदिशब्देन सीमन्तादेरुपादानम् । प्रियानुरागस्य मनस्समुन्नतेः भुजार्जितानां दिगन्तसंपदां धृतेः च सदृशीः । मनस्समुन्नतिरौन्नत्यम् । दानशीलतेति यावत् । स्वभुजेनैवार्जितानाम् । अनेन पुनरपि संपादयिष्यामीति द्योत्यते । दिगन्तसंपदामिति आर्जनस्य विषयबाहुळ्यमुक्तम् । धृतेः सन्तोषस्य । पुत्र-



1 गर्भगतस्य ।

वानस्मीति प्रीतेरित्यर्थः। 'धृतिर्धारणसन्तोषशौर्यधैर्येषु कीर्त्यते' इति केशवः। धीरः प्राज्ञः। धीरो मनीषी ज्ञः प्राज्ञः सङ्ख्यावान् पण्डितः कविरिति सिंहः। उचितवेदीति यावत्। अनेकद्रव्यदानोपबृंहिताः क्रियाः कृतवानित्यर्थः॥

सुरेन्द्रमात्राश्रितगर्भगौरवात्
प्रयत्नमुक्तासनया गृहागतः।
तयोपचाराञ्जलिखिन्नहस्तया
ननन्द पारिप्लवनेत्रया नृपः ॥ ११ ॥

प्रका—सुरेन्द्रेति॥ सुरेन्द्राणां मात्रा लेशाः अंशा इत्यर्थः। अत्र मनुः—'इन्द्रानिलयमार्काणामग्नेश्च वरुणस्य च। चन्द्रवित्तेशयोश्चैव मात्रा निर्हृत्य शाश्वतीः। अष्टाभिश्च सुरेन्द्राणां मात्राभिर्निर्मितो नृपः' इति। तदाश्रितस्य गर्भस्य गौरवात् लोकातिक्रान्तादित्यर्थः। एतच्चालस्यस्य विभावः। प्रयत्नमुक्तासनयेत्यनुभावः। प्रशब्देन गर्भमात्रसुलभाद्यत्नात्प्रकर्षो गम्यते। गृहागतइति प्रत्युत्थानाञ्जल्योराचारसिद्धयोर्हेतुरुक्तः। तौ च श्रमस्य विभावः। पारिप्लवनेत्रता चानुभावः। पारिप्लवमधीरम्। 'पारिप्लवं त्वधीरं चलाचलं चञ्चलं च कथयन्ति' इति हलायुधः। हेत्वर्थे तृतीया॥

पदा—सुरेन्द्रेति॥ गृहागतो नृपस्तया ननन्द। तयेति हेतौ तृतीया। सुरेन्द्रमात्राश्रितगर्भगौरवात् प्रयत्नमुक्तासनया। सुरेन्द्राणां मात्रा अंशास्ताभिराश्रितस्य गर्भस्य गौरवात्। अत्र मनुः—'अष्टाभिश्च सुरेन्द्राणां मात्राभिर्निर्मितो नृपः' इति। उपचारार्थेनाञ्जलिना खिन्नौ हस्तौ यस्याः। पारिप्लवं चञ्चलं नेत्रं यस्याः। 'चञ्चलं तरलं चैव पारिप्लवपरिप्लवे' इत्यमरः। अत्र गृहागतत्वं प्रत्युत्थानाञ्जलिबन्धयोर्हेतुः ताभ्यां च श्रमः तेन च राज्ञ तादृशभावावलोकनमनोरथपरिपूर्तिः॥

कुमारभृत्याकुशलैरनुष्ठिते
भिषग्भिराप्तैरथ गर्भभर्मणि।
पतिः प्रतीतः प्रसवोन्मुखीं प्रियां
ददर्श काले दिवमभ्रितामिव ॥ १२ ॥

प्रका—अथ चतुर्थीमवस्थां दर्शयति—कुमारेति॥ कुमाराणां भृत्या भरणं बालचिकित्सेति यावत्। आप्तैर्विश्वस्तैः। गर्भभर्मणि गर्भभरणे।

अत्र कौटल्यः–'कौमारभृत्यो गर्भभर्मणि प्रजनने चाऽपि यतेत' इति। प्रतीतो हृष्टः। 'प्रतीत उच्यते हृष्टः प्रथितः सुतरां च सः' इति सज्जनः। काले दशमे मासि। द्योपक्षे वर्षासु। अभ्रितां संजाताभ्राम्। सापि सर्वस्य हर्षहेतुः॥

**पदा**––चतुर्थीमवस्थामाह––कुमारेति॥ अथ कुमारभृत्याकुशलैराप्तैर्भिषग्भिर्गर्भभर्मणि आधिष्ठिते पतिः प्रियां काले प्रसवोन्मुखीं ददर्श। कुमाराणां भृत्या भरणम्। बालचिकित्सेति यावत्। अत्र कौटल्यः––'आपन्नसत्त्वायां कौमारभृत्यो गर्भभर्मणि प्रजनने चापि यतेत' इति। आप्तैर्विश्वस्तैः गर्भभर्मणि गर्भभरणे। अधिष्ठिते कृताधिष्ठाने सति। काले दशमे मासि प्रसवोन्मुखीं प्रसवाभिमुखीम्। दिवमभ्रितामिवेत्युपमा। संजाताभ्राम्। हर्षहेतुत्वं साधारणो धर्मः। प्रतीतो हृष्टः। 'प्रतीत उच्यते हृष्टः प्रथितः सुतरां च सः' इति सज्जनः॥

ग्रहैस्ततः पञ्चभिरुच्चसंश्रितै-
रसूर्यगैः सूचितभाग्यसंपदम्।
असूत पुत्रं समये शचीसमा
त्रिसाधना शक्तिरिवार्थमक्षतम् ॥ १३ ॥

**प्रका**—ग्रहैरिति। पञ्चभिरिति यथासंभवविभिः। क्रमापेक्षायां बुधस्योच्चस्थितिर्न संभवति सूर्याधिष्ठितराशिमारभ्य द्वितीयराशेः परं तस्य स्थितेरसंभवात्। तथा होरायाम्––चतुर्थभवने सूर्यात् ज्ञसितौ भवतः कथम् इति। उच्च संश्रितैरुच्चराश्युच्चभागगतैः। ते च होरायामुक्ताः–'अजवृषभमृगाङ्गनाकुलीरा झषवणिजौ च दिवाकरादितुङ्गाः। दशशिखिमनुयुक्तिथीन्द्रियांशैस्त्रिनवकविंशतिभिश्च तेऽस्तनीचाः' इति। असूर्यगैरनस्तमितैरित्यर्थः। सूर्यप्रत्यासत्या हि ग्रहणामस्तमयः। तथा चोक्तमार्यभटेन–'चन्द्रोंऽशैर्द्वादशभिरविक्षिप्तोर्कान्तरस्थितो दृश्यः। नवभिर्भृगुर्भृगोस्तैर्व्यधिकैद्व्र्यधिकैर्यथा श्लक्ष्णाः' इति। सूचितभाग्यसंपदं सूचिता भाग्यसंपत् दिव्यभोगनिमित्तादृष्टसंपत् यस्य। अत्र कृष्णः–'सुखिनः प्रकृष्टकार्या राजप्रतिरूपकाश्च राजानः। एकद्वित्रिचतुर्भिर्जायन्तेऽतः परं दिव्याः

इति । 'सुखश्रवाः' इत्यादिना च दिव्यत्वं सूचयिष्यति । शचीसमेति दिव्य पुत्रप्रसवयोग्यता दर्शिता । त्रिसाधना त्रयः प्रभावोत्साहमन्त्राः साधनं जननकारणं यस्य इति । 'शक्तयस्तिस्रः प्रभावोत्साहमन्त्रजाः' इति सिंहः । अर्थं पुरुषार्थम् । अक्षतमनवद्यं संपूर्णं च । अत्रोपमया सर्वश्रेयःसाधकत्वं द्योत्यम् ॥

**पदा**—ग्रहैरिति । ततः सा समये पुत्रमसूत । समये मासपरिपूर्तिकाले । त्रिसाधना शक्तिरक्षतमर्थमिव । 'तिस्रः प्रभावोत्साहमन्त्रजा' इति सिंहः । अक्षतमनवद्यं संपूर्णं च । अर्थं पुरुषार्थम् । उच्चसंश्रितैः पञ्चभिर्ग्रहैः सूचितभाग्यसंपदम् । अत्युच्चांशाश्रितैरिति संशब्दार्थः । 'अजवृषभमृगाङ्गनाकुळीरा झषवणिजौ च दिवाकरादितुङ्गाः । दशशिखिमनुयुक्तिथीन्द्रियांशैस्त्रिनवकविंशतिभिश्च तेऽस्तनीचाः' इति वराहमिहिरः । सूचिता भाग्यसंपत् दिव्यभोगनिमित्तादृष्टसंपत् यस्य । अत्र कृष्णः—'सुखिनः प्रकृष्टकार्या राजप्रतिरूपकाश्च राजानः । एकद्वित्रिचतुर्भिर्जायन्तेऽतः परं दिव्याः' इति । अत्र पञ्चानामुच्चस्थितेर्दिव्यभागेलाभः । असूर्यगैर्मौढ्यरहितैरित्यर्थः । सूर्यप्रत्यासत्त्या हि ग्रहाणां मौढ्यं भवति ततश्च दौर्बल्यम् । शचीसमेत्यनेन दिव्यपुत्रलाभयोग्यतोक्ता ॥

दिशः प्रसेदुः मरुतो ववुः सुखाः
प्रदक्षिणार्चिर्हविरग्निराददे ।
बभूव सर्वं शुभशंसि तत्क्षणं
भवो हि लोकाभ्युदयाय तादृशाम् ॥ १४ ॥

**प्रका**—दिश इति ॥ प्रसेदुः विमला बभूवुः । सर्वमिति अन्यदपि भावजातम् । शुभशंसीति तज्जन्माजानतां दूरस्थितानामपि किमप्यभ्युदयहेतुभूतं शुभं वो भवतीत्यस्फुटमेव तज्जन्म शंसद्बभूवेत्यर्थः । तत्क्षणं तज्जन्मकाले । भवो जन्म । तादृशां रघुदिलीपप्रभृतीनाम् ॥

**पदा**—दिश इति ॥ दिशः प्रसेदुः विमला बभूवुः । मरुतः सुखा ववुः । सुखाः सुखकराः । अग्निः प्रदक्षिणार्चिर्हविराददे । प्रदक्षिणान्यर्चींषि ज्वाला यस्य । किं वा बहुनेत्याह—तत्क्षणं सर्वं शुभशंसि बभूवेति ।

1 तीति स्फु ।

तत्क्षणं तस्मिन् क्षणे । शुभं शंसितुः शीलमस्येति तथा । एतदेवोपपादयति -- तादृशां भवो लोकाभ्युदयाय हीति । तादृशां तत्सदृशानाम् । भवो जन्म । लोकानामभ्युदयाय । भवतीति शेषः । अत्रार्थान्तरन्यासः ॥

अरिष्टशय्यां परितो विसारिणा
सुजन्मनस्तस्य निजेन तेजसा ।
निशान्तदीपाः सहसा हतत्विषो
बभूवुरालेख्यसमर्पिता इव ॥ १५ ॥

प्रका — अरिष्टेति ॥ 'अरिष्टं सूतिकागृह'मिति हलायुधः । 'अभितः परितः' इत्यादिना द्वितीया । निजेन नैसर्गिकेण । अनेन 'सर्वतेजोभिभाविना' इत्येतदनुसंहितम् । अत्रोत्प्रेक्षया विच्छायत्वादि प्रतीयते ॥

पदा — अरिष्टेति ॥ सुजन्मनस्तस्य निजेन तेजसा निशान्तदीपाः सहसा हतत्विषो बभूवुः । शोभनं जन्म यस्य । निजेन नैसर्गिकेण । न तु संस्कारादिजनितेन । कृतसंस्कारस्य किंपुनरिति भावः । निशान्तो भवनम् । 'निशान्तवस्त्यसदनभवनागारमन्दिरम्' इत्यमरः । सहसा जन्मसमय एव हतत्विषो विहतप्रभाः । आलेख्ये चित्रे समर्पिता न्यस्ता इव । उत्प्रेक्षया दीपानामत्यन्तनिष्प्रभत्वं द्योत्यम् । अरिष्टशय्यां परितो विसारिणा । 'अभितः परितः' इत्यादिना द्वितीया । अरिष्टं सूतिकागृहम् । अरिष्टशय्यायाः समन्तत इत्यर्थः । विसारिणा प्रसरणशीलेन । 'अरिष्टं सूतिकागृहम् इति सिंहः ॥

जनाय शुद्धान्तचराय शंसते
कुमारजन्मामृतसंमिताक्षरम् ।
अदेयमासीद्[2]द्वयमेव भूपतेः
शशिप्रभं छत्रमुभे च चामरे ॥ १६ ॥

प्रका — जनायेति । शुद्धान्तोऽन्तःपुरम् । 'स्त्र्यगारं भूभुजामन्तः पुरं स्यादवरोधनम् । शुद्धन्तश्च' इति सिंहः । अमृतेन संमितानि तुल्यान्यक्षराणि यथेति क्रियाविशेषणम् । अत्राक्षरशब्दो वाक्यार्थावधारणात्प्रागेवाक्षराण्येवैकैकमानन्दनानीति द्योतयितुम् । शशिप्रभमिति धवळस्यैव राजचिह्नत्वाददेयत्वम् ॥

1 शीथ । 2 सीत्स्विय ।

पदा — जनायेति। अमृतसंमिताक्षरं कुमारजन्म शंसते शुद्धान्तचराय जनाय भूपतेर्द्वयमेवादेयमासीम्। अमृतेन संमितानि तुल्यान्यक्षराणि यथा भवन्ति तथा शंसते। शुद्धान्तोऽन्तःपुरम्। 'स्त्र्यगारं भूभुजामन्तःपुरं स्यादवरोधनम्। शुद्धान्तश्चावरोधश्च' इति सिंहः। तत्र चरतीति शुद्धान्तचरः। प्रथमनिवेदनं तत्रत्यानामेवोपपद्यते इति तदुपादानम्। द्वयमेव वस्तु। दातुमशक्यम् आसीत्। तत्प्रतिग्रहीतुरभावादित्यर्थः। किंतद्द्वयमित्यत्राह—शशिप्रभं छत्रं उभे चामरे च। शशिनः प्रभेव प्रभा यस्य ॥

निवातपद्मस्तिमितेन चक्षुपा
नृपस्य कान्तं पिबतः सुताननम्।
महोदधेः पूरइवेन्दुदर्शनाद्
गुरुः प्रहर्षः प्रबभूव नात्मनि ॥ १७ ॥

प्रका — निवातेति। पूरो जलवृद्धिः। इन्दुदर्शनादिति उदये दर्शनोपचारः। आत्मनि देहे। न प्रबभूव न ममौ। अपि त्वश्रुरोमाञ्चादिना बहिरपि प्रसृतोऽभूत्। यथा माघे—'तनौ ममुस्तत्र न कैटभद्विषः' इत्यादि। अत्रोपमया गाम्भीर्ये सत्यपि स्फुटविकारोपलब्धिरिति ध्वन्यते। 'गाम्भीर्यं यत्प्रभावेन विकारो नोपलक्ष्यते' इति हि तस्य लक्षणम् ॥

पदा — निवातेति। निवातपद्मस्तिमितेन चक्षुपा सुताननं पिबतो नृपस्य गुरुः प्रहर्ष आत्मनि न प्रबभूव। निवाते वातरहितप्रदेशे यत्पद्मं तद्वस्तिमितेन निश्चलेन। गुरुः प्रभूतः। आत्मनि देहे। न ममौ अश्रुरोमाञ्चादिना बहिरपि प्रसृतोऽभूत् इति भावः। यथाह माघः — 'तनौ ममुस्तत्र न कैटभद्विषस्तपोधनाभ्यागमसंभवा मुदः' इति। कान्तं मनोहरम्। महोदधेः पूरः इन्दुदर्शनादिवेत्युपमा। पूरो जलवृद्धिः ॥

स जातकर्मण्यखिले तपस्विना
तपोवनादेत्य पुरोधसा कृते
दिलीपसूनुर्मणिराकरोद्भवः
प्रयुक्तसंस्कार इवाधिकं बभौ ॥ १८ ॥

**प्रका—सजातेति॥** अखिलेऽविकले। तपस्विनेति भूमाद्यर्थानुगतेन मत्वर्थेन तपोबलात्तत्स्थस्यैव तज्जन्मापरोक्षणं ध्वन्यते। अत एवाह-एत्येति। स्वयमिति शेषः। अतश्च संदेशहारकाणामध्वन्येव दर्शनमिति ध्वन्यते। आकरो रत्नादिप्रभवस्थानम्। प्रयुक्तः संस्कारः शाणोल्लेखनादिर्यस्य। अधिकमिति पूर्वावस्थातः। अत्र दिलीपस्याकरेण सूनोर्मणिना जातकर्मणः शाणोल्लेखनादिना च औपम्ये क्रमात् असाधारणविकारप्रकृतित्वं अचिन्त्यप्रभावत्वं नैसर्गिकगुणोन्मीलकत्वं च सामान्यं प्रतीयते। पुरोधसस्तु वैकटिकसाम्यमर्थशक्त्या प्रतीयते। सामान्यं चाविकलसंस्कारसंपादनकौशलम्। नन्वत्रोपमानोपमेययोर्वैषम्यमस्ति। अस्ति ततः किम्। ततो न्यूनत्वमधिकत्वं, वा दोषः। कुतोऽयमङ्ग विकल्पः। उपमेयापेक्षया न्यूनत्वम् उपमानापेक्षया त्वाधिक्यम् इति। हन्त त्वमनभिज्ञोऽस्य-लङ्कारव्यवहाराणाम्। उपमानापेक्षयैव ह्युभयमपि व्यवह्रियते। युक्तिरप्यत्र श्रूयताम्। उपमेयेन हि प्रधानत्वादविचलितस्वरूपेण भवितव्यम्। उपमानेन तु गुणत्वात्तदनुरूपरूपवता भवितव्यम्। एवं स्थिते तदननुहार उपमानस्यैव दोषः। तर्ह्याधिक्यं दोषः। दिलीपसूनुर्निर्विशेषणो निर्दिष्टः मणिः सविशेषण इति। नैवम्। धर्मस्याधिक्यमेव दोषः, न विशेषणस्यापि। सूनोरपि हि षष्ठीसमासेन विशिष्टप्रभवत्वे सप्तम्यन्ताभ्यां च प्रयुक्तसंस्कारत्वे चाभिहिते कथं धर्माधिक्यम्। तर्हि वैकटिकानुपादानाद्धीनत्वम्। तदपि न। तस्यापि प्रयुक्तेति शब्दबलात् तत्कर्तुरव्यभिचारेण प्रतीतेः। प्रतीतिफलं ह्युपादानमिति॥

**पदा—स इति॥** तपस्विना पुरोधसा तपोवनादेत्याखिले जातकर्मणि कृते स दिलीपसूनुराकरोद्भवः प्रयुक्तसंस्कारो मणिरिवाधिकं बभौ। तपस्विनेति भूमाद्यर्थे मतुप्। एत्य तपःप्रभावात्कुमारजन्मावगम्य स्वयमेवाभ्युपेत्येत्यर्थः। अखिले मन्त्रतन्त्रादिभिरन्यूने। आकरो रत्नादिप्रभवस्थानम्। संस्कारः शाणोल्लेखनादिः। अधिकम् 'अरिष्टशय्यां परितः' इति पूर्वोक्तप्रकारादधिकतरम्॥

सुखश्रवा मङ्गलतूर्यनिस्वनाः
प्रमोदनृत्तैः सह वारयोषिताम्।
न केवलं सद्मनि मागधीपतेः
पथि व्यजृम्भन्त दिवौकसामपि ॥ १९ ॥

1 भा।

**प्रका—सुखेति ॥** सुखश्रवत्वं शुभसूचकत्वेन विशेषतस्तत्कालसंभाव्यनुसन्धेयम् । यद्वक्ष्यति—'नदद्भिः स्निग्धगम्भीरम्' इत्यादि । प्रमोदनृत्तैरिति । हर्षः स्वयं नर्तयतीति भावः । मागधीपतेरिति । बहुजानेरपि सैव व्यपदेशहेतुरिति 'कळत्रवन्तम्' इत्याद्यनुसंधत्ते । दिवौकसामिति । दिव्यत्वात् तस्य दिव्यदुन्दुभयो नेदुरित्यर्थः । दिवौकसां पथि वारयोषितोऽप्सरसः ॥

**पदा—सुखेति ॥** मङ्गळतूर्यनिस्वनाः वारयोषितां प्रमोदनृत्तैः सह केवलं मागधीपतेः सद्मनि न दिवौकसां पथ्यपि व्यजृम्भन्त । मङ्गळार्थास्तूर्यनिस्वनाः । दिवौकसां पथि वारयोषितोऽप्सरसः । प्रमोदसूचकैर्नृत्तैः । अत्र दिव्यदुन्दुभिनिनादेन देवानामपि महानुपकारोऽनेन भविष्यतीति ध्वन्यते । सुखश्रवाः सुखकरश्रवणाः ॥

न संयतस्तस्य बभूव रक्षितु-
र्विसर्जयेद्यं सुतजन्महर्षितः ।
ऋणाभिधानात्स्वयमेव केवलं
तदा पितॄणां मुमुचे स बन्धनात् ॥ २० ॥

**प्रका—न संयत इति ॥** रक्षितुरिति अविकलरक्षणकर्तृत्वस्येत्यर्थः । अत्र प्रजानामन्तःकरणवृत्तीरप्ययं पापेभ्यो रक्षति, तस्मात्तासु संयमनं न संभवति, ततश्च राजपुत्रजन्मोत्सवानुरूपा बन्धमुक्तिरप्यसंभविनीति भावः । ननु सर्वथा न बन्धमुक्तिरित्याह— ऋणाभिधानादिति । ऋणाभिधानात् बन्धनादिति रूपकविशेषः । एनमेव केचित्परिणामालङ्कारमाहुः—'आरोप्यमाणस्य प्रकृतोपयोगित्वे परिणामः' इति । अत्र चारोप्यमाणं बन्धनं प्रकृतबन्धमोक्षोपयोगीति । स्वयमेव मुमुच इति कर्मकर्तरि ॥

**पदा—नेति ॥** तस्य संयतो न बभूव । संयतो बद्धः । रक्षितुः सम्यग्रक्षितुः । अनेन प्रजानामन्तःकरणवृत्तेरपि पापेभ्यो रक्षणं विवक्षितम् । अत एव बद्धस्याभावः । सुतजन्महर्षितो यं विसर्जयेत् । सुतजन्मना पुत्रजन्मना कर्ता हर्षितः सतोषः सन् । यं बद्धम् । विसर्जयेत् । तथाविधो न बभूवेति पूर्वेण योजना । सर्वेषां हि राज्ञां पुत्र जन्मोत्सवे बद्धानां बन्धमुक्तिः क्रियते । अस्य तु न तथेति भावः । तथापि बन्धमुक्तिप्रतिषेधोत्यन्तं न जात इत्याह-- केवलं तदा सः स्वयमेव पितॄणां ऋणाभिधानाद्बन्धनान्मुमुचे इति । ऋणमि-

त्यभिधानं यस्य बन्धनस्य तस्मात् स्वयमेव मुमुचे मुक्तोऽभूत्। कर्मकर्तर्ययं प्रयोगः। ऋणाभिधानाद्बन्धनादित्यारोप्यमाणस्य प्रकृतोपयोगित्वात्परिणामोऽलङ्कारः। 'आरोप्यमाणस्य प्रकृतोपयोगित्वे परिणामः' इति॥

श्रुतस्य यायादयमन्तमर्भक-
स्तथा परेषां युधि चेति पार्थिवः।
अवेक्ष्य धातोर्गमनार्थमर्थवि-
च्चकार नाम्ना रघुमात्मसंभवम् ॥ २१ ॥

प्रका – श्रुतस्येति॥ श्रुतं शास्त्रम्। यायादिति 'शकिलिङ् च' इति लिङ्। यातुं शक्ष्यतीत्यर्थः। अन्तमवसानम्। अयमर्भक इति अर्भकावस्थायामप्येवमनुभाव इत्यर्थः। तथेति यथा धीगुणसहायः शास्त्राणामन्तमखिन्न एव यायात् तथा शौर्यादिसचिवः शत्रूणामित्यर्थः। परेषामिति। शत्रुवाचकस्यापि परशब्दस्यान्यत्वमेव प्रवृत्तिनिमित्तमिति सर्वनामकार्यं सुडागमः कृतइत्यवसेयम्। इति इत्थं संभाव्येत्यर्थः। धातोर्लघिधातोः। गमनमेवार्थो गमनार्थः तम्। अर्थवित् प्रयोजनवेदी। अत्र क्षत्रियस्य सर्वार्थमूलत्वाच्छ्रुतं पराक्रमश्च द्वयमेवार्थः। सोनेन तदेकधनेन यथावद्विदितः पुत्रेऽपि तैस्तैरतिशयैः संभाव्यमानस्संज्ञां प्रायोजयदिति भावः। ननु, "दिलीपोंऽशुमतः पुत्रो दिलीपस्य भगीरथः। भगीरथात्ककुत्स्थश्च ककुत्स्थस्य रघुस्ततः" इति रामायणवचनविरोधः। उच्यते, 'मूलकाद्दशरथः तस्माद्दिलीपः ततश्च विश्वसहस्तस्माच्च खट्वाङ्गो दिलीपः खट्वाङ्गाद्रघुरभवद्रघोरजः अजाद्दशरथ' इति श्रीविष्णुपुराणवचनमवगन्तव्यम्। तद्वंशे द्वौ दिलीपौ एकोंशुमतः पुत्रः अपरस्तु विश्वसहस्य तत्र विश्वसहपुत्रात्खट्वाङ्गापरनाम्नो दिलीपाद्रघुरिति। तयोश्च वचनयोः कल्पभेदाद्विरोधाभावः॥

पदा — श्रुतस्येति॥ अयमर्भकः श्रुतस्यान्तं यायात् तथा युधि परेषां च पार्थिव इति धातोर्गमनार्थमवेक्ष्यात्मसंभवं नाम्ना रघुं चकार। श्रुतं शास्त्रम्। यायादिति। 'शकि लिङ् च' इति लिङ्। तथा यथा बुद्धिगुणसंपन्नः शास्त्राणामन्तमनायासेनैव गन्तुं शक्तस्तथा शौर्यादिसहितः शत्रूणामपीति भावः। 'अघि, रघि, लघि गत्यर्थाः इति धातोर्यो गमनार्थस्तं उक्तप्रकारेण संभाव्य राजा पुत्रस्य रघुरिति नाम चकारेत्यर्थः। अर्थवित्प्रयोजनवेदी। 'अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु'

इत्यमरः। क्षत्रियस्य हि द्वयमेव प्रयोजनं शास्त्रं शौर्यं च। यद्यपि रामायणे—'ककुत्स्थस्य रघुस्ततः' इति ककुत्स्थपुत्रत्वेन रघुरुक्तः तथाप्यत्र 'दिलीपाद्रघुरभवद्रघोरज' इति श्रीविष्णुपुराणानुसारित्वान्नानुपपत्तिः। ऋषिवचनयोः परस्परविरोधस्तु युगभेदेन परिहर्तव्यः॥

पितुः प्रयत्नात्स समग्रसंपदः
शुभैः शरीरावयवैर्दिने दिने।
पुपोष वृद्धिं हरिदश्वदीधिते-
रनुप्रवेशादिव बालचन्द्रमाः ॥ २२ ॥

प्रका—पितुरिति॥ समग्रसंपदः मणिमन्त्रौषधादिसंपाद्येषु संस्कारेष्वहीनसमृद्धिकस्य। शुभैरिति पुण्यकर्मारब्धत्वेन तेजोबलादिसंपन्नैः। शरीरावयवैः धातूपचयात्मकैरन्नपरिणामरूपैः। चन्द्रमःपक्षे कलाभिः। पुपोष लेभे। हरिदश्वः सूर्यः। अनुप्रवेशादिति। अत्र संहिताश्लोकः—"सलिलमये शशिनि रवेर्दीधितयो मूर्च्छितास्तमो नैशम्। क्षपयन्ति दर्पणोदरनिहिता इव मन्दिरस्यान्तः" इति। उपमया च प्रतिदिनं वृद्धेर्लक्षणीयत्वं नयनानन्दकरत्वं च द्योत्यते॥

पदा—पितुरिति॥ स पितुः प्रयत्नाच्छुभैः शरीरावयवैर्दिनेदिने वृद्धिं पुपोष। मन्त्रौषधादिप्रयोगात्। शुभैः पुण्यकर्मारब्धैः। कर्मारब्धं हि शरीरम्। पुपोष लेभे। हरिदश्वदीधितेरनुप्रवेशाद्बालचन्द्रमा इव। हरिदश्वः सूर्यः तस्य दीधिते रश्मेः। सूर्यरश्मिप्रवेशो हि शीतांशोर्वृद्धिकारणम्। तदुक्तं संहितायां—"सलिलमये शशिनि रवेर्दीधितयो मूर्छितास्तमो नैशम्। क्षपयन्ति दर्पणोदरनिहिता इव मन्दिरस्यान्तः" इति। 'मूर्तित्वे परिकल्पितः शशभृतः' इति होरायां च। उपमया नयनानन्दकरत्वादयो द्योत्यन्ते। समग्रा संपत् यस्य। अनेन मन्त्रादिप्रयोगसौकर्यमुक्तम्॥

उमावृषाङ्कौ शरजन्मना यथा
यथा जयन्तेन शचीपुरन्दरौ।
तथा नृपः सा च सुतेन मागधी
ननन्दतुस्तत्सदृशेन तत्समौ ॥ २३ ॥

प्रका—उमेति ॥ अत्र 'तत्सदृशेन तत्समाविति चोपमापौनरुक्त्यं उपमानोपमेयनिर्देशक्रमभेदोऽर्थयोः पौर्वापर्यविपर्यये यथाशब्देनैव चरितार्थत्वे तथाशब्दवैयर्थ्यं च' इति त्रयो दोषा व्यक्तिविवेककृता मुधैवोद्भाविताः। तथा हि, 'योग्यता वीप्सा पदार्थानतिवृत्तिः सादृश्यं च यथार्थाः' इति सादृश्यद्योतको यथाशब्दोऽन्यः यः केवल एव प्रयुज्यते। तदुक्तं काव्यप्रकाशकृता—'केवलस्य यथाशब्दस्य साधर्म्यमेव प्रतिपादयितुं पर्याप्तत्वात्' इति। अन्यश्चायं प्रकारवचने थालन्तो यच्छब्दप्रकृतिः, अत एव तादृशस्तथाशब्दोऽपि प्रयुक्तः। यत्तदोर्नित्याभिसंबन्धात्। 'यथायं धावति तथा भीतः' इतिवत्। अन्यथा यत्तदोरुभयोः प्रयोगः सर्वत्र दुष्टः स्यात्। ततश्च यथाशब्दाभ्यामत्र नियतधर्म्यन्तरगतं नन्दनस्य यत्प्रकारद्वयमनूदितं तत्तथाशब्देन प्रकृतेऽतिदिश्यते। जातेनानेन दिष्ट्या लोकतन्त्रं सुप्रतिविहितं इति नन्दनस्यैकः प्रकारः। अनुरूपेणानेन कृतकृत्यौ स्व इत्यपरः। अतश्च नन्दनप्रकारसाम्यमात्र एव शब्दस्य शक्तिः। अत एव प्रतीयमानप्रभावादिगुणसाधर्म्याभ्यां पदोपमाभ्यामप्येतदुपस्कार एव कृतः। क्रमभेदश्च' विवक्षितस्य संबन्धस्य झटित्यप्रतीतावेव दोषः। चूळिकाक्रमो वा सुवचः। एवं चैवमाशयानभिज्ञस्य तस्य हेवाकिनो मतमुपेक्षणीयम् ॥

पदा—उमेति ॥ उमावृषाङ्कौ शरजन्मना यथा, शचीपुरन्दरौ जयन्तेन यथा, नृपः सा मागधी च सुतेन तथा ननन्दतुः। वृषाङ्को हरः। जयन्तः पाकशासनिः। ताभ्यां शरजन्मजयन्ताभ्यां सदृशेन प्रभावादिभिस्तुल्येन। तत्समौ ताभ्यां समौ ॥

रथाङ्गनाम्नोरिव भावबन्धनं
बभूव यत्प्रेम परस्पराश्रयम्।
विभक्तमप्येकसुतेन तत्तयोः
परस्परस्योपरि पर्यचीयत ॥ २४ ॥

प्रका—रथाङ्गेति ॥ भावो हृदयम्। परस्पराश्रयं अन्योन्यावलम्बनम्। एकशब्दः सुतस्यातिवाल्लभ्यं द्योतयति। उपरीति निपातः षष्ठ्या निर्दिष्टस्य विषयत्वं द्योतयति। पर्यचीयतावर्धत। अन्योन्यावलम्बनस्वभावत्वादन्योन्यहृदयबन्धनभूतं यत्तयोः प्रेम तत्सुतविषये विभक्तमप्यन्योन्यविषयेऽवर्धतेत्यर्थः। उपमानेन प्रेम्णः स्थिरत्वं द्योत्यते। चक्रवाकमिथुनानामात्यन्तिकं प्रेम। यथा—'किं न वेत्सि सहधर्मचारिणं चक्रवाकसमवृत्तिमात्मन' इति[1] ॥

1 यथा शिष्यविषये प्रतिपाद्यमानं ज्ञानं स्वविषये वर्धते तथेदमपीति पर्यचीयतेति शब्दशक्त्योपमाध्वनिः इत्यधिकं क्वचित्।

**पदा—रथाङ्गेति ॥** तयो रथाङ्गनाम्नोरिव परस्पराश्रयं भावबन्धनं यत्प्रेम बभूव तत् एकसुतेन विभक्तमपि परस्परस्योपरि पयचीयत। रथाङ्गनाम्नोश्चक्रवाकमिथुनस्य। अनेन प्रेम्णः स्थिरत्वमुक्तम्। तदुक्तं कुमारसंभवे—'किं न वेत्सि सहधर्मचारिणं चक्रवाकसमवृत्तिमात्मनः' इति। परस्पराश्रयमन्योन्यालम्बनम्। भावं हृदयं बध्नाति विषयान्तरप्राप्तिं निरुन्धे इति भावबन्धनम्। एकेन सुतेन। तेन तद्विषयस्य प्रेम्णोऽपि सातिशयत्वमुक्तम्। एकसुतेन कर्त्रा स्वात्मनि विभक्तं कृतविभागमपि। परस्परस्योपरि अन्योन्यं विषयीकृत्य। पर्यचीयतावर्धत। कृतविभागं हि वस्तु परिक्षीणं भवति। तयोस्तु प्रेम प्रविभक्तमपि प्रवृद्धमासीदिति विरोधालङ्कारः। 'विरोधः सोऽविरोधेऽपि विरुद्धत्वेन यद्वच' इति ॥

**तमङ्कमारोप्य शरीरयोगजैः**
**सुखैर्निषिञ्चन्तमिवामृतं त्वचि ।**
**उपान्तसंमीलितलोचनो नृप-**
**श्चिरात्सुतस्पर्शरसज्ञतां ययौ ॥ २५ ॥**

**प्रका—तमिति ॥** अङ्कमुरः। सुखैर्हेतुभूतैः त्वचि संभाव्यमानामृतनिषेकमित्यर्थः। त्वचीति निषेकस्य परिस्फुटतां द्योतयति। त्रिभागसंमीलितेति वा पाठः। चिरात् चिरकालप्रार्थितामित्यर्थः। अथवा— प्रथमतश्चिरं मोहापन्नत्वाच्चिरात्तत्प्राप्तिः। यतो दुःखातिशयादिव सुखातिशयादपि मोहो भवति। तथा संमीलितलोचनत्वं चानुभावः ॥

**पदा—तमिति ॥** नृपस्तमङ्कमारोप्य चिरात्सुतस्पर्शरसज्ञतां ययौ। अङ्कमुरः। उत्तानशायी भूत्वा निजोरसि बालमारोप्येत्यर्थः। चिरात् चिरेण कालेन। आदावानन्दजनितेन मोहेनाभिभूतत्वाच्चिरेणैव पुत्रस्पर्शसुखज्ञानमिति भावः। शरीरयोगजैः सुखैस्त्वचि अमृतं निषिञ्चन्तमिव। निजशरीरसंयोगसंभवैः सुखैः त्वगिन्द्रिये पीयूषं नितरां सिञ्चन्तमिवेत्युत्प्रेक्षा। उपान्ते संमीलिते लोचने येन। ईषन्मीलितलोचन इत्यर्थः। आनन्दस्यानुभावोऽयम् ॥

---

1 पदार्थदीपिकाकारमल्लिनाथोपाध्याययोः 'तमङ्क'मिति, 'अमस्ते'ति पद्ययोः पूर्वमेव उवाचेत्यादिपद्यपाठः।

अमंस्त चानेन परार्ध्यजन्मना
स्थितेरभेत्ता स्थितिमन्तमन्वयम् ।
स्वमूर्तिभेदेन गुणाग्र्यवर्तिना
पतिः प्रजानामिव सर्गमात्मनः ॥ २६ ॥

प्रका—अमंस्तेति ॥ परार्ध्यं श्रेष्ठं जन्म यस्य । ग्रहपञ्चकोच्चस्थित्यादिसूचितदिव्यजन्मनेत्यर्थः । एतच्च तथामनने हेतुः । स्थितेः स्वधर्मस्य । अभेत्ता स्थापकः । नञ्समासस्य तद्विरुद्धार्थवृत्तित्वात् । यथा—'अधर्मशब्दः' । स्थितिः स्थैर्यं स्वधर्मात्पालनादच्यवनं तद्वन्तम् । तथाविधजन्मना हेतुभूतेन तत्प्रभवं स्वान्वयमपि स्वयमस्खलितपालनधर्मा तथाविधमेवावबुद्धवानित्यर्थः । गुणाग्र्यवर्तिना सत्ववर्तिना विष्ण्वात्मना । उपमानेऽपि विशेषणानि योज्यानि । स्वमूर्तिभेदस्तु, गुणाग्र्यवर्तिताविशिष्ट एवोपमानम् ॥

पदा—अमंस्तेति ॥ अनेनान्वयं स्थितिमन्तममंस्त । स्थितिः स्थैर्यं तद्वन्तम् । निजकुलमात्मना सुप्रतिष्ठितात्पालनादस्खलितं कल्पितवानित्यर्थः । प्रजानां पतिः गुणाग्र्यवर्तिना स्वमूर्तिभेदेनात्मनः सर्गमिव । प्रजानां पतिर्ब्रह्मा । गुणानां सत्त्वरजस्तमसामग्र्यं श्रेष्ठम् । सत्वगुणवर्तिना विष्णुनेत्यर्थः । स हि ब्रह्मण एव मूर्तिभेदः । एकस्यैव चित्स्वरूपस्य त्रिधाभावात यथा ब्रह्मा विष्णुना स्वसृष्टिं स्थितिमतीं कल्पयति तथेत्यर्थः । परार्ध्यं श्रेष्ठं जन्म यस्य । स्थितेर्मर्यादायाः । अभेत्ता स्थापकः । अत्र नञस्तद्विरुद्धार्थवाचित्वं द्रष्टव्यम् । 'अधर्मः' इतिवत् । एतच्च विशेषणमुभयत्रापि योजनीयम् ॥

उवाच धात्र्या प्रथमोदितानि य-
यौ तदीयामवलम्ब्य चाङ्गुलिम् ।
अभूच्च नम्रः प्रणिपातशिक्षया
पितुर्मुदं तेन शिशुस्ततानसः ॥ २७ ॥

प्रका—अथ क्रमेण वयोवस्थास्तदुचितानुष्ठानद्वारेण वर्णयति—उवाचेति ॥ धात्र्येति तत्र विस्रम्भात् । प्रथमोदितान्येव न तु द्वितीयवारमप्युच्चारितानि ।

---

1 प्रथमोदितं वचो ययौ । 2 ततान सोऽर्भकः, इति पदार्थदीपिकाकृन्मल्लिनाथयोः पाठः ।

अनेन वाक्यत्रयेण क्रमाद्वाक्कायबुद्धिपाटवान्युक्तानि । तेनेति समुच्चितेन यच्छब्दपरामृष्टेन वाक्यार्थत्रयेण हेतुनेत्यर्थः । शिशुरिति । शिशोरेवास्य शैशवोचितासु चेष्टास्वीदृशं पाटवम् । तद्यौवनेऽपि तत्कालोचितं पाटवमविकलमेव भावीति स्थालीपुलाकन्यायेन मन्मानः पिता मुमुद इत्यर्थः । अत्र स्वभावोक्तिर्निर्व्यूढापि प्रीतेरङ्गत्वन प्रत्यवेक्षिता ॥

**पदा — उवाचेति ॥** सोऽर्भकस्तेन तेन तेन पितुर्मुदं ततान। चकारोऽर्थाद्द्रष्टव्यः। अत्र वक्ष्यमाणस्य वाक्यत्रयस्य यच्छब्दत्रयापेक्षया तत्प्रतियोगित्वेनादावेव तच्छब्दत्रयमुपादाय गुरवः पाठयन्तीत्यवसेयम्। तान्येव यच्छब्दवाक्यान्याह — उवाचेत्यादिना। धात्र्या प्रथमोदितान्युवाच यत्। धात्र्या उपमात्रा। 'धात्री स्यादुपमातापि' इत्यमरः। प्रथममुदितानि आदावुक्तानि। न तु पुनः पुनरुच्चारितानीत्यर्थः। अनेन वचनपाटवारम्भ उक्तः। तदीयामङ्गुलिमवलम्ब्य ययौ च यत्। अवलम्ब्य गृहीत्वा। अनेन शरीरस्थैर्यारम्भ उक्तः। प्रणिपातशिक्षया नम्रोऽभूच्च यत्। प्रणिपातः प्रणमनम्। शिक्षया। न तु शिक्षाभिः। सकृत्कृतया शिक्षया प्रतिदिनम् नम्रो नमनशीलः। अभूम्। अनेन गुरुवचनादर उक्तः ॥

**स वृत्तचौलश्चलकाकपक्षकै-**
**रमात्यपुत्रैः सवयोभिरन्वितः**
**लिपेर्यथावद्ग्रहणेन वाङ्मयं**
**नदीमुखेनेव समुद्रमाविशत्** ॥ २८ ॥

**प्रका — स इति ॥** वृत्तमतीतम्। काकपक्षो बालानां शिखा। 'बालानां तु शिखा प्रोक्ता काकपक्षः शिखण्डक' इति हलायुधः। तस्य चलत्वं रामणीयकाय बालानाम्। यदाह — 'चञ्चत्पञ्चशिखण्डमण्डनम् इति। अनेन तेषामपि कृतचौलत्वेन समानवयस्त्वमुपपादयति। लिपेर्मातृकायाः। यथा नारायणीये — 'वेलागरुखरश्शोणश्शर्मणेवेत्तिभेदिताः। लिप्यर्णाराशिपु ज्ञेयाः षष्ठेशादींश्च योजयेत्' इति। 'तत्र लिप्यर्णा' इति लिपेर्व्यतिक्तवर्णग्रहणात् लिपिरिति मातृकाभिधीयते। यक्ष्यति च — 'न्यस्ताक्षरामक्षरभूमिकायां कात्स्न्र्येन गृहणाति लिपिं न यावत्' इति। यथावत् स्पृष्टनादिभेदेन। वाङ्मयं शब्दजातम्। नद्येव मुखं नदीमुखम्। 'मुखं तु वदने मुख्ये तान्त्रे द्वाराभ्युपाययोः' इति

यादवः । उपमानेन च सुखोपायता प्रतीयते । आविशदीषत्प्रविवेश । अत्यन्तावगाहनस्य वक्ष्यमाणत्वात् ।॥

पदा — स इति ॥ स लिपेर्यथावद्ग्रहणेन वाङ्मयमाविशत् । लिपेरेकपञ्चाशदक्षरात्मिकायाः यथावद्ग्रहणेन स्पृष्टतादिभेदग्रहणेनेत्यर्थः । वाङ्मयं शब्दजातम् । आविशदीषत्प्रविष्टवान् । अत्यन्तावगमो हि वक्ष्यते । नदीमुखेन समुद्रमिवेत्युपमा । नद्येव मुखं नदीमुखं मुखमुपायः । 'मुखं तु वदने मुख्ये ताम्रे द्वाराभ्युपाययोः' इति यादवः । वृत्तचौळः अतीतचूडाकर्मा । सवयोभिः समानवयस्कैः । अमात्यपुत्रैः । अन्वितः सहितः । तेषां समानवयस्त्वमेवाह — चलकाकपक्षकैरिति । चलश्चञ्चलः काकपक्षो येषाम् । 'बालानां तु शिखा प्रोक्ता काकपक्षः शिखण्डकः' इति हलायुधः । तेषां चलत्वेन रमणीयत्वं द्योत्यते ॥

अथोपनीतं विधिवद्विपश्चितो
विनिन्युरेनं गुरवो गुरुप्रियम् ।
अवन्ध्ययत्नांश्च बभूवुरत्र ते
क्रिया हि वस्तूपहिता प्रसीदति ॥ २९ ॥

प्रका — अथेति ॥ विधिवद्यथाशास्त्रम् । विपश्चितः तत्तच्छास्त्रपारगाः । बहुवचनमेकत्र सर्वज्ञत्वासंभवात् । गुरव इति तत्र तत्र गुरुत्वेन संमता इत्यर्थः । गुरुप्रियमिति विनयने तेषां सादरत्वं द्योतयति । क्रिया शिक्षा । 'क्रिया तु निष्क्रियाशिक्षाचिकित्सोपायकर्मसु' इति यादवः । वस्तुनि द्रव्ये । सत्पात्र इति यावत् । उपहिता न्यस्ता । प्रसीदति । प्रसादकार्यं फलजननं लक्ष्यते । अत्र कौटल्यः — 'क्रिया हि द्रव्यं विनयति नाद्रव्यं, 'शुश्रूषाश्रवणग्रहणधारणविज्ञानोहापोहतत्वाभिनिविष्टबुद्धिं विद्या विनयति नेतरम् । विद्यानां तु यथास्वमाचार्यप्रमाण्यात् विनयो नियमश्च । 'वृत्तचौळकर्मा लिपिं संख्यानं चोपयुञ्जीत, वृत्तोपनयस्त्रयीमान्वीक्षिकीं च शिष्टेभ्यः, वार्तामध्यक्षेभ्यः, दण्डनीतिं वक्तृप्रयोक्तृभ्यः,' इति ॥

पदा — अथेति ॥ अथ गुरवः उपनीतमेनं विधिवद्विनिन्युः । एकस्यैव सर्वज्ञत्वासंभवाद्गुरव इति बहुवचनम् । विधिवत् श्रावण्यां प्रोष्ठपद्यां वोपाकृत्य यथाविधि युक्तश्छन्दांस्यधीयीत मासान्विप्रोऽर्धपञ्चमान् अतः परं तु

छन्दांसि शुक्लपक्षेषु संपठेत्, इत्यादिस्मृत्यनुसारेणेत्यर्थः। विनिन्युः शिक्षयामासुः। विपश्चितो विद्वांसः। तत्तच्छास्त्रपारगा इत्यर्थः। गुरूणां प्रियमिष्टम्। तेऽत्रावन्ध्ययत्ना बभूवुश्च। अस्मिन्विषये सफलप्रयासा बभूवुः। क्रिया वस्तूपहिता प्रसीदति हि। क्रिया शिक्षा। 'क्रिया तु निष्क्रियाशिक्षाचिकित्सोपायकर्मसु' इति यादवः। वस्तुनि सत्पात्रे उपहिता न्यस्ता। प्रसीदति फलं जनयतीति यावत्। अत्र कौटल्यः— 'क्रिया हि द्रव्यं विनयति नाद्रव्यम्' इति। अत्रार्थान्तरन्यासः॥

**धियः समग्रैः स गुणैरुदारधीः**
**क्रमाच्चतस्रश्चतुरर्णवोपमाः।**
**ततार विद्याः पवनातिपातिभि-**
**र्दिशो हरिद्भिर्हरितामिवेश्वरः ॥ ३० ॥**

**प्रका—धिय इति॥** समग्रैः समस्तैः। गुणैः शुश्रूषादिभिः। उदारा महती धीर्यस्य। 'उदारो महति ख्याते दानशौण्डविदग्धयोः' इति केशवः। समस्तविषयावगाहनक्षमधीरित्यर्थः। क्रमादित्यनन्तरोक्तकौटलीयग्रन्थोक्तक्रमो विवक्षितः। तथा हि लिपिग्रहणानन्तरमध्ययनं, ततस्तदर्थावधारणायान्वीक्षिकी, ततस्तदुपबृंहितबुद्धेर्लोकयात्रामूलं वार्ता, ततस्तासां प्रवर्तनाय दण्डनीतिरध्येतव्येति। अत्र कौटल्यः— "आन्वीक्षिकीत्रयीवार्तानां योगक्षेमसाधनो दण्डः तस्य नीतिर्दण्डनीतिः अलब्धलाभार्था, लब्धपरिरक्षणी, रक्षितवर्धनी, विवृद्धस्य तीर्थेषु प्रतिपादनी च, तस्यामायत्ता लोकयात्रा" इति। चतुरर्णवोपमा इति महत्त्वादिकमुक्तम्। विद्या इति। अत्र कामन्दकः— आन्वीक्षिकी त्रयी वार्ता दण्डनीतिश्च शाश्वती। विद्या ह्येताश्चतस्रस्तु लोकसंस्थितिहेतवः" इति। अत्र चैवान्यासामप्यन्तर्भावो द्रष्टव्यः। पवनातिपातिभिरिति। उपमेयपक्षे— पवनधीगुणातिपातिभिरित्यर्थः। पवनस्य सर्वप्राणभूततया सर्वविद्यापारगत्वेन पुराणेषु प्रसिद्धिश्च। हरितः सूर्याश्वाः। 'हरित्सूर्येऽपि सूर्याश्वे वर्णे च हरिते' इति केशवः। तेषामीश्वरस्तैरिवेति। अथवा— दिशो हरितः। यथाह मुरारिः —"प्राचीं वासकसज्जिकामुपगते भानौ दिशां वल्लभे" इति। अत्रोपमया कर्तृकरणसादृगुण्ये दुस्तरतरणमुपपादितम्॥

**पदा—धिय इति॥** सः धियः समग्रैर्गुणैश्चतस्रो विद्याः क्रमात्ततार। समग्रैः संपूर्णैः। गुणैः। अत्र कामन्दकः— 'शुश्रूषा श्रवणञ्चैव ग्रहणं

धारणं तथा। ऊहापोहार्थविज्ञानं तत्त्वज्ञानं च धीगुणाः" इति। चतस्रो विद्याः आन्वीक्षिक्याद्याः। अत्र कामन्दकः—"आन्वीक्षिकी त्रयी वार्ता दण्डनीतिश्च शाश्वती। एता विद्याश्चतस्रस्तु लोकसंस्थितिहेतवः" इति। क्रमात्। "वृत्तचौळकर्मा लिपिं संख्यानं चोपयुञ्जीत, वृत्तोपनयस्त्रयीमान्वीक्षिकीं च" इत्यादिकौटल्योक्तक्रमेणेत्यर्थः। हरितामीश्वरो हरिद्भिर्दिश इव। हरितां दिशाम्। 'हरित्सूर्येऽपि सूर्याश्वे वर्णेऽपि हरिते दिशि' इति केशवः। तासामीश्वरः सूर्यः। अत्र मुरारिः— प्राचीं बालकसञ्ज्ञिकामुपगते भानौ दिशां वल्लभे इति। हरिद्भिः सूर्याश्वैः। उपमया सत्वरतरणं सूचितम्। उदारा महती धीर्यस्य। 'उदारो महति ख्याते दानशौण्डविदग्धयोः' इति केशवः। चतुर्भिर्वर्णैरुपमा यासाम्। पवनमतिपतितुं शीलमेषामिति तथा। विशेषणद्वयमेतदुभयत्र योज्यम्॥

त्वचं च मेध्यां परिधाय रौरवी-
मशिक्षतास्त्रं पितुरेव मन्त्रवत्।
न केवलं तद्गुरुरेकपार्थिवः
क्षितावभूदेकधनुर्धरोऽपि सः ॥ ३१ ॥

**प्रका**— त्वचमिति॥ मेध्यां शुचिम्। शास्त्रीयत्वात्। चो वाक्यार्थसमुच्चये। रौरवीमिति। 'रुरुर्महान् कृष्णसार' इति यादवः। अत्र मनुः—"कार्ष्णरौरवबास्तानि चर्माणि ब्रह्मचारिणः। वसीरन्नानुपूर्व्येण शाणक्षौमाविकानि च" इति। अस्त्रमिति शस्त्रास्त्रमुक्तामुक्तादिभेदभिन्नम्। मन्त्रवत् समन्त्रकम्। अवधारणमुपपादयति—न केवलमिति। एकशब्दः प्रधानवाची॥

**पदा**—त्वचमिति॥ सः रौरवीं त्वचं परिधाय पितुरेवास्त्रमशिक्षत च। 'रुरुर्महान् कृष्णसारः' इति यादवः। तत्संबधिनीं त्वचम्। परिधाय वसित्वा। अत्र मनुः—"कार्ष्णरौरवबास्तानि चर्माणि ब्रह्मचारिणः। वसीरन्नानुपूर्व्येण" इति। पितुः सकाशादेव शस्त्राणि शिक्षितवान्। मेध्यां शास्त्रीयत्वाच्छुचिम्। मन्त्रवत् समन्त्रकम्। पितुरेवेत्यवधारणमुपपादयति—स तद्गुरुः क्षितौ केवल-

छन्दांसि शुक्लपक्षेषु संपठेत्, इत्यादिस्मृत्यनुसारेणेत्यर्थः। विनिन्युः शिक्षयामासुः। विपश्चितो विद्वांसः। तत्तच्छास्त्रपारगा इत्यर्थः। गुरूणां प्रियमिष्टम्। तेऽत्रावन्ध्ययत्ना बभूवुश्च। अस्मिन्विषये सफलप्रयासा बभूवुः। क्रिया वस्तूपहिता प्रसीदति हि। क्रिया शिक्षा। 'क्रिया तु निष्क्रियाशिक्षाचिकित्सोपायकर्मसु' इति यादवः। वस्तुनि सत्पात्रे उपहिता न्यस्ता। प्रसीदति फलं जनयतीति यावत्। अत्र कौटल्यः—'क्रिया हि द्रव्यं विनयति नाद्रव्यम्' इति। अत्रार्थान्तरन्यासः॥

धियः समग्रैः स गुणैरुदारधीः
क्रमाच्चतस्रश्चतुरर्णवोपमाः।
ततार विद्याः पवनातिपातिभि-
र्दिशो हरिद्भिर्हरितामिवेश्वरः ॥ ३० ॥

**प्रका—धिय इति॥** समग्रैः समस्तैः। गुणैः शुश्रूषादिभिः। उदारा महती धीर्यस्य। 'उदारो महति ख्याते दानशौण्डविदग्धयोः' इति केशवः। समस्तविषयावगाहनक्षमधीरित्यर्थः। क्रमादित्यनन्तरोक्तकौटलीयग्रन्थोक्तक्रमो विवक्षितः। तथा हि लिपिग्रहणानन्तरमध्ययनं, ततस्तदर्थावधारणायान्वीक्षिकी, ततस्तदुपबृंहितबुद्धेर्लोकयात्रामूलं वार्ता, ततस्तासां प्रवर्तनाय दण्डनीतिरध्येतव्येति। अत्र कौटल्यः—"आन्वीक्षिकीत्रयीवार्तानां योगक्षेमसाधनो दण्डः तस्य नीतिर्दण्डनीतिः अलब्धलाभार्था, लब्धपरिरक्षणी, रक्षितवर्धनी, विवृद्धस्य तीर्थेषु प्रतिपादनी च, तस्यामायत्ता लोकयात्रा" इति। चतुरर्णवोपमा इति महत्त्वादिकमुक्तम्। विद्या इति। अत्र कामन्दकः—"आन्वीक्षिकी त्रयी वार्ता दण्डनीतिश्च शाश्वती। विद्या ह्येताश्चतस्रस्तु लोकसंस्थितिहेतवः" इति। अत्र चैवान्यासामप्यन्तर्भावो द्रष्टव्यः। पवनातिपातिभिरिति। उपमेयपक्षे—पवनधीगुणातिपातिभिरित्यर्थः। पवनस्य सर्वप्राणभूततया सर्वविद्यापारगत्वेन पुराणेषु प्रसिद्धश्च। हरितः सूर्याश्वाः। 'हरित्सूर्येऽपि सूर्याश्वे वर्णे च हरिते' इति केशवः। तेषामीश्वरस्तैरिवेति। अथवा—दिशो हरितः। यथाह मुरारिः—"प्राचीं वासकसज्जिकामुपगते भानौ दिशां वल्लभे" इति। अत्रोपमया कर्तृकरणसादृगुण्ये दुस्तरतरणमुपपादितम्॥

**पदा—धिय इति॥** सः धियः समग्रैर्गुणैश्चतस्रो विद्याः क्रमात्ततार। समग्रैः संपूर्णैः। गुणैः। अत्र कामन्दकः—"शुश्रूषा श्रवणञ्चैव ग्रहणं

धारणं तथा। ऊहापोहार्थविज्ञानं तत्त्वज्ञानं च धीगुणाः" इति। चतस्रो विद्याः आन्वीक्षिक्याद्याः। अत्र कामन्दकः—"आन्वीक्षिकी त्रयी वार्ता दण्डनीतिश्च शाश्वती। एता विद्याश्चतस्रस्तु लोकसंस्थितिहेतवः" इति। क्रमात्। "वृत्तचौळकर्मा लिपिं संख्यानं चोपयुञ्जीत, वृत्तोपनयस्त्रयीमान्वीक्षिकीं च" इत्यादिकौटल्योक्तक्रमेणेत्यर्थः। हरितामीश्वरो हरिद्भिर्दिश इव। हरितां दिशाम्। 'हरित्सूर्येऽपि सूर्याश्वे वर्णेऽपि हरिते दिशि' इति केशवः। तासामीश्वरः सूर्यः। अत्र मुरारिः--- प्राचीं वासकसज्जिकामुपगते भानौ दिशां वल्लभे इति। हरिद्भिः सूर्याश्वैः। उपमया सत्वरतरणं सूचितम्। उदारा महती धीर्यस्य। 'उदारो महति ख्याते दानशौण्डविदग्धयोः' इति केशवः। चतुर्भिर्णवैरुपमा यासाम्। पवनमतिपतितुं शीलमेषामिति तथा। विशेषणद्वयमेतदुभयत्र योज्यम्॥

त्वचं च[1] मेध्यां परिधाय रौरवी-
मशिक्षतास्त्रं पितुरेव मन्त्रवत्।
न केवलं तद्गुरुरेकपार्थिवः
क्षितावभूदेकधनुर्धरोऽपि सः ॥ २१ ॥

प्रका—त्वचमिति॥ मेध्यां शुचिम्। शास्त्रीयत्वात्। चो वाक्यार्थसमुच्चये। रौरवीमिति। 'रुरुर्महान् कृष्णसार' इति यादवः। अत्र मनुः—"कार्ष्णरौरवबास्तानि चर्माणि ब्रह्मचारिणः। वसीरन्नानुपूर्व्येण शाणक्षौमाविकानि च" इति। अस्त्रमिति शस्त्रास्त्रमुक्तामुक्तादिभेदभिन्नम्। मन्त्रवत् समन्त्रकम्। अवधारणमुपपादयति—न केवलमिति। एकशब्दः प्रधानवाची॥

पदा—त्वचमिति॥ सः रौरवीं त्वचं परिधाय पितुरेवास्त्रमशिक्षत च। 'रुरुर्महान् कृष्णसारः' इति यादवः। तत्संबधिनीं त्वचम्। परिधाय वसित्वा। अत्र मनुः—"कार्ष्णरौरवबास्तानि चर्माणि ब्रह्मचारिणः। वसीरन्नानुपूर्व्येण" इति। पितुः सकाशादेव शस्त्राणि शिक्षितवान्। मेध्यां शास्त्रीयत्वाच्छुचिम्। मन्त्रवत् समन्त्रकम्। पितुरेवेत्यवधारणमुपपादयति—स तद्गुरुः क्षितौ केवल-

---

1 स।

मेकपार्थिवो न, एकधनुर्धरोऽप्यभूत् इति । न हि दिलीपस्य प्रधानपार्थिवत्वमात्रं अपि तु प्रधानधनुर्धरत्वमपीत्यर्थः ॥

महोक्षतां वत्सतरः स्पृशन्निव
द्विपेन्द्रभावं कलभः श्रयन्निव ।
रघुः क्रमाद्यौवनभिन्नशैशवः
पुपोष गाम्भीर्यमनोहरं वपुः ॥ ३२ ॥

**प्रका**—इत्थं कौमारमुपवर्ण्य यौवनावतारं वर्णयति—**महोक्षेति** ॥ वत्सतरो दम्यः । स्पृशन् श्रयन्नित्याभ्यामनवगाढत्वद्योत्यते । क्रमात् कालपर्यायेण । यौवनेन भिन्नं संमिश्रं शिथिलीकृतं शैशवं यस्येति । गाम्भीर्येति पुरुषधर्मस्य गाम्भीर्यस्य व्यञ्जके वपुर्गुणे गाम्भीर्यमुपचरितम् ॥

**पदा**—यौवनारम्भं वर्णयति—**महोक्षतामिति** ॥ रघुः क्रमाद्गाम्भीर्यमनोहरं वपुः पुपोष । गाम्भीर्येण मनोहरम् । महोक्षतां स्पृशन् वत्सतर इव । स्पृशन् प्राप्नुवन् । वत्सतरो बालवृषः । द्विपेन्द्रभावं श्रयन् कलभ इव । कलभः करिपोतकः । यौवनेन भिन्नं शिथिलीकृतं शैशवं यस्य । यौवनसंमिश्रशैशव इत्यर्थः ॥

अथास्य गोदानविधेरनन्तरं
विवाहदीक्षां निरवर्तयद्गुरुः ।
नरेन्द्रकन्यास्तमवाप्य सत्पतिं
तमोनुदं दक्षसुता इवाबभुः ॥ ३३ ॥

**प्रका**— तदवस्थोचितं विधिमाह—**अथेति** ॥ गोदानं षोडशवर्षे कार्यं व्रतम् । गावो लोमानि । 'रश्मिदृग्बाणलोमसु' इति केशवः । तेषां दानमवखण्डनम् । केशादिवपनमित्यर्थः इति केचिदन्वर्थयन्ति । परे तु—'दक्षिणं गोदानमुनत्ति' इत्यापस्तम्बवचनात् दक्षिणं गोदानं दक्षिणं केशपक्षम् उनत्तीत्यर्थानुसन्धानद्वारेणात्रापि गोदानं केशपक्षः । गोदानविधिरिति दक्षिणकेशपक्षगतो वपनविधिरिति व्याचक्षते । एतयोः पश्चिमः पक्षो विश्वसनीयः । राजशेखरेणाप्ययमर्थः सूचितः 'गोदानमङ्गळविधेः' इत्यादिना इति दक्षिणावर्तः । विवाहदीक्षां विवाहसंकल्पम् । तमोनुदं चन्द्रम् । दक्षसुतास्ताराः ॥

**पदा—अथेति ॥** अथ गुरुः अस्य गोदानविधेरनन्तरं विवाहदीक्षां निरवर्तयत् । गोदानं नाम षोडशवर्षे कार्यो व्रतविशेषः तस्य विधिर्विधानम् । विवाहदीक्षां विवाहसङ्कल्पम् । संकल्पपूर्वं हि वैदिकं कर्म । निरवर्तयत् निर्वर्तयामास । नरेन्द्रकन्यास्तं सत्पतिमवाप्याबभुः । सत्पतिं सन्तं पतिम् आभिजात्यादिभिरनुरूपं भर्तारम् । दक्षसुतास्तमोनुदमिव । दक्षसुता अश्विन्याद्यास्ताराः । तमोनुदं चन्द्रम् । 'चन्द्राग्न्यर्कास्तमोनुदः' इत्यमरः । उपमया नयनानन्दकरत्वमन्योन्यानुरागश्च द्योत्यते ॥

युवा युगव्यायतबाहुरंसलः
कवाटवक्षाः परिणद्धकन्धरः ।
वपुःप्रकर्षादजयद्गुरुं रघु-
स्तथापि नीचैर्विनयाददृश्यत ॥ ३४ ॥

**प्रका**—अथ प्रकृतस्य वयसः सर्वकार्यक्षमां पूर्णतामनुवदन् तथाविधामेव तत्कृतां वपुषोऽपि पूर्णतां दर्शयति—**युवेति** ॥ व्यायतं दीर्घम् । परिणद्धं विशालम् । प्रकर्षात्पूर्णत्वात् । अजयदत्यशेत । नीचैर्न्यग्भावेन । विनयः प्रश्रयः ॥

**पदा—युवेति** ॥ रघुर्वपुःप्रकर्षाद्गुरुमजयत् । वपुषः प्रकर्षात् । उत्कर्षात् । अजयदत्यशेत । युवा पूर्णयौवनः । युगव्यायतौ दीर्घौ बाहू यस्य । 'बलवान्मांसळोंऽसळः' इति सिंहः । वक्षसः कवाटोपमया विस्तीर्णत्वं निम्नोन्नतत्वाद्यभावश्च द्योत्यते । परिणद्धा विशाला कन्धरा ग्रीवा यस्य । तथापि विनयान्नीचैः अदृश्यत । विनयात् प्रश्रयात् । नीचैः न्यग्भावेन ॥

**ततः प्रजानां चिरमात्मना धृतां
नितान्तगुर्वीं लघयिष्यता धुरम् ।
निसर्गसंस्कारविनीत इत्यसौ
नृपेण चक्रे युवराजशब्दभाक् ॥ ३५ ॥**

**प्रका**—अथ तदवस्थोचितमधिकारमाह—**तत इति** ॥ चिरं असहायस्यैव तां धुरं धृतवतः तदानीं तत्करणमप्युचितमेवेति भावः । धूर्भारः । परिपालनमित्यवोचाम । लघयिष्यता लघ्वीं करिष्यता । युवराजस्यापि

  

धूरुद्वहनसंविभागित्वात्। वक्ष्यति च—'तामेकतस्तव बिभर्ति गुरुर्विनिद्रः' इत्यादि। निसर्गेण संस्कारेण च विनीत इति। अत्र मुनिः—कृतकः स्वाभाविकश्च विनयः' इति। युवराजशब्दभाक् युवराजेति व्यपदेश्यः॥

**पदा—तत इति॥** ततोऽसौ निसर्गसंस्कारविनीत इति नृपेण युवराजशब्दभाक्चक्रे। निसर्गविनीतश्चासौ संस्कारविनीतश्चेति विग्रहः। निसर्गेण स्वभावतः। जन्मान्तरसुकृतेनेत्यर्थः। संस्कारेण शास्त्राधिगमादिना च विनीतः कृतविनयः। अत्र कौटल्यः—'कृतकः स्वाभाविकश्च विनयः' इति। वक्ष्यति च—'स्वाभाविकं विनीतत्वं तेषां विनयकर्मणा' इत्यादि। इतिशब्दो हेतौ। युवराजशब्दं भजत इति युवराजशब्दभाक्। यौवराज्येऽभिषिक्तवानित्यर्थः। प्रजानां धुरं भारम्। परिपालनव्यापारमित्यर्थः। लघयिष्यता लघूकरिष्यता। अत्यायासं परिहरिष्यतेत्यर्थः। आत्मना चिरं धृताम्। एतावन्तं कालमात्मनैव धृताम्। नितान्तगुर्वी गुरुतराम्॥

**नरेन्द्रमूलायतनादनन्तरं**
**तदास्पदं श्रीर्युवराजसंज्ञितम्।**
**अगच्छदंशेन गुणाभिलाषिणी**
**नवावतारं कमलादिवोत्पलम्** ॥ ३६ ॥

**प्रका—**तत्कार्यमाह—**नरेन्द्रेति॥** मूलायतनात् प्रधानगृहात्। अनन्तरं प्रत्यासन्नम्। स एवास्पदं प्रतिष्ठेति कर्मधारयः। 'प्रतिष्ठाकृत्यमास्पदम्' इति सिंहः। संज्ञितमिति प्राक्संज्ञामेव प्रतिपालितवतीति द्योत्यते। श्रीः राजलक्ष्मीः। अंशेन न तु साकल्येन। अत्र हेतुः—गुणाभिलाषिणी उभयोरपि गुणान् विनयादीन् अभिलषन्ती। नवावतारमिति। नवत्वकुतूहलेनेवेत्युत्प्रेक्षाध्वनिः। नवाभिलाषिण्यो हि योषित इत्यर्थान्तरन्यासध्वनिश्च। कमलोत्पलोपमानेनाधिकारतारतम्यं द्योत्यते। अतो न गुणतारतम्यं मन्तव्यम्॥

**पदा—नरेन्द्रेति॥** श्रीर्नरेन्द्रमूलायतनादनन्तरं युवराजसंज्ञितं तदास्पदमंशेनागच्छत्। श्रीः राजलक्ष्मीः। नरेन्द्रादेव मूलायतनात् प्रथमगृहात्।

1 थम।

अनन्तरं यौवराज्यप्राप्त्यनन्तरम्। युवराज इति संज्ञितं कृतसंज्ञम्। तदास्पदमित्यत्र रूपकम्। अंशेन न तु कात्स्न्येन। कमलान्नवावतारमुत्पलमिव। अत्र नवावतारमित्यनेन नवत्वकुतूहलादिवेत्युत्प्रेक्षाध्वनिः। नवाभिलाषिण्यो हि योषित इत्यर्थान्तरन्यासध्वनिश्च। गुणानभिलषितुं शलीमस्या इति तथा। राजद्रव्यं गतान् विनयादिगुणान् पुष्पद्रव्यं गतान् सौरभ्यादिगुणानप्याकांक्षमाणेत्यर्थः। इदमंशेन प्राप्तौ हेतुः॥

विभावसुः सारथिनेव वायुना
घनव्यपायेन गभस्तिमानिव।
बभूव तेनातितरां दुरुत्सहः[1]
कटप्रभेदेन करीव पार्थिवः ॥ ३७ ॥

प्रका—विभावसुरिति॥ सारथिनेति गुणभाव[2] उक्तः। गुणभाव एव हि वायोर्वह्न्युपकारत्वम्। अन्यथोपघातकत्वमपि स्यात्। घनव्यपायः शरत्। तेनेति युवराजपदं प्रापितेन। दुरुत्सहो दुर्धर्षः। कटप्रभेदो मदनिर्गमः। अत्रोपमानत्रयेण क्रमाच्छीघ्रकारित्वं, दुस्सहप्रतापत्वं, अनिवार्योद्यमत्वं च द्योत्यते। अनेन श्लोकत्रयेण क्रमात् अधिकारप्राप्तिः तद्विषयं लब्धप्रशमनं तत्फलं च दर्शितम्॥

पदा—विभावसुरिति॥ पार्थिवः तेन अतितरां दुरुत्सहः बभूव। दुरुत्सहो दुर्द्धषः। विभावसुः सारथिना वायुना इव। विभावसुरग्निः। सारथिना सहकारिणा। अनेनोपमानेन क्षिप्रकारित्वं द्योत्यते। गभस्तिमान् घनव्यपायेन इव। गभस्तिमानादित्यः। घनव्यपायः शरत्। अनेन दुस्सहप्रतापत्वम्। करी कटप्रभेदेन इव। कटप्रभेदो मदनिर्गमः। अनेनानिवार्योद्यमत्वम्॥

नियुज्य तं होमतुरंगरक्षणे
धनुर्धरं राजसुतैरनुद्रुतम्।
अपूर्णमेकेन शतक्रतूपमः
शतं क्रतूनामपविघ्नमाप सः ॥ ३८ ॥

1 सुदुस्सहः। 2 गानुभाव:

**प्रका**—अथ तदधिकारोचितमपदानं वर्णयितुमारभते—**नियुज्येति** ॥ धनुर्धरं आत्मानमिवैकधनुर्धरम् । अथवा—नित्योद्यतधन्वानम् । राजसुतैरनुद्रुतमनुगतम् । अत्र च श्रुतिं प्रमाणयन्ति व्याख्यातारः । शतक्रतूपम इति योग्यता । अपविघ्नमिति तुरंगरक्षितुर्जागरूकत्वादिनेत्यर्थः । शतमिति । अश्वमेधशतयाजिनः खलु पूर्वे राजानः । यथाह महाभारते—"आहर्ता वाजिमेधस्य शतसंख्यस्य पौरवः" इति । अत्र नियोगस्य वाक्यशक्त्या क्रत्वङ्गत्वम् ॥

**पदा—नियुज्येति** ॥ सः तं होमतुरंगरक्षणे नियुज्य क्रतूनां शतं अपविघ्नम् आप । अश्वमेधे हि तुरंगमप्रचारः पूर्वं कर्तव्यः । तस्य भूप्रदक्षिणे केनापि राज्ञा निरोधः कृतश्चेत् तं जित्वा तुरंगमश्च नेतव्यः । पुनश्च तेन होमः कार्यः । अत एव तद्रक्षणे पुत्रनियोगः । अपविघ्नम् अपगतविघ्नमिति क्रियाविशेषणम् । एकेन अपूर्णं न्यूनम् । एकोनशतमित्यर्थः । राजपुत्रैरनुगतं तुरंगरक्षणे राजपुत्राणामनुगमनं श्रुतिचोदितम् । शतक्रतुना देवेन्द्रेण उपमा यस्य ॥

**अतः[1] परं तेन मखाय यज्वना**
**तुरंगमुत्सृष्टमनर्गळं पुनः ।**
**धनुर्भृतामग्रत एव रक्षिणां**
**जहार शक्रः किल गूढविग्रहः** ॥ ३९ ॥

**प्रका—अत इति** ॥ अतो नवनवतितमादित्यर्थः । परमूर्ध्वम् । मखाय शततमाय । यज्वनेति तदाहितलोकतन्त्रेण निर्वृतेन यजनरसिकेनेत्यर्थः । उत्सृष्टं मुक्तम् । अनर्गळमव्याहतस्वैरगतम् । अत्रापस्तम्बः—'अपर्यावर्तयन्तोऽश्वमनुचरन्ति' इति । पुनश्शब्दः सविघ्नत्वविशेषद्योतकः । धनुर्भृतां नित्योद्यतधन्वनाम् । अग्रतः पुरत एवेति विस्मयावहत्वं द्योतयति । रक्षिणां कुमारप्रभृतीनाम् । किलशब्दो वार्तायाम् । इति हि श्रूयत इत्यर्थः । गूढो विग्रहः शरीरं यस्येति । तथा—पूर्वमज्ञातो विग्रहो विरोधो यस्येति तन्त्रेणार्थद्वयम् । विरोधे विज्ञाते तत्प्रतिविधानमपि ते कुर्युरिति भावः ॥

**पदा—अतःपरमिति** ॥ अतःपरं यज्वना तेन मखाय उत्सृष्टं अनर्गळं तुरंगं पुनः शक्रः धनुर्भृतां रक्षिणाम् अग्रतः एव जहार किल । अतःपरं नवन-

1 ततः ।

वतितमादूर्ध्वम् । 'यज्वा तु विधिनेष्टवान्' इत्यमरः । यजनरसिकेनेत्यर्थः । मखाय यागाय । उत्सृष्टं मुक्तम् । अनर्गळमव्याहतगतिम् । अत्रापस्तम्बः— 'अपर्यावर्तयन्तोऽश्वमनुचरन्ति' इति । रक्षिणां रक्षणजागरूकाणाम् । गूढो विग्रहः शरीरं यस्य । प्रत्यक्षेणैव प्राप्तौ दुरभिभवत्वशङ्कयेति भावः ॥

विषादलुप्तप्रतिपत्ति विस्मितं
कुमारसैन्यं सपदि स्थितं च तत् ।
वसिष्ठधेनुश्च यदृच्छयागता
श्रुतप्रभावा ददृशेऽथ नन्दिनी ॥ ४० ॥

प्रका--विषादेति ॥ 'प्रारब्धकार्यासिध्यादेर्विषादः सत्वसंक्षयः' इति । तदात्मना विषादेन लुप्ता प्रतिपत्तिः प्रतिभा तत्कालोचितकर्तव्यज्ञानं यस्य । विस्मितमिति अग्रतःस्थितस्यादर्शनात् । यदृच्छया दैवादेवेत्यर्थः । श्रुतः प्रभवो रघोरुत्पत्तिहेतुतया यस्याः । ददृशे इति कर्मणि । अथेति वाक्यादौ योज्यम् । नन्दिनीति नामापि तत् तदानीमन्वर्थं जातमिति भावः । अत्रोभयतो निविष्टाभ्यां चशब्दाभ्यां युगपत्स्थितिदर्शने समुच्चीयेते इति समुच्चयोलङ्कारः । तदुक्तम्---"समुच्चयोसौ स त्वन्यो युगपद्या गुणक्रिया" इति । यथा--'अयमेकपदे तया वियोगः इत्यादि ॥

पदा--विषादेति ॥ तत् कुमारसैन्यं सपदि विषादलुप्तप्रतिपत्ति विस्मितं स्थितं च । विषादेन सत्त्वसंक्षयेण लुप्ता नष्टा प्रतिपत्तिस्तत्कालोचितकर्तव्यज्ञानं यस्य । "प्रारब्धकार्यासिध्यादेर्विषादः सत्त्वसंक्षयः" इति दशरूपके । अग्रे स्थितस्य सद्य एवादर्शनात् विस्मितम् । अथ नन्दिनी वसिष्ठधेनुः ददृशे च । ददृशे इति कर्मणि । नन्दिनीति नामापि तदानीमन्वर्थमभूदिति भावः । यदृच्छया दैवात् । आगता । रघोरुत्पत्तिहेतुतया श्रुतः प्रभावो यस्याः । अत्र सैनिकावस्थानस्य धेनुदर्शनस्य च यौगपद्येन समुच्चयात्समुच्चयोऽलङ्कारः । 'स त्वन्यो युगपद्या गुणक्रिया' इति ॥

तदङ्गनिष्यन्दजलेन लोचने
प्रमृज्य पुण्येन पुरस्कृतः सताम् ।
अतीन्द्रियेष्वप्युपपन्नदर्शनो
बभूव भावेषु दिलीपनन्दनः ॥ ४१ ॥

**प्रका**--रघोः प्रतिभानलोपो नेत्याह--**तदङ्गेति** ॥ अङ्गनिष्यन्दजलं मूत्रम्। पुण्येन पावनेन। पुरस्कृतः पूजितः। सतां सद्भिः। 'क्तेन च पूजायाम्' इति षष्ठी 'न लोकाव्यय' इत्यस्यापवादः। अनेन तदानीं तदनुग्रहस्य युक्तता द्योत्यते। उपपन्नमवाप्तं दर्शनं यस्य। भावेषु पदार्थेषु। दिलीपनन्दन इति। तस्य तदङ्गनिष्यन्दजलेन लोचनप्रमार्जने प्रतिभानं युक्तमेवेति भावः॥

**पदा**--रघोस्तु प्रतिभालोपो नाभूदित्याह--**तदङ्गेति** ॥ दिलीपनन्दनः तदङ्गनिष्यन्दजलेन लोचने प्रमृज्य अतीन्द्रियेषु भावेषु अपि उपपन्नदर्शनः बभूव। तस्या अङ्गनिष्यन्दजलेन मूत्रेण। अतीन्द्रियेषु इन्द्रियमतिक्रम्य वर्तमानेषु। भावेषु पदार्थेषु। उपपन्नं प्राप्तं दर्शनं यस्य। तन्मूत्रेण नेत्रप्रमार्जनानन्तरं रघोरतीन्द्रियमपि पदार्थसार्थं प्रत्यक्षमभूदित्यर्थः। पुण्येन पावनेन। सतां पुरस्कृतः सद्भिः पूजितः। 'क्तेन च पूजायाम्' इति षष्ठी। 'न लोक' इत्यादेरपवादोऽयम्। इदं च सद्य एव तादृशप्रतिपत्तौ हेतुः॥

**स पूर्वतः पर्वतपक्षशातनं**
**ददर्श देवं नरदेवसंभवः।**
**पुनःपुनः सूतनिषिद्धचापलं**
**हरन्तमश्वं रथरश्मिसंयतम्** ॥ ४२ ॥

**प्रका**--**स इति** ॥ पूर्वतोऽग्रतः। पर्वतपक्षशातनमिति विरोधिविध्वंसनप्रथितशक्तिकत्वं द्योतयति। नरदेवेति अस्यापि तथाविधत्वं द्योत्यते। पुनः पुनरिति अव्याहतखैरगमनत्वेन चापलपरिशीलनात्। रथस्य रश्मिना प्रग्रहेण। 'किरणप्रग्रहौ रश्मी' इति सिंहः॥

**पदा**--अतीन्द्रियदर्शनस्य फलमाह--**स इति** ॥ सः नरदेवसंभवः पूर्वतः पर्वतपक्षशातनं देवं ददर्श। पूर्वतः अग्रे। पर्वतानां पक्षौ शातयति छिनत्तीति तथा। अश्वं हरन्तम्। पुनःपुनः सूतेन निषिद्धं चापलं चपलकर्म यस्य। चिरपरिचितस्य खैरसञ्चारस्य सद्य एव निरोधाच्चापलोपपत्तिः। रथस्य रश्मिना प्रग्रहेण संयतं बद्धम्। 'किरणप्रग्रहौ रश्मी' इति सिंहः॥

**शतैस्तमक्ष्णामनिमेषवृत्तिभि-**
**र्हरिं विदित्वा हरिभिश्च वाजिभिः।**

अवोचदेनं गगनस्पृशा रघुः
स्वरेण धीरेण निवर्तयन्निव ॥ ४३ ॥

**प्रका—शतैरिति ॥** अर्थाद्दशभिः। अनिमेषवृत्तिभिरित्यनेन देवस्तावदिति प्रथमप्रतीतिर्द्योत्यते। हरिभिः कपिलैः[1]। गगनस्पृशा उच्चैस्तरेण। धीरेण धैर्यव्यञ्जकेनेत्यर्थः। अथवा—शब्दान्तरानभिभवनीयेन। स्वरेण कण्ठजस्वनेन। निवर्तयन्निवेति। स्वरस्य तथाभावेनापकारिणः क्षेमेण गृहगमनप्रत्याशाभञ्जकत्वेन निवर्तनमुत्प्रेक्ष्यते ॥

**पदा—शतैरिति ॥** रघुः अनिमेषवृत्तिभिः अक्ष्णां शतैः हरिभि. वाजिभिः च तं हरिं विदित्वा एनमवोचत्। निमेषे वृत्तिर्वर्तनं तद्रहितैः। निमेषवृत्तिर्निमेषव्यापारः तद्रहितैरितिवा। शतैः समूहैः। दशभिः शतैरिति वा। हरिभिः पिङ्गलवर्णैः हरिमिन्द्रं विदित्वा। गगनस्पृशा धीरेण स्वरेण निवर्तयन्निव। गगनं स्पृशतीति गगनस्पृक्। धीरेण धैर्यव्यञ्जकेन। अत्र देवेन्द्रेत्युच्चैस्तरां वक्ष्यमाणया संबुद्ध्या जायमानमाभिमुख्यं तादृशस्वरविहितत्वेनोत्प्रेक्ष्यते। स्वरस्य प्रग्रहादिसाम्यं च प्रतीयते ॥

मखांशभाजां प्रथमो मनीषिभि-
स्त्वमेव देवेन्द्र सदा निगद्यसे।
अजस्रदीक्षाप्रयतस्य मद्गुरोः
क्रियाविघाताय कथं प्रवर्तसे ॥ ४४ ॥

**प्रका--मखांशेति ॥** यदेति पाठे यस्मादित्यर्थः। अजस्रेति क्रियायां स्थैर्यं प्रयतेत्यविकलत्वं च द्योत्यते। कथमिति अत्यन्तासंभाव्यमेवैतदित्यर्थः। स्वार्थहानौ कः प्रवर्तेतेति भावः ॥

**पदा--मखांशेति ॥** देवेन्द्र त्वम् एव सदा मनीषिभिः मखांशभाजां प्रथमः निगद्यसे। मनीषिभिर्विद्वद्भिः। मखस्यांशं भजन्त इति मखांशभाजस्तेषाम्। प्रथम इति निगद्यसे कथ्यसे। अजस्रदीक्षाप्रयतस्य मद्गुरोः क्रियाविघाताय कथं प्रवर्तसे, स त्वमित्यर्थाल्लभ्यते। अजस्रं नियमेन दीक्षाभिर्यागारम्भकर्तव्याभिः क्रियाभिः प्रयतस्य शुद्धस्य। सर्वदाप्यविकलकर्मकारिण



1 हरितैः।

इत्यर्थः। कथमित्यनेनात्यन्तासंभाव्यत्वमुक्तम्। न हि कश्चिदपि स्वार्थहानौ प्रवर्तेत इति भावः॥

त्रिलोकनाथेन सता[1] मखद्विष-
स्त्वया नियम्या ननु दिव्यचक्षुषा।
स चेत्स्वयं कर्मसु धर्मचारिणां
त्वमन्तरा[2]यीभवसि च्युतो विधिः ॥ ४५ ॥

**प्रका**——किमेतावता स्वार्थहानिरन्यतोऽपि स्वार्थस्य लभ्यत्वादित्याह——**त्रिलोकेति**॥ सता भवता। मखद्विष इति। द्वेषसमय एव नियमनीया इत्यर्थः। नियम्या इति। विघ्नकरणात्प्रागेवेति शेषः। ननुः संप्रधारणे। कथं तथा नियमनमित्याह—दिव्यचक्षुषेति। मनोगतमपि ज्ञातुं शक्यमेव तवेत्यर्थः। स्वयमिति प्रत्युतात्मनैव। धर्मचारिणां न त्वपचिकीर्षया तपःप्रभृत्यनुतिष्ठताम्। च्युतोऽत्यन्तास्तमितः। विधिर्वैदिकमनुष्ठानम्। एवं च सर्वतोऽपि यज्ञांशानां दुर्लभत्वं त्रिलोकपरिहाणिश्च तव स्यादिति भावः॥

**पदा**—नन्वन्यतोऽपि यज्ञांशस्य लभ्यत्वान्नैतावता स्वार्थहानिरत आह——**त्रिलोकेति**॥ त्रिलोकनाथेन सता त्वया मखद्विषः नियम्याः ननु। त्रैलोक्याधिपतित्वमनुभवता त्वया यज्ञद्विषो विघ्नकरणात्प्रागेव निवारणीया एव। प्रागेव निवारणे सामर्थ्यमाह——दिव्यचक्षुषेति। सः त्वं स्वयं धर्मचारिणां कर्मसु अन्तरायीभवसि चेत् विधिः च्युतः। अन्तरायीभवसीत्यभूततद्भावे च्विः। स्वयमेव न त्वन्यमुखेन। तादृशस्त्वमेव धर्मानुष्ठानशीलानां कर्मसु विघ्नकारी भवसि चेत् विधिश्चोदितकर्मानुष्ठानं च्युतोऽत्यन्तास्तमितः। अतः कथमन्यतो लभ्यत इति भावः॥

तदङ्गमग्र्यं मघवन्महाक्रतो-
रमुं तुरङ्गं प्रतिमोक्तुमर्हसि।
पथः शुचे[3]र्दर्शयितार ईश्वरा
मलीमसामाददते न पद्धतिम् ॥ ४६ ॥

1 सदा। 2 रायो। 3 श्रुतेः।

**प्रका**—तत्किमत्रोचितमित्याह—**तदिति** ॥ तत् तस्मात् यस्माद्विधिरत्यन्तमुच्छिद्येत। अग्र्यं प्रधानं अनेनाप्रतिनिधेयत्वमुक्तम्। गुणा हि प्रतिनिधीयन्ते। महाक्रतोरिति प्रत्यवायगौरवमुक्तम्। अमुमित्यनपलपनीयत्वम्। प्रतिमोक्तुं प्रत्यर्पयितुम्। अर्हसि। एतदेव तवानुरूपमित्यर्थः। शुचेरनुपहतस्य। दर्शयितारः स्वयमाचरणेन नियमनेन चोपदेष्टारः। नाददते। अपि तु प्रमादात्स्पृशेयुरिति। पद्धतिं पन्थानम्। पथिपद्धतिशब्दाभ्यामाचारो लक्ष्यते। द्योत्यते च सदसज्जनप्रहतत्वम्। आदानेनानुष्ठानं लक्ष्यते। झटित्यपरित्यागश्च द्योत्यत इत्ययमत्यन्ततिरस्कृतवाच्यो ध्वनिभेदः॥

**पदा**—तर्हि किमत्र कर्तव्यमित्यत्राह—तदिति॥ मघवन् तत् त्वं अमुं तुरङ्गं प्रतिमोक्तुम् अर्हसि। तदिति। यस्मादन्यथात्वे क्रतोरत्यन्तास्तमयस्तस्मादित्यर्थः। अमुं प्रत्यक्षदृष्टम्। नायमपलपनीय इति भावः। प्रतिमोक्तुं प्रत्यर्पयितुम्। अर्हसि योग्यो भवसि। एतदेव तवोचितमिति भावः। ननु मुख्याभावे प्रतिनिधिरस्त्वत आह—महाक्रतोः अग्र्यम् अङ्गमिति। प्रधानमङ्गम्। न हि प्रधानाङ्गस्य प्रतिनिधिरिति भावः। ईश्वराः शुचेः पथः दर्शयितारः मलीमसां पद्धतिं न आददते। शुद्धस्य मार्गस्योपदेष्टारो मलिनं मार्गं न स्वीकुर्वन्ति॥

**इति प्रगल्भं रघुणा समीरितं**
**वचो निशम्याधिपतिर्दिवौकसाम्।**
**निवर्तयामास रथं सविस्मयः**
**प्रचक्रमे च प्रतिवक्तुमुत्तरम्** ॥ ४७ ॥

**प्रका**—**इतीति** ॥ प्रगल्भत्वमपरिषद्भीरुत्वम्। तच्च वचस्युपचरितम्। क्रियाविशेषणं वा। अनेन तु सत्त्वप्रकर्षो गम्यते। निवर्तयामासेति। कथमेवंविधमहापुरुषसंवादविमुखा भवामेति। सविस्मय इति। कथमियतः कालाद्दृष्टोऽयमीदृशः पुरुषप्रकाण्ड इति। प्रचक्रम इति प्रतिवचनस्य हेतुप्रपञ्चनपुरस्सरत्वं द्योतयति। अन्यथा 'पुनरुवाच' इत्येव ब्रूयात्। प्रतिवक्तुमित्यनेनैवोत्तरस्य सिद्धत्वेऽपि यदुपादानं तदुचितोत्तरसंक्रान्तं सदर्थान्तरसंक्रामितवाच्यध्वनिव्यपदेशविषयः॥

पदा—इतीति ।। दिवौकसाम् अधिपतिः रघुणा इति प्रगल्भं समीरितं वचः निशम्य सविस्मयः रथं निवर्तयामास । दिवौकसामधिपतिर्देवेन्द्रः। प्रगल्भमिति क्रियाविशेषणं प्रागल्भ्ययुक्तम् । निस्सा्ध्वसमित्यर्थः । अनेन परिषद्भीरुताराहित्यमुक्तम्। अत एव सम्यगीरितम् । उत्तरं प्रतिवक्तुं प्रचक्रमे च। अत्र प्रतिवक्तुमित्यनेनैवोत्तरस्य सिद्धत्वेऽप्युपादानमुत्तरस्य समीचीनत्वं ध्वनतीत्यर्थान्तरसंक्रमितवाच्यध्वनिरयम् ।।

यदात्थ राजन्यकुमार तत्तथा
यशस्तु रक्ष्यं परतो यशोधनैः ।
जगत्प्रकाशं तदशेषमिज्यया
भवद्गुरुर्लङ्घयितुं ममोद्यतः ।। ४८ ।।

प्रका—यदिति ।। यदात्थ तत्तथा । राजन्यकुमारेति । 'मूर्धाभिषिक्तो राजन्यः' इति सिंहः । कुमारस्यापि ते परिणता वाणीत्यभिप्रायः। अथ च राजन्यकुमारस्य प्रजापालनाधिकृतस्य तवोचितमीदृक्सूनृतभाषित्वमिति द्योत्यते । तथेत्यर्धाङ्गीकारगर्भमभिधानम् । तमेव निवृणोति तुशब्देन। त्वदुक्तापवादविषयभूतोऽयं विशेषोऽस्तीति द्योत्यते। परतोऽन्यस्मात् । रक्ष्यमिति । यथा परो न हरेत् । ततः किमत्रेत्याह—जगदिति । प्रकाशं प्रथितम् । तदिति शतक्रतुयाजित्वलक्षणं यशः । अशेषमखण्डम्। समग्रमित्यर्थः । केनेत्याह—इज्ययेति । भवद्गुरुरिति । त्वयि तु तन्निदेशवर्तिनि नापराध इति भावः । लङ्घयितुं प्राप्तुम् । उद्यतो व्यवसितः। इतः पूर्वं लङ्घनं न कृतमपि तु करिष्यत इति भावः । त्वदुक्तं यथार्थमेव । मया तु यशोरक्षणायैवं कृतमित्यर्थः ।।

पदा—यदिति ।। राजन्यकुमार त्वं यत् आत्थ तत् तथा । हे राजन्यकुमार राजपुत्र । राजकुलोचितमेव तवेदं वचनमिति भावः । आत्थेति लटो रूपम् । 'ब्रुवः पञ्चनाम्,' इत्याहादेशो ब्रुवः सिपस्थलादेशश्च । यदि मद्वचनं सत्यं तर्हि दीयतामश्व अत आह—यशस्तु यशोधनैः परतः रक्ष्यमिति । तुशब्दो यशसो रक्षणे विशेषमाह । परशब्दोऽयमात्मव्यतिरिक्तवाचकः । अन्येभ्य इत्यर्थः । ननु रक्ष्यतां ते यशो नात्र वयं परिपन्थिन अत आह—भवद्गुरुः मम तत् अशेषम् इज्यया लङ्घयितुमुद्यत इति । अशेषं

साकल्येन। इज्यया यागेन करणेन। लङ्घयितुं प्राप्तुम्। गत्यर्थोऽयं लघिः। जगति प्रकाशं प्रसिद्धम्। त्वदुक्तं सर्वमपि सत्यमेव, मया तु यशोरक्षणार्थमेवं कृतमित्यर्थः॥

हरिर्यथैकः पुरुषोत्तमः स्मृतो
महेश्वरस्त्र्यम्बक एव नापरः।
तथा विदुर्मां मुनयः शतक्रतुं
द्वितीयगामी न हि शब्द एष नः ॥ ४९ ॥

प्रका– ननु यजने सर्वस्याप्यधिकारात् तदनुषङ्गिणि यशस्यपि साधारणोऽधिकार इत्याह— हरिरिति॥ एकः केवलः। पुरुषोत्तम इति सप्तमीतत्पुरुषः। 'न निर्धारणे' इति षष्ठीप्रतिषेधात्। कर्मधारये च 'सन्महत्परमोत्तम' इति उत्तमपुरुष इति स्यादिति क्षीरस्वामिवचनम्। नापर इति। उपपन्नं चैतदित्यर्थः। अत्रापि 'यथा, स्मृतः, इत्येते अनुषज्येते। तथेति अन्ययोगव्यवच्छेदेन। मुनय इति यथार्थवाचः। न तु पृथग्जनप्रसिद्धिमात्रमिति भावः। न हि द्वितीयगामीति। शब्दस्यैवेदमनन्यगामित्वं शीलमित्यर्थः। एष इति शतक्रतुशब्दः। अथवा जातावेकवचनम्। पुरुषोत्तमादयः शब्दा इत्यर्थः। एष इति वा पाठः॥

पदा—नन्वस्माकमप्यस्ति यजनेऽधिकारः तस्मात्तदनुसारिणी कीर्तिरप्यावयोः समानैवात आह—हरिरिति॥ यथा हरिः एकः पुरुषोत्तमः स्मृतः, त्र्यम्बकः एव महेश्वरः, अपरः न, मुनयः तथा मां शतक्रतुं विदुः। पुरुषेषूत्तमः। 'न निर्धारणे' इति षष्ठीसमासप्रतिषेधात्। मुनयः सत्यवादिन इत्यर्थः। तथा तथैवेत्यर्थः। नः एषः शब्दः द्वितीयगामी न हि। नः हरिप्रभृतीनामस्माकम्। एष शब्द इति जातावेकवचनम्। पुरुषोत्तमादिशब्दा इत्यर्थः। द्वितीयं गन्तुं शीलमस्येति तथा॥

अतोऽयमश्वः कपिलानुसारिणा
पितुस्त्वदीयस्य मयापवाहितः।
अलं प्रयत्नेन तवात्र मानुगाः
पदं पदव्याः सगरस्य सन्ततेः ॥ ५० ॥

**प्रका-- अत इति** ॥ यतो यशोरक्षणे न किञ्चिन्न कर्तव्यम् । कपिलानुसारिणेति । कपिलमुनितुल्येन । तथाविधा शक्तिरस्तीति भावः । पितुः प्रागुक्तयुक्त्यापकारिणः । मया त्रिलोकपालनाधिकृतेनापीत्यर्थः । अपवाहितो नीतः । तत्किं कर्तव्यमित्याह — अलमिति । प्रयत्नेन तवायासादिना । अत्रेति अश्वमोक्षणे । तन्निवर्तस्वेति वाक्यशेषः । मानुगाः नानुसरेः । पदमङ्घ्रिचिह्नम् । पदव्या मार्गस्य । सन्ततेः पुत्राणाम् । तन्मार्गे यानि तत्पदानि तानि तव दीर्घायुषो नान्वेष्टव्यानीत्यर्थः । 'मा कृथाः पदं पदव्यां सगरस्य सन्ततेः' इति वा पाठः ॥

**पदा —अत इति** ॥ अतः त्वदीयस्य पितुः अयम् अश्वः मया अपवाहितः अपहृतः । कपिलानुसारिणा कपिलमुनितुल्यशक्तिकेन । तव अत्र प्रयत्नेन अलम् । अत्र अश्वमोक्षणविषये । सगरस्य सन्ततेः पदव्याः पदं मा अनुगाः । सन्ततेः पुत्राणाम् । पदव्याः मार्गस्य । पदमङ्घ्रिचिह्नम् । सगरपुत्राणां मार्गे यानि तत्पदचिह्नानि, तनि त्वया नान्वेष्टव्यानीत्यर्थः । कपिलमुनितुल्योऽहम्, त्वं तु सगरपुत्रतुल्यो मा भूरिति भवः ॥

**अथ[1] प्रहस्यापभयः पुरन्दरं**
**पुनर्बभाषे तुरगस्य रक्षिता ।**
**गृहाण शस्त्रं यदि सर्ग एष ते**
**न खल्वनिर्जित्य रघुं कृती भवान्** ॥ ५१ ॥

**प्रका** —एवं सावलेपं भयप्रदर्शनगर्भप्रत्याख्यानपरे पुरन्दरे रघोरस्खलितं व्यवसायं दर्शयति—**अथेति** ॥ प्रहस्येति । अविज्ञायैवाशयं रघोर्मुधैव भयोपन्यासायासमाचरसीति प्रहासेन द्योत्यते । अपभयः एकवीराद्देवराजात्तदन्यः को न बिभ्येदिति भावः । पुरन्दरं अरिपुराणां विदारणेन प्रख्यातम् । पुनरिति प्रतिवचनप्रतिभानाव्याहतिं दर्शयति । तुरगस्य रक्षितेति यावांस्तस्य शतक्रतुत्वाभिमानः, तावानेवास्य तुरगरक्षितृत्वाभिमान इत्यर्थः । 'आह पुनः पुरन्दरं व्यपेतभीर्भूमिपुरन्दरात्मजः' इति वा पाठः । गृहाणेति । किं विलम्बनेनेति भावः । नान्यस्मिन्नुपाय आयस्तव्यमित्यर्थः । सर्गो निश्चयः । 'सर्गस्वभावनिर्मोक्षनिश्चयाध्यायसृष्टिषु' इति सिंहः । अनिर्जित्य । वीरधर्मेण इति शेषः ।

1 ततः ।

रघुमिति अस्मदर्थगतं कर्मत्वमन्यत्रारोप्यते। स चारोपो गाढं वीराभिमानमभिव्यनक्ति। यथाह—"महिमा म कर्तृव्यत्यासो नाम गुणः" इति। न खलु कृनीति वाग्भीषिकामात्रेण कृतकृत्यमात्मानं मा मंस्था इति भावः ॥

पदा—तत इति ॥ ततः तुरगस्य रक्षिता प्रहस्य पुनः पुरन्दरं बभाषे। पुरन्दरस्य शतक्रतुत्वाभिमानवदेव रघोस्तुरगरक्षित्वाभिमान इति भावः। नाहं तव बालविभीषिकया चाल्य इति हासेन ध्वन्यते। पुनः पुनरपि। अपभयः अपगतभयः। ते एषः सर्गः यदि शस्त्रं गृहाण। सर्गो निश्चयः। 'सर्गस्वभावनिर्मोक्षनिश्चयाध्यायसृष्टिषु' इति सिंहः। वाक्प्रयासेनालं शस्त्रग्रहण एव सावधानो भवेत्यर्थः। भवान् रघुम् अनिर्जित्य न खलु कृनी। रघुमिति नामग्रहणं वीराभिमानद्योतनार्थम्। खलुशब्दोऽवधारणे। निर्जित्यैव कृती, न वाङ्मात्रेणेति भावः ॥

स एवमुक्त्वा मघवन्तमुन्मुखः
करिष्यमाणः सशरं शरासनम्।
अतिष्ठदालीढविशेषशोभिना।
वपुःप्रकर्षेण विडम्बितेश्वरः ॥ ५२ ॥

प्रका— स इति ॥ एवमिति। वीरधर्मानुष्ठानत्वरया मिताक्षरामित्यर्थः। उक्त्वा अतिष्ठदिति क्रियान्तराव्यवधानेन दक्षत्वमुक्तम्। उन्मुखः उत्तानमुखः, इन्द्रस्याकाशगतत्वात्। करिष्यमाणः कर्तुं व्यवसितः। सशरं सहितशरम्। आलीढः स्थानविशेषः। यथाह यादवः—"स्थानानि धन्विनां पञ्च तत्र वैशाखमस्त्रियाम्। त्रिवितस्त्यन्तरौ पादौ मण्डलं तोरणाकृति ॥ अन्वर्थं स्यात्समपदमालीढन्तु ततोऽग्रतः। दक्षिणे वाममाकुञ्च्य प्रत्यालीढं विपर्ययः॥" इति। कुमारसंभवे चापि – 'स दक्षिणापाङ्गनिविष्टमुष्टिः' इत्यादि। वपुषः प्रकर्षेण संस्थानातिशयेन। विडम्बितेश्वरः अनुकृतपुरदहनोद्युक्तेश्वरः ॥

पदा —स इति ॥ सः मघवन्तं एवम् उक्त्वा आलीढविशेषशोभिना वपुःप्रकर्षेण विडम्बितेश्वरः अतिष्ठत्। आलीढं नाम धन्विनां स्थानविशेषः। अत्र यादवः—"स्थानानि धन्विनां पञ्च तत्र वैशाखमस्त्रियाम्। त्रिवितस्त्यन्तरौ पादौ मण्डलं तोरणाकृति ॥ अन्वर्थं स्यात्समपदमालीढं तु ततोऽग्रतः।

दक्षिणे वाममाकुञ्च्य प्रत्यालीढं विपर्ययः॥" इति। तेन विशेषशोभिना सातिशयशोभिना। वपुषः प्रकर्षेण संस्थानातिशयेन। विडम्बितेऽनुकृत ईश्वरः पुरदहनोद्युक्तो हरो येन। शरासनं सशरं करिष्यमाणः संहितशरं करिष्यमाणः कर्तुं व्यवसितः। उन्मुखः उत्तानवदनः। शक्रस्याकाशाश्रितत्वात् ॥

रघोरवष्टम्भमयेन पत्रिणा
हृदि क्षतो गोत्रभिदप्यमर्षणः।
नवाम्बुदानीकमुहूर्तलाञ्छने
धनुष्यमोघं समधत्त सायकम् ॥ ५३ ॥

**प्रका—रघोरिति॥** अवष्टम्भः स्तम्भनम्। प्रतिबन्ध इत्यर्थः। 'अवष्टम्भः समालम्बे स्तब्धिकाञ्चनयोरपि' इति यादवः। स्तम्भनं च गृहाणेत्यादिना कृतमित्यवसेयम्। तन्मयेन तद्रूपेण। क्षत इत्यनेन पीडितत्वं लक्ष्यते। पीडाया दुःसहत्वं च द्योत्यते। गोत्रभिदिति। गोत्रान् पर्वतान् भिनत्तीति अस्खलितपराक्रमत्वं द्योत्यम्। अमर्षणः कोपनशीलः। नवाम्बुदानीकस्य मुहूर्तं क्षणमात्रं लाञ्छनभूते। मेघेषु रविकरसंपर्कविशेषादाभासमानस्य धनुराकारस्य 'इन्द्रधनुः' इति या प्रसिद्धिः, तामनुसृत्य तदभेदेन व्यवहारः। अमोघमिति। महासुरेष्वमोघत्वेन दृष्टचरमित्यर्थः॥

**पदा—रघोरिति॥** रघोः अवष्टम्भमयेन पत्रिणा हृदि क्षतः गोत्रभित् अपि धनुषि सायकं समधत्त। अवष्टम्भमयेन स्तम्भनस्वरूपेण। 'अवष्टम्भस्समालम्बे स्तब्धिकाञ्चनयोर'पि इति यादवः। अश्वापहारप्रतिबन्धकारिणा गृहाण शस्त्रम् इत्यादिवचनजनितेनाभिसवेनेति यावत्। तत्र च पत्रित्वमारोपितम्। हृदि क्षतः मर्मणि विद्धः। गोत्रान् पर्वतान् भिनत्तीति गोत्रभिदिन्द्रः। अमर्षणः कोपनः। नवस्य वर्षारम्भसमग्रभाविनः अम्बुदानीकस्य जलदजालस्य क्षणमात्रलाञ्छनभूते। रविप्रभासंसर्गविशेषेण जलदे दृश्यमानमिन्द्रधनुरिति या लोकप्रसिद्धिस्तदनुसारेणेयमुक्तिः। अमोघं सफलम्। दैत्यप्रहारेषु दृष्टशक्तिकमित्यर्थः॥

दिलीपसूनोः स बृहद्भुजान्तरं
प्रविश्य भीमासुरशोणितोचितः।

पपावनास्वादितपूर्वमाशुगः
कुतूहलेनेव मनुष्यशोणितम् ॥ ५४ ॥

प्रका – दिलीपेति ॥ दिलीपसूनुत्वेन तथाविधशस्त्रसंपातसहत्वं द्योत्यते। तेन हि महासुरविमर्देषु भीमाः शस्त्रपाताः सहस्रशः सोढा इति। बृहदिति। विस्तीर्णे वक्षसि कुत्रायं पतित इति न ज्ञायत इति द्योत्यम्। भुजान्तरमिति अभिमुख्येन प्रतीष्टत्वम्। भीमेति। भीमासुराणां शोणिते शोणितपाने उचितो योग्यः। अनास्वादितपूर्वमिति। मनुष्याणामल्पसारत्वात् इन्द्रशरगोचरताया इदंप्रथमता द्योत्यते। अत एव कुतूहलस्य हेतुत्वोत्प्रेक्षा ॥

पदा — दिलीपेति ॥ सः आशुगः दिलीपसूनोः बृहत् भुजान्तरं प्रविश्य मनुष्यशोणितं पपौ। 'आशुगौ वायुविशिखौ' इत्यमरः। भुजान्तरं वक्षःप्रदेशम्। उत्प्रेक्षते — कुतूहलेनेवेति। भीमानां भयंकराणाम्। असुराणां शोणिते शोणितपाने उचितो योग्यः। अत एव अनास्वादितपूर्वम् इतःपूर्वमनास्वादितम्। अनेन भृङ्गाणां मधुपानप्रकारो द्योत्यते। तेन च पीडाया अभावः ॥

हरेः कुमारोऽपि कुमारविक्रमः
सुरद्विपास्फालनकर्कशाङ्गुलौ।
भुजे शचीपत्रलताक्रियोचिते
स्वनामचिह्नं निचखान सायकम् ॥ ५५ ॥

प्रका — हरेरिति ॥ कुमारस्य स्कन्दस्येव विक्रमो यस्येति। अनेन शक्रविजयशक्तत्वं द्योत्यते। श्रूयते हि---भगवता कुमारेण शक्रो विजित इति। आस्फालनमारूढेन युद्धादिषु गजानामुद्धर्षणाय क्रियत इत्यनुसन्धेयम्। विशेषणाभ्यां च भुजस्य वीरश्रृङ्गाररसर्वस्वता द्योत्यते। स्वनामचिह्नमिति। 'अहमेष तवापकारी' इति स्वपौरुषप्रकटनाय स्वनामाङ्कशरप्रयोगो वीराणाम् ॥

पदा - हरेरिति ॥ कुमारः अपि हरेः भुजे सायकं निचखान। निचखान गाढं प्रहृतवानित्यर्थः। कुमारस्य स्कन्दस्य विक्रम इव विक्रमो यस्य। अनेन शक्रजयसामर्थ्यमुक्तम्। स्कन्दः शक्रं जिगाय इति पुराणप्रसिद्धिः। सुरद्विपस्यैरावतस्यास्फालनेन युद्धोद्यमे गजानामुद्धर्षणार्थं क्रियमाणेन ताडनेन

कर्कशा अङ्गुलयो यस्य। अनेन भुजस्य वीररसोत्कर्ष उक्तः। शच्याः पत्रलताक्रियायां पत्रलताविधाने योग्ये। अनेन तस्यैव शृङ्गाररसोत्कर्षः। स्वस्य नामैव चिह्नं यस्य। अहमेव तवापकारीति प्रथयितुं तादृशशरनिखननम्। तच्च वीरस्वभावः ॥

जहार चान्येन मयूरपत्रिणा
शरेण शक्रस्य महाशनिध्वजम्।
चुकोप तस्मै स भृशं सुरश्रियः
प्रसह्य केशव्यपरोपणादिव ॥ ५६ ॥

प्रका - जहारेति ॥ हरणेन भङ्गो लक्ष्यते। द्योत्यते च तच्छेषताहानिः। अन्येनेति शरविशेषानपेक्षा द्योत्या। मयूरपत्त्रिणेति श्लाघ्यं विशेषणम्। तद्योगश्चोदात्तत्वम्। महाशनिरूपं ध्वजम्। प्रसह्य अभिभूय। व्यपरोपणं छेदनम्। वक्ष्यति च--'पक्षव्यपरोपणे'ति ॥

पदा--जहारेति ॥ अन्येन शरेण शक्रस्य महाशनिध्वजं जहार च। महाशनिरूपं ध्वजम्। मयूरस्य शिखण्डिनः पत्रमस्यास्तीति तथा। श्लाघ्यविशेषणमिदम्। सः तस्मै भृशं चुकोप। 'क्रुधद्रुह' इत्यादिना चतुर्थी। सुरश्रियः प्रसह्य केशव्यपरोपणादिव। सुरश्रियः सुरलक्ष्म्याः। प्रसह्य अभिभूय। केशानां व्यपरोपणात् छेदादिव। अत्रोपमा ॥

तयोरुपान्तस्थितसिद्धसैनिकं
गरुत्मदाशीविषभीमदर्शनैः।
बभूव युद्धं तुमुलं जयैषिणो-
रधोमुखैरूर्ध्वमुखैश्च पत्रिभिः ॥ ५७ ॥

प्रका—तयोरिति ॥ उपान्तस्थित्या युद्धदर्शनकुतूहलित्वं द्योत्यते। गरुत्मन्तो गरुडजातीयाः। तेषामाशीविषाणां च निसर्गवैरत्वाद्बाध्यबाधकभाव एवात्र विवक्षितः। न तु तत्प्रतिनियमोऽपि। तुमुलं व्यामिश्रं भिन्नप्रकाररिति। उभावपि जये यत्तौ। न त्वेको जयेऽन्यः प्रतिविधाने। जयैषिणोमुखैरित्यादिना समरस्य वैषम्यं प्रतिपाद्यते। अधो-

पदा—तयोरिति ॥ तयोः अधोमुखैः ऊर्ध्वमुखैः च पत्रिभिः तुमुलं युद्धं बभूव। अत्र पत्रिणामधोमुखत्वोर्ध्वमुखत्वाभ्यां रघोर्युद्धस्य दुष्करत्वमुक्तम्। तेन च प्रहारसामर्थ्यं ध्वन्यते। पत्रिभिः शरैः। तुमुलं व्यामिश्रम् बहुप्रकारमित्यर्थः। 'तुमुलं तु क्ली व्यामिश्रे समरे' इति केशवः। उपान्ते समीपे स्थिताः सिद्धाः सिद्धविद्याधरप्रभृतयः सैनिका भटाश्च यत्र। अनेन तेषां युद्धदर्शनमात्रपरत्वमुक्तम्। गरुत्मन्तो गरुडजातीयाः पक्षिविशेषाः आशीविषाः पन्नगाः तद्वद्भीमं भयङ्करं दर्शनं येषाम्। अनेन वैरप्राबल्यमधोमुखत्वमूर्ध्वमुखत्वं च दर्शितम्। न तु पराजये नियतत्वमपि। जयैषिणोर्जयाभिलाषिणोः ॥

अपि[1] प्रबन्धप्रहितास्त्रवृष्टिभि-
स्तमाश्रयं दुष्प्रसहस्य तेजसः।
शशाक निर्वापयितुं न वासवः
स्वतश्च्युतं वह्निमिवाद्भिरम्बुदः ॥ ५८ ॥

प्रका—अपीति ॥ प्रबन्धोऽविच्छेदः। दुष्प्रसहस्य दुरभिभवस्य तेजसो वीर्यस्य। निर्वापयितुं प्रशमयितुम्। स्वतश्च्युतं वैद्युतमित्यर्थः। अत्रोपमाबलात्प्रत्युत वृद्धिरेवेति द्योत्यते ॥

पदा—अपीति ॥ वासवः प्रबन्धप्रहितास्त्रवृष्टिभिः अपि तं निर्वापयितुं न शशाक। प्रबन्धेन प्रहिताभिः अविच्छेदेन प्रयुक्ताभिः। निर्वापयितुं शमयितुम्। न शक्तोऽभूत्। अम्बुदः अद्भिः स्वतः च्युतं वह्निमिव। स्वत आत्मन एव। च्युतं वह्निं वैद्युताग्निमित्यर्थः। अत्रोपमया वैद्यताग्निवदस्यापि वृद्धिरेवेति द्योत्यते। दुष्प्रसहस्य दुरभिभवस्य। तेजसः प्रकृते वीर्यस्य आश्रयम् ॥

ततः प्रकोष्ठे हरिचन्दनाङ्किते
प्रमथ्यमानार्णवधीरनादिनीम्।
रघुः शशाङ्कार्धमुखेन पत्रिणा
शरासनज्यामलुनाद्बिडौजसः ॥ ५९ ॥

1 अति।

**प्रका—तत इति ॥** प्रकोष्ठे मणिबन्धकोर्परमध्ये। हरिचन्दनं नाम देवद्रुमेषु पञ्चस्वेकः। यथा—"पञ्चैते देवतरवो मन्दारः पारिजातकः। सन्तानः कल्पवृक्षश्च पुंसि वा हरिचन्दनम्" इत्यमरः। श्लाघ्यं चेदं विशेषणम्। प्रमथ्यमानेनार्णवेन तुल्यं धीरनादिनीं प्रकोष्ठमाहत्य तथा धीरं नदन्तीमित्यर्थः। शशाङ्कार्धमुखेनेति ज्यापरिणाहद्योतकम्। शरासनज्यामित्यत्र शरासनशब्दः शरासनगताया ज्यायाः छेदनं तत्कर्तुः कृतहस्ततां द्योतयतीति न गतार्थः। ज्यामिति शक्रशरासनस्याच्छेद्यत्वेन प्रसिद्धत्वात्। शरासनच्छेदादपि ज्याछेदस्य दुष्करत्वाद्वा ॥

**पदा—**रघोरपदानातिशयमाह—**तत इति ॥** ततः रघुः शशाङ्कार्धमुखेन पत्रिणा बिडौजसः शरासनज्यामलुनात्। शशाङ्कार्धवत् शशाङ्कैकदेशवत् मुखं यस्य। बिडौजसः इन्द्रस्य। अलुनात् चिच्छेद। प्रकोष्ठे प्रमथ्यमानार्णवधीरनादिनीम्। प्रकोष्ठे मणिबन्धकोर्परमध्ये। प्रमथ्यमानोऽर्णव इव धीरं नदितुं शीलमस्या इति तथा। प्रकोष्ठमाहत्य तद्वन्नदन्तीमित्यर्थः। हरिचन्दनेनाङ्किते अनुलिप्ते। "पञ्चैते देवतरवो मन्दारः पारिजातकः। सन्तानः कल्पवृक्षश्च पुंसि वा हरिचन्दनम्" इत्यमरः ॥ शरासनस्य धनुषः ज्यां मौर्वीम् ॥

स चापमुत्सृज्य विवृद्धमत्सरः
प्रवासनाय[1] प्रबलस्य विद्विषः।
महीध्रपक्षव्यपरोपणोचितं
स्फुरत्प्रभामण्डलमस्त्रमाददे ॥ ६० ॥

**प्रका—स इति ॥** विवृद्धो ज्याछेदेन मत्सरो यस्य। प्रवासनाय निर्हिंसनाय। 'प्रपूर्वको वसिर्ञ्जियः कारितान्तः प्रमापणे' इति भोजराजः। प्रबलस्येति शस्त्रान्तरासाध्यत्वमुक्तम्। महीध्रेत्यादिना त्वप्रतिवार्यत्वमुक्तम्। स्फुरदित्यादिना भीषणत्वमुक्तम् ॥

**पदा—स इति ॥** सः चापम् उत्सृज्य प्रबलस्य विद्विषः प्रवासनाय महीध्रपक्षव्यपरोपणोचितम् अस्त्रम् आददे। विद्विषः शत्रोः। प्रवासनाय हिंसनाय।

1 प्रणाशनाय।

'प्रवासनं परासनं निसूदनं निहिंसनम्' इत्यमरः। महीध्राणां पर्वतानां पक्षव्यपरोपणे पक्षच्छेदे उचितं योग्यं वज्रमित्यर्थः। आयुधान्तरासाध्यत्वं वज्रस्य दृष्टशक्तित्वं चानेन दर्शितम्। विवृद्धमत्सरः विवृद्धः ज्याछेदेन मत्सरो यस्य। स्फुरत् शोभमानं प्रभामण्डलं मण्डलाकारा प्रभा यस्य। अनेन दर्शनसमय एव भीषणत्वमुक्तम्॥

रघुर्भृशं वक्षसि तेन ताडितः
पपात भूमौ सह सैनिकाश्रुभिः।
निमेषमात्रादवधूय तद्व्यथां
सहोत्थितः सैनिकहर्षनिःस्वनैः ॥ ६१ ॥

प्रका—रघुरिति॥ निमेषमात्रादिति सत्त्वातिशय उक्तः। सहोक्तिरलङ्कारः। 'सा सहोक्तिः सहार्थस्य बलादेकं द्विवाचकम्' इति। तत्सहजो हेतुरित्यन्ये॥

पदा—रघुरिति॥ रघुः तेन वक्षसि भृशं ताडितः सैनिकाश्रुभिः सह भूमौ पपात। भृशं ताडितः कोपाधिक्यादत्यन्तं ताडितः। निमेषमात्रात् व्यथाम् अवधूय सैनिकहर्षनिःस्वनैः सह उत्थितः च। अवधूय त्यक्त्वा। मुहूर्तमात्रात् व्यथावधूननं सत्त्वोद्रेकात्। सैनिकानां हर्षजनितैर्निःस्वनैः शब्दैः। अत्र सहोक्तिरलङ्कारः। 'सा सहोक्तिस्सहार्थस्य बलादेकं द्विवाचकम्' इति॥

तथापि शस्त्रव्यवहारनिष्ठुरे
विपक्षभावे स्थिरमस्य तस्थुषः।
तुतोष वीर्यातिशयेन वृत्रहा
पदं हि सर्वत्र गुणैर्निधीयते ॥ ६२ ॥

प्रका—तथेति॥ तथाशब्देन प्रकृतः प्रकारः परामृश्यते। तस्थुषोऽपीत्यन्वयः। व्यवहारः संबन्धः। स्थिरमचलितव्यवसायम्। वृत्रहेति। स्वयं वीरत्वाद्वीरविशेषवेदीत्यर्थः। पदमिति। गुणाः शत्रोरपि हृदयमाक्रामन्तीत्यर्थः॥

पदा—तथेति॥ वृत्रहा अस्य वीर्यातिशयेन तुतोष। अत्र वृत्रहेत्यनेन वीरत्वाद्वीरविशेषविदित्युक्तम्। शस्त्रव्यवहारनिष्ठुरे विपक्षभावे

तथा स्थिरं तस्थुषः अपि । शस्त्राणां व्यवहारेण संबन्धेन निष्ठुरे क्रूरे । विपक्षभावे शत्रुत्वे । तथा पूर्वोक्तप्रकारेण । गुणैः सर्वत्र पदं निधीयते हि । गुणाः शत्रोरपि हृदयमाक्रम्य तिष्ठन्ति हि ॥

असक्तमद्रिष्वपि सारवत्तया
न मे त्वदन्येन विसोढमायुधम् ।
अवेहि मां प्रीतमृते तुरंगमा-
त्किमिच्छसीति स्म[1] तमाह वासवः ॥ ६३ ॥

**प्रका—असक्तमिति ॥** सारो बलम् । अन्येन । केनापि इति शेषः । मां प्रीतमिति । मयि प्रीते किं ते दुर्लभमिति भावः । इति स्म तमाहेति पाठः ॥

**पदा—असक्तमिति ॥** वासवः तम् इति आह स्म उक्तवान । मे आयुधं त्वत् अन्येन न विसोढम् । मम इदमायुधं त्वत्तोऽन्येन केनापि न सह्यते स्म । सारवत्तया अद्रिषु अपि असक्तम् । सारो बलं तद्वत्तया पर्वतेष्वपि अप्रतिबद्धम् । त्वं मां प्रीतम् अवेहि । मयि प्रीते किं ते दुर्लभमिति भावः । त्वं तुरंगमात् ऋते किम् इच्छसि । तुरंगमादन्यत्सर्वमपि ते ददामीत्यर्थः ॥

ततो निषङ्गादसमग्रनिस्सृतं
सुवर्णपुङ्खद्युतिरञ्जिताङ्गुलिम् ।
नरेन्द्रसूनुः प्रतिसंहरन्निषुं
प्रियंवदः प्रत्यवदत्सुरेश्वरम् ॥ ६४ ॥

**प्रका—तत इति ॥** वचनाद्धेतोः । असमग्रनिःसृतं किञ्चिदुद्धृतम् । अनेन युद्धोद्यमः प्रतीयते । प्रतिसंहरन् प्रत्यर्पयन् । प्रियंवदः तस्यामप्यवस्थायां तथा प्रियभाषणमस्योचितमिति भावः । प्रियंवदमिति वा पाठः । 'प्रियवशे वदः खच्' । सुरेश्वरमिति तद्विषये प्रश्रयस्योचितत्वं द्योत्यम् ॥

1 स्फुट ।

पदा—तत इति ॥ ततः नरेन्द्रसूनुः इषुं प्रतिसंहरन् सुरेश्वरं प्रत्यवदत् । ततः 'अवेहि मां प्रीतम्' इत्यादिवचनानन्तरम् । प्रतिसंहरन् निषङ्ग एवार्पयन् । निषङ्गात् असमग्रनिस्सृतम् । अर्धोद्धृतमित्यर्थः । सुवर्णमयस्य पुङ्खस्य द्युतिभिः प्रभाभिः रञ्जिता अङ्गुलयो येन । अनेनाति-महतः शरस्यादानमुक्तम् । तस्यापि प्रतिसंहरणेन महतो युद्धाद्विराम उक्तः । प्रियंवदः प्रियमेवोक्तवानित्यर्थः । प्रियंवदमिति वा पाठः । 'प्रियवशे वदः खच्' ॥

अमोच्यमश्वं यदि मन्यसे प्रभो
ततः समाप्ते विधिनैव कर्मणि ।
अजस्रदीक्षाप्रयतः स मद्गुरुः
क्रतोरशेषेण फलेन युज्यताम् ॥ ६५ ॥

प्रका—अमोच्यमिति ॥ प्रभो त्वदाज्ञां कोऽतिक्रमेदिति भावः । प्रभुत्वमेवामोचने हेतुरिति भावः । ततः इति । तर्हीत्यर्थः । विधिना चोदनानुसारेण । अविकलमित्यर्थः । कर्मणि क्रियाकाण्डे । अजस्रेति । तदायासस्यापि साफल्यमवश्यं विधेयं भवत इति भावः । मद्गुरुरिति । मयि प्रसन्नेन भवता मत्पितरि प्रसादो विधेय इति भावः । अशेषेण अविकलेन । अश्वस्यामोचनेन विकलेऽपि कर्मणि अविकल इव फलमविकलमेवास्त्वित्यर्थः ॥

पदा—अमोच्यमिति ॥ प्रभो त्वम् अश्वम् अमोच्यं मन्यसे यदि ततः कर्मणि विधिना एव समाप्ते अजस्रदीक्षाप्रयतः सः मद्गुरुः क्रतोः अशेषेण फलेन युज्यताम् । प्रभुत्वमेवामोचने हेतुः । जयस्तु मदायत्त एवेति भावः । ततः तर्हीत्यर्थः । अजस्रदीक्षया नियमेन कृतया दीक्षया प्रयतः शुद्धः । युज्यतां युक्तो भवतु । क्रतुफलप्राप्तस्यैव वयं कृतार्थाः । न तु त्वज्जयोद्यता इति भावः ॥

यथा च वृत्तान्तमिमं सदोगत-
स्त्रिलोचनैकांशतया दुरासदः ।
तवैव सन्देशहराद्विशांपतिः
शृणोतु लोकेश तथा विधीयताम् ॥ ६६ ॥

1 ति ।

प्रका—यथेति ॥ चो वाक्यार्थसमुच्चये। सदो यज्ञशालाप्रदेशविशेषः, यत्र सोमः पीयते। सदोगतत्वं त् त्रिलोचनैकांशत्वम्। ततश्च दुरासदः। तदासादनयोग्यं कमप्यप्राकृतं सन्दिशेति भावः। तवैवेति। मदीयेन वृत्तान्तप्रापणे त्वश्रद्धेयत्वं स्यादपीति द्योत्यते। लोकेशेति। सर्वस्यापि हानिस्तवैव हानिरिति भावः॥

पदा—यथेति॥ लोकेश यथा सदोगतः विशांपतिः इमं वृत्तान्तं तव संदेशहरात् एव शृणोतु तथा विधीयतां च। अत्र लोकेशेति संबुद्धया कर्मलोपे जगदीश्वरस्य तवैव हानिरिति द्योत्यते। यज्ञशालायां मदागमनमेव प्रतिपाल्यावस्थितो महाराजः त्वयैवायं वृत्तान्तो निवेदनीयः। मया निवेदने तु कथं विश्वासो भवेदिति भावः। त्रिलोचनैकांशतया दुरासदः। त्रिलोचनस्याष्टमूर्तेः एकांशो यजमान एव। तदुक्तम्—'आपोऽग्निर्यजमानोऽर्कसोमौ व्योम मही मरुत्' इति। दुरासदो दुष्प्रापः॥

तथेति कामं प्रतिशुश्रुवान्रघो-
र्यथागतं मातलिसारथिर्ययौ।
नृपस्य नातिप्रमनाः सदोगृहं
सुदक्षिणासूनुरपि न्यवर्तत ॥ ६७ ॥

प्रका—तथेति ॥ तथेत्यभ्युपगमे। त्वदुक्ते न किञ्चिदप्यननुमतमस्तीति भावः। इतिस्तथाशब्दस्य प्रतिश्रवप्रकारतामाचष्टे। यथा "स तथेति प्रतिज्ञाये"ति। काममभिलषितं श्लोकद्वयप्रतिपादितम्। यथागतम् ....। नातिप्रमना नातिहृष्टः। सुदक्षिणासूनुरिति। मनस्विनी मम माता किं वक्ष्यतीति साशङ्कत्वं द्योत्यते। प्रतेरध्याहारात्सदोगृहस्य कर्मत्वम्। निवर्ततेर्वा गत्यर्थत्वेन सकर्मकत्वात्। यद्वक्ष्यति—'निववृते स महार्णवरोधसः' इत्यादौ पुरीम्, इति॥

पदा—तथेति॥ मातलिसारथिः रघोः कामं तथा इति प्रतिशुश्रुवान् यथागतं ययौ। मातलिसारथिरिन्द्रः। काममभिलाषम्। प्रतिशुश्रुवान् प्रतिज्ञातवान्। सुदक्षिणासूनुः अपि नृपस्य सदोगृहं न्यवर्तत। सदोगृहमिति कर्मधारयः। सदो यज्ञशाला। अत्र प्रतेरध्याहारात् निवर्ततेः सकर्मकत्वम्। गत्यर्थत्वेन वा। प्रमनाः सन्तुष्टः। अतिप्रमना न भवतीति नातिप्रमनाः॥

तमभ्यनन्दत्प्रथमं प्रबोधितः
प्रजेश्वरः शासनहारिणा हरेः ।
परामृशन् हर्षजडेन पाणिना
तदीयमङ्गं कुलिशव्रणाङ्कितम् ॥ ६८ ॥

प्रका—अथ कथां संविदधाति—तमिति ॥ प्रथमं प्रबोधितः प्रागेव प्रापितनिखिलवृत्तान्तः । कुलिशव्रणाङ्कितमिति जीवतः कुलिशव्रणधारणमश्रुतपूर्वमिति विस्मयविभावता । तत एव च हर्षः ॥

पदा—तमिति ॥ प्रजेश्वरः तम् अभ्यनन्दत् । अभिनन्दितवान् । हरेः शासनहारिणा प्रथमं प्रबोधितः । शासनहारिणा दूतेन । हर्षचलेन पाणिना तदीयम् अङ्गं परामृशन् स्पृशन् । कुलिशव्रणैः अङ्कितं लाञ्छितम् । जीवतः कुलिशव्रणधारणमश्रुतचरमिति विस्मयस्य विभावः । तस्यानुभावो हर्षः ॥

इति क्षितीशो नवतिं नवाधिकां
महाक्रतूनां महनीयशासनः ।
समारुरुक्षुर्दिवमायुषः क्षये
ततान सोपानपरम्परामिव ॥ ६९ ॥

प्रका—अथ नियुज्येत्यादिनोक्तमेवार्थं कथोपसंहारायानुवदति—इतीति ॥ महनीयशासनोऽस्खलिताज्ञ इत्यर्थः । आयुषो जीवितकालस्य । अत्रारोहणसाधनत्वं सामान्यं निमित्तीकृत्य सोपानपरम्परात्वमुत्प्रेक्ष्यते ॥

पदा—इतीति ॥ क्षितीशः इति महाक्रतूनां नवाधिकां नवतिं ततान । नवाधिकां नवतिं एकोनशतम् । ततान कृतवान् । आयुषः क्षये दिवं समारुरुक्षुः सोपानपरम्पराम् इव । 'आयुर्जीवितकालो ना' इत्यमरः । दिवं स्वर्गम् । सम्यगारुरुक्षुः । आरोहणसाधनत्वमुत्प्रेक्षानिमित्तम् । एवम्भूतमहाक्रतुविधाने हेतुर्महनीयशासन इति । अस्खलिताज्ञ इत्यर्थः ॥

अथ स विषयव्यावृत्तात्मा यथाविधि सूनवे
नृपतिककुदं दत्वा यूने सितातपवारणम् ।
मुनिवनतरुच्छायां देव्या तया सह शिश्रिये
गलितवयसामिक्ष्वाकूणामिदं हि कुलव्रतम् ॥ ७० ॥

**प्रका**—अथोत्तरसर्गार्थबिन्दुरूपं रघो राज्याभिषेकमनुवादमुखेन दर्शयन् दिलीपचरितमुपसंहरति—**अथेति** ॥ आत्मा हृदयम् । यथाविधि यथाशास्त्रम् । नृपतिककुदं ककुदशब्दो लक्षणया चिह्नमात्रवाची । 'प्राधान्ये राजलिङ्गे च वृषाङ्गे ककुदोऽस्त्रियाम्, इति सिंहः । न तु राजचिह्नवाची । यथान्येन व्याख्याते पौनरुक्त्यप्रसङ्गात् । यून इति । तद्यौवनप्रतीक्षोऽसावियन्तं कालं तपोवनं नाशिश्रियत् इति द्योत्यते । मुनिवनमित्येव पर्याप्ते तरुच्छायाशब्दोपादानमातपत्रच्छायां विहाय वार्धकोचितां मुनिवनतरुच्छायामाश्रितवानिति परिवृत्त्यलङ्कारध्वनिसिद्ध्यर्थम् । अत्रार्थान्तरन्यासः गळितवयसामिति । कुलव्रतमावश्यकं व्रतमित्यर्थः । अत्र सर्गे निर्वहणसन्धिर्दिलीपचरितस्य । रघुचरितस्य तु मुखसन्धिः इति द्रष्टव्यम् ॥

[1]इत्यरुणगिरिनाथविरचितायां रघुवंशप्रकाशिकायां
तृतीयः सर्गः ॥

---

**पदा**—अथ दिलीपचरितमुपसंहरति—**अथेति** ॥ अथ सः सूनवे यथाविधि नृपतिककुदं दत्वा तया देव्या सह मुनिवनतरुच्छायां शिश्रिये । नृपतीनां सार्वभौमानां ककुदं चिह्नं मकुटादिकम् । 'प्राधान्ये राजलिङ्गे च वृषाङ्गे ककुदोऽस्त्रियाम्' इति सिंहः । मुनिवने धर्मारण्ये ये तरवः तेषां छायाम् आश्रितवान् । विषयेभ्यः शब्दादिभ्यो व्यावृत्तः आत्मा हृदयं यस्य । यूने प्राप्तयौवनाय । सितमातपवारणं यस्य । गळितवयसाम् इक्ष्वाकूणाम् इदं कुलव्रतं हि । गतयौवनानामिक्ष्वाकूणां तपोवनगमनमेव हि कुलोचितं व्रतम् । अत्रार्थान्तरन्यासः । आतपत्रच्छायां परित्यज्य वार्धकोचितमुनिवनतरुच्छायाप्राप्तिप्रदर्शनात् परिवृत्तिर्ध्वन्यते । अनेन श्लोकेनोत्तरसर्गार्थबिन्दूपक्षेपः कृतः ॥

इति रघुवंशव्याख्यायां पदार्थदीपिकायां तृतीयः सर्गः ॥

---

1 इति कालितनयेनारुणगिरिनाथेन विरचितायाम् इति क्वचित् पाठः ।

# चतुर्थः सर्गः ।

स राज्यं गुरुणा दत्तं प्रतिपद्याधिकं बभौ ।
दिनान्ते निहितं तेजः सवित्रेव हुताशनः ॥ १ ॥

प्रका—अथ रघोर्लब्धप्रशमनाख्यमनुष्ठानं वर्णयितव्यम् । तच्च भट्टस्वामिना व्याख्यातम्—'लब्धस्य प्राप्तस्य दुर्गादेः प्रशमनम् अपूर्वराजोद्वेगापनयनपूर्वकमनुरागजननम् । तच्च तस्य रक्षणविवर्धनात्मकमेवावगन्तव्यम्' इति । पञ्जिकाकृता च 'तत्र लब्धस्य राज्यस्य परिपन्थिनामनुरञ्जनप्रतीकाराभ्यां शमनम्' इति । तत्र चानुरञ्जनकारणानि वर्णनीयानि । तानि च दुर्लभत्वात् कृत्रिमाण्यपि प्रकटनीयानीत्याचार्येणोक्तम् । इह त्वकृत्रिमाण्येव वर्ण्यन्ते—स इति ॥ गुरुणा दत्तमिति धर्मतः प्राप्तिरुक्ता । न तु दुर्योधनस्येव द्यूतेनेति । ननु प्राप्तिरत्रानुपादेया प्राक्सर्गान्तदर्शितत्वात् । सत्यम् । सा तु लब्धप्रशमनस्य तत्पूर्वकत्वनियमे कारणभेदस्य कार्यभेदहेतुत्वात् प्रतिनियमभेदवती तद्भेदाङ्गतयानूद्यते, भेदस्यैव वर्णनाविषयत्वात् । तदुक्तम्—'विविधो लाभो नवो भूतपूर्वः पित्र्य'श्चेति । बभावदीप्यत । गुणैरिति शेषः । दिनान्त इत्यादावागमः प्रमाणम् । अत्र चोपमायां भानस्य प्रागवस्थात आधिक्यं सामान्यतया विवक्षितम् अतोऽत्र सवित्रुपमिताद्दिलीपाद्धुताशनोपमितस्य रघोर्न्यूनता नाशङ्कनीया । तथात्वे कमलोपमितस्य कान्तामुखस्यापि निर्विलासत्वादिदोषापातो दुर्निवार एव स्यात् । अत्र चाधिक्येन वर्धिष्णुतालक्षणं बहुमानकारणमुक्तम् ॥

पदा—बालमन्दनिलयाहितवासो
बालचन्द्रशकलोज्ज्वलमौलिः ।
अन्तकारिरवतादतिघोरा-
दन्तकालजनितादुपतापात् ॥



1 अपूर्वे नवे राजनि उद्वेगापनयनपूर्वकमित्यर्थः ।

अथ प्राप्तराज्यस्य रघोर्वृत्तमाह—स इति ॥ सः गुरुणा दत्तं राज्यं प्रतिपद्य अधिकं बभौ । पूर्वावस्थातः शुशुभेतराम् । गुणैरिति शेषः । हुताशनः दिनान्ते सवित्रा निहितं तेजः इवेत्युपमा । सन्ध्यायामादित्येन निहितं तेजः प्रतिपद्येव । सूर्यतेजसां रात्रावग्निप्राप्तिः श्रुतिप्रसिद्धा ॥

[1]पुरुहूतध्वजस्येव तस्योन्नयनपङ्क्तयः ।
नवाभ्युत्थानदर्शिन्यो ननन्दुः सप्रजाः प्रजाः ॥ २ ॥

**प्रका**—पुरुहूतेति ॥ पुरुहूतध्वजो नाम राज्ञां वर्षार्थं पूजनीय इन्द्रसंबन्धी कोऽपि ध्वजः । यथा भविष्यात्तरे—'एवं' यः कुरुते यात्रामिन्द्रकेतोर्युधिष्ठिर। पर्जन्यः कालवर्षी स्यात्तस्मिन्राष्ट्रे न संशयः" इति । यथाह वराहमिहिरः—'उपरिचरस्यामरपो वसोर्ददौ चेदिपस्य वेणुमयीम् । यष्टिं तां स नरेन्द्रो विधिवत्संपूजयामास" इति । नवेति कुतूहलातिशयहेतुः । अभ्युत्थानमभ्युन्नतिः गजारोहणादौ । देवयात्राराज्याभिषेकादौ हि गजारोहणमनुरागजननम् । तदुक्तम्—'लब्धप्रशमने देशदैवतसमाजोत्सवविहारेषु भक्तिमनुवर्तेत' इति । वक्ष्यति च—'तं राजवीथ्यामधिहस्ति यान्तम्' इत्यादि । अभ्युन्नतिर्ध्वजपक्षे यात्रायामुच्छ्रयणम् । सप्रजाः ससन्ततयः सार्भका इत्यर्थः । अनेन कुतूहलस्य सर्वान् प्रत्यविशिष्टत्वमुक्तम् ॥

**पदा**—पुरुहूतेति ॥ प्रजाः तस्य नवाभ्युत्थानदर्शिन्यः ननन्दुः । प्रजाः प्रकृतयः । नवमभ्युत्थानं गजारोहणादावभ्युन्नतिं द्रष्टुं शीलं येषामिति तथा । पुरुहूतध्वजस्य इव । पुरुहूतध्वजो नाम राजभिर्वर्षार्थं पूजनीयः इन्द्रसम्बन्धी वेणुमयः कोऽपि ध्वजः । अत्र वराहमिहिरः— "उपरिचरस्यामरपो वसोर्ददौ चेदिपस्य वेणुमयीम् । यष्टिं तां स नरेन्द्रो विधिवत्सम्पूजयामास । प्रीतो महेन मघवान् प्राहैवं ये नृपाः करिष्यन्ति, वसुवद्वसुमन्तस्ते भुवि सिद्धाज्ञा

1 मल्लिनाथपाठे—'स राज्यं' इति । १ 'दिलीपानन्तरं' इति । २ 'पुरुहूतध्वजस्य' इति । ३ 'सममेव' इति । ४ छायामण्डललक्ष्येण इति । ५ 'परिकल्पितसांनिध्या' इति । ६ 'मनुप्रभृतिभिः' इति । ७ 'स हि सर्वस्य' इति । ८ 'मन्दोत्कण्ठाः' इति । ९ 'नयविद्भिः' इति । १० 'पद्मानां' इति । ११ 'यथाप्रह्लादनात्' इति । १२ कामं कर्णान्तविश्रान्ते' इति । १३ इत्येवंरीत्या सन्निवेशिताः श्लोका इत्यवधेयम् ॥

भविष्यन्ति । मुदिताः प्रजाश्च तेषां भयरोगविवर्जिताः प्रभूतान्नाः । ध्वज एव चाभिधास्यति जगति निमित्तैः फलं सदसत्" इति । पुरुहूतध्वजस्य नवाभ्युत्थानदर्शिन्य इवेत्यर्थः । अत्राभ्युत्थानं ध्वजपक्षे उत्सवार्थमुच्छ्रयणम् । राजपक्षे तु स्वलङ्कृतं गजमारुह्य देवालयादौ गमनम् । तच्चाभिषेकानन्तरं कर्तव्यम् । तदुक्तम्—'देशदैवतसमाजोत्सवविहारेषु भक्तिमनुवर्तेत' इति । उन्नयनपङ्क्तयः उत्क्षिप्तनयनपङ्क्तयः । सप्रजाः, प्रजाः सन्ततयः तत्सहिताः । 'प्रजा स्यात्सन्ततौ जने' इत्यमरः । आबालवृद्धं ननन्दुरित्यर्थः ॥

सममेव समाक्रान्तं द्वयं द्विरदगामिना ।
तेन सिंहासनं पित्र्यमखिलं चारिमण्डलम् ॥ ३ ॥

प्रका— सममिति ॥ एवशब्दः क्रमं व्यवच्छिन्दन्नरिमण्डलाक्रमणस्याविलम्बमाचष्टे । समाक्रान्तमध्यासितमभिभूतं च । द्विरदगामिनेति गतिप्राशस्त्यवाचिनान्यदपि प्रकृतोपयोगि तत्साम्यं प्रतीयते । यथा द्विरदोऽपर्यायेणानेकमाक्रामति तथासावपीति । पित्र्यं पितुरागतम् । 'पितुर्यच्च' इति यत् । अनेन पालनविरोधिप्रशमनमुक्तम् ॥

पदा—सममिति ॥ तेन द्वयं समम् एव समाक्रान्तम् । अध्यासितमभिभूतं च । किं तद्द्वयमित्यत्राह— पित्र्यं सिंहासनम् अखिलम् अरिमण्डलं च इति । पित्र्यं पितुरागतम् । 'पितुर्यच्च' इति यत् । मण्डलं समूहः । पालनविरोधिनामभिभवोऽनेनोक्तः । सिंहासनाध्यासनकाले तत्प्रभावदर्शनेनैव राज्यपरिपालनविरोधिनः शान्ता इति भावः । अत एवाह—द्विरदगामिनेति ॥

**छायामण्डललक्ष्येण तमदृश्या किल स्वयम् ।**
**पद्मा पद्मातपत्रेण भेजे साम्राज्यदीक्षितम् ॥ ४ ॥**

प्रका—छायेति ॥ छायामण्डलं कान्तिमण्डलं तेन लक्ष्येणोन्नेयेन । अत्र लक्ष्म्यास्तदुन्नेयत्वात्तद्धस्तपद्मस्यापि तदुन्नेयत्वमवसेयम् । यथोक्तम्— 'सन्यस्तचिह्नामपि' इत्यादि । अदृश्या अप्रत्यक्षा । किलेत्यपरमार्थे । कियदलादृश्यत्वमिति भावः । स्वयमिति । यां सर्वात्मना सर्वोऽप्याराधयति, साप्येवमित्यद्भुतत्वमुक्तम् । पद्मातपत्रेणेति रूपकम् । अत्र छायाशब्दशक्त्या

यथानातपमण्डलेनातपत्रोन्नयनं तथेहापीति द्योत्यते । साम्राज्यदीक्षितमाज्ञया राजशासनेऽधिकृतम् । 'शास्ति यश्चाज्ञया राज्ञः स सम्राडभिधीयते' इति सिंहः। अनेन सेवावसर उक्तः । 'लक्षेण' इति वा पाठः । अत्र छायानातपः। लक्षोऽपदेशः । पद्ममिवातपत्रं पद्मातपत्रम् । 'मयूरव्यंसकादयश्च' इति समासः। उपलक्षणे तृतीया । अस्यातपत्रं लक्ष्मीपद्ममिवासीत् तच्छाया च लक्ष्मीरिवेति भावः । वक्ष्यति च—'उरस्यपर्याप्ति'त्यारभ्य —'तमातपत्रच्छायाच्छलेनोपजुगूह लक्ष्मीः' इति ॥

**पद्मा—छायेति ॥** पद्मा स्वयं पद्मातपत्रेण तं भेजे । पद्मा लक्ष्मीः । पद्मेनैवातपत्रेण करणभूतेन । या सर्वदा सर्वैरपि सेव्यते सा स्वयमेवेत्यर्थः । अदृश्या अप्रत्यक्षा । किलेत्यपरमार्थे । अदृश्यत्वमेवोपपादयति—छायेति । छायामण्डलं कान्तिमण्डलं तेन लक्ष्येण उन्नेयेन कल्प्येनेत्यर्थः । कान्तिसन्तानेन लक्ष्म्या अनुमेयत्वमुक्तम्—सन्यस्तचिह्नामपि इत्यादिना । लक्ष्म्या तु तद्धस्तगतं पद्ममपि उन्नीयते । तस्यातपत्रत्वरूपणं तु तत्कालोचितत्वात् । छायामण्डलेन पद्मातपत्रानुमानवचनं पुनरनुमितानुमानन्यायेनेत्यवसेयम् । छायामण्डलमनातपमण्डलमिति च स्फुरति । 'छाया त्वनातपे कान्तौ' इति निघण्टुः । यथानातपमण्डलेनातपत्रानुमानं सुकरम्, तथात्रापीत्यनेन ध्वन्यते । आतपत्रधारणस्य योग्यतामाह—साम्राज्यदीक्षितमिति । सम्राट् सार्वभौमः । 'शास्ति यश्चाज्ञया राज्ञः स सम्राट्' इत्यमरः । तस्य भावः साम्राज्यं तत्र दीक्षितम् अधिकृतम् ॥

परिकल्पितसांनिध्या काले काले च वन्दिषु ।
स्तुत्यं स्तुतिभिरर्थ्याभिरुपतस्थे सरस्वती ॥ ५ ॥

**प्रका**—यथा लक्ष्मीस्तथा सरस्वत्यपि तं भेज इत्याह—**परिकल्पितेति ॥** संनिधिरेव सान्निध्यम् । स्तुत्यं प्रशस्यसमस्तस्वभावम् । एतच्च सरस्वत्युपस्थाने हेतुः । अर्थ्याभिः अर्थादनपेताभिः । एतच्च तत्संनिधिसूचकम् । उपतस्थे संगता बभूव । सिषेव इत्यर्थः । 'उपाद्देवपूजासंगतकरणमित्रकरणपथिष्विति वक्तव्याम्' इत्यात्मनेपदम् । ब्राह्ममुहूर्तादिस्तवनकालेषु वन्दिषु कृतसंनिधाना सरस्वत्यपि तं स्तुतिभिरुपतस्थ इत्यर्थः ॥

पदा—परिकल्पितेति ॥ सरस्वती च तं स्तुतिभिः उपतस्थे सङ्गताऽभूत्। 'उपाद्देवपूजे' त्यादिनात्मनेपदम्। सिषेव इत्यर्थः। सेवाप्रकारमाह—काले काले वन्दिषु परिकल्पितसान्निध्या इति। सन्निधिरेव सांनिध्यम्। प्रभातादिसेवाकाले स्तुतिपाठकेषु स्वसान्निध्यं कल्पयित्वेत्यर्थः। स्तुत्यं प्रशस्तसमस्तस्वभावत्वात् स्तुतियोग्यम्। अर्थ्याभिरर्थादनपेताभिः। अनेन सरस्वतीसान्निध्यं सूचितम् ॥

मनुप्रभृतिभिर्मान्यैर्भुक्ता यद्यपि राजभिः।
तथाप्यनन्यपूर्वेव तस्मिन्नासीद्वसुन्धरा ॥ ६ ॥

प्रका—भूमेरप्यानुकूल्यमाह—मन्विति ॥ मान्यैरिति। समग्रगुणैरित्यर्थः। यद्यपीत्यवधारणे। अन्यः पूर्वो भोक्ता न विद्यते यस्याः सानन्यपूर्वा। तस्मिन् तद्विषये। अत्र तत्प्रथमपतित्वोत्प्रेक्षायामपूर्वसमृद्धिमत्त्वं हेतुः। प्रभावातिशयप्रतीतिश्च फलम्। समासोक्तिश्चात्र। 'परोक्तिर्भेदकैः श्लिष्टैः समासोक्तिः' इति। अत्र श्लिष्टैर्भिन्नं स्वरूपमपह्नुवद्भिर्विशेषणैः परोऽप्रकृतः पुनर्भूवृत्तान्त उच्यते। श्लोकत्रयेण देवतासन्निधानं प्रतिपादयता महाभाग्यमुक्तम्। तदुक्तम्—'महाभाग्यं भक्तिं च तेषु स्वामिनो दर्शयेयुः' इति ॥

पदा—मनुप्रभृतिभिरिति ॥ वसुन्धरा मनुप्रभृतिभिः मान्यैः राजभिः भुक्ता यद्यपि तथापि तस्मिन् अनन्यपूर्वा इव आसीत्। मान्यैः समग्रगुणैरित्यर्थः। यद्यपीत्यवधारणे। अन्यः पूर्वो न विद्यते यस्याः सा अनन्यपूर्वा। वसुंधरा तस्मिन् विषये पूर्वमनन्यभुक्तेवासीदित्यर्थः। तदानीं भूमावपूर्वसमृद्धिसद्भाव उत्प्रेक्षाहेतुः। प्रभावाधिक्यप्रतीतिश्च फलम्। अत्राप्रकृतपुनर्भूवृत्तान्तः प्रतीयत इति समासोक्तिः। 'परोक्तिर्भेदकैः श्लिष्टैः समासोक्तिः' इति ॥

मन्दोत्कण्ठाः कृतास्तेन गुणाधिकतया गुरौ।
फलेन सहकारस्य पुष्पोद्गम इव प्रजाः ॥ ७ ॥

प्रका—मन्देति ॥ मन्दा न तु सर्वथोपरता। अत एव तादृगुपमानं दत्तम्। गुणाधिकतयेति। अत्र कौटल्यः—'पित्र्ये पितुर्दोषाञ्छादयेद्गुणांश्च प्रकाशयेत्' इति। एतच्च भट्टस्वामिना व्याख्यातम्—

'प्रिये लाभे पितुर्दोषान् स्वगुणैः छादयेत् । गुणांश्च पितुः सकाशात् अधिकान् प्रकाशयेत्' इति । गुणाश्च कृतज्ञतादयोऽनुरागहेतवः । गुराविति उत्कण्ठाविषयनिर्देशः ॥

पदा—मन्देति ॥ तेन प्रजाः गुणाधिकतया गुरौ मन्दोत्कण्ठाः कृताः। उत्कण्ठा औत्सुक्यम्। गतोऽभूदस्माकं स महाराज इति या प्रजानामुत्कण्ठा दिलीपविषया, रघुः स्वगुणैस्तां मन्दीचकारेत्यर्थः । सहकारस्य फलेन पुष्पोद्गमे इव । सहकारफलेन कर्तृभूतेन पुष्पोद्गमे विषय इवेत्यर्थः । उद्गतं पुष्पमेव पुष्पोद्गमः । अभिनवोदितत्वप्रतिपादनद्वारेण मनोहरत्वप्रतीतिर्लक्षणाफलम् ॥

स हि सर्वस्य लोकस्य युक्तदण्डतया मनः ।
आददे नातिशीतोष्णो नभस्वानिव दक्षिणः ॥ ८ ॥

प्रका—स हीति ॥ सर्वस्येति दण्डितोऽप्येवं मन्यते, मय्येवापराधः, राज्ञा तु यथापराधो दण्डः पातितः, तेन चाहमेनसो घोरान्मोचितः इति । युक्तदण्डतयेति । अत्र कामन्दकः—'उद्वेजयति तीक्ष्णेन मृदुना परिभूयते। दण्डेन नृपतिस्तस्माद्युक्तदण्डः प्रशस्यते' इति । आददे इत्यनुगुणीकरणं लक्ष्यते । द्योत्यते च तत्परतन्त्रतापत्तिः । दक्षिणो वासन्तिकः । स हि वायुः प्रातरपि हेमन्त इव नातिशीतो भवति, मध्याह्नेऽपि ग्रीष्म इव नात्युष्णश्च। वसन्तस्योभयधर्मपरिग्रहात् । अत्र कौटल्यः—'स्वधर्मकर्मानुग्रहपरिहारदानमानकर्मभिः प्रकृतिप्रियहितान्यनुवर्तेत' इति ॥

पदा—गुणाधिक्यमेवाह—स हीति ॥ सः हि युक्तदण्डतया सर्वस्य लोकस्य मनः आददे । हिस्त्वर्थे । युक्तो दोषानुरूपो दण्डो यस्य तस्य भावस्तत्ता, तया हेतुना। सर्वस्य दण्डितस्यापीत्यर्थः । दण्डितोऽपि मदपराधादेवाहं दण्डित इति मन्यत इत्यर्थः । अत्र कामन्दकः—'उद्वेजयति तीक्ष्णेन मृदुना परिभूयते। दण्डेन नृपतिस्तस्माद्युक्तदण्डः प्रशस्यते' इति । आददे आत्मानुगुणं चक्रे । दक्षिणः नभस्वानिवेत्युपमा । दक्षिणो दक्षिणदिग्भवः । 'स्यादथो दक्षिणस्त्रिषु' इत्यारभ्य 'तथा यमककुब्भवे' इति केशवः। स चात्र मलयाचलसंभूतो वासन्तिकः । नभस्वान् वायुः । नातिशीतोष्ण इत्येकं पदम् । अतिशीतश्चात्युष्णश्च न भवतीति तथा । वसन्तवातो

हि प्रभातेऽपि हेमन्त इव न शीतबाधां करोति। न च मध्याह्नेऽपि ग्रीष्म इव तापबाधाम्। वसन्तस्य समकालत्वात् ॥

कामं कर्णान्तविश्रान्ते विशाले तस्य लोचने।
चक्षुष्मत्ता तु शास्त्रेण सूक्ष्मकार्यार्थदर्शिनः ॥ ९ ॥

प्रका—युक्तदण्डतायामुपपत्तिमाह—काममिति॥ काममनुमतम्। नात्र विमतिरित्यर्थः। 'अनुमतेऽव्ययम्' इति केशवः। कर्णान्ते विश्रान्ते उपरतप्रसरणे। तावदायते इत्यर्थः। इत्थमाक्षिप्तां चक्षुष्मत्तां विशिनष्टि—चक्षुष्मत्ता त्विति। तया च प्रमाणवत्ता लक्ष्यते। स्फुटप्रतीतिश्च फलम्। सूक्ष्मेति। सूक्ष्मं तीक्ष्णमतिसंवेद्यं कार्यमुपायानुष्ठानम् अर्थं प्रयोजनं च द्रष्टुं शीलं यस्येति। यदि वा कार्येत्यर्थविशेषणम्। 'दर्शिना' इति वा पाठः। तद्दर्शने स शास्त्रमेव प्रमाणं कृतवानित्यर्थः। तथाविधस्य चापराधतद्युक्तदण्डतयोस्तत्त्वावबोधे किं हीयत इति भावः॥

पदा—काममिति॥ तस्य लोचने कर्णान्तविश्रान्ते विशाले कामम्। कर्णान्ते कर्णयोरन्ते समीपे विश्रान्ते उपरतप्रसरे। विशाले विस्तृते च। काममित्यनुवादे। 'अनुमतेऽव्ययम्' इति केशवः। तस्य नेत्रे कर्णपर्यन्तं गते विशाले च। नात्र विप्रतिपत्तिरित्यर्थः। अयं तु नाभ्यां[1] चक्षुष्मानित्याह—चक्षुष्मत्ता तु शास्त्रेणेति। प्रशस्तं चक्षुरस्यास्तीति चक्षुष्मान्। तस्य भावस्तत्ता। सा तु शास्त्रेणैव। शास्त्रमेव तस्य चक्षुरित्यर्थः। शास्त्रचक्षुष्मत्तायाः फलमाह—सूक्ष्मकार्यार्थदर्शिन इति। सूक्ष्मौ कार्यार्थौ द्रष्टुं शीलमस्येति तथा। सूक्ष्मः तीक्ष्णमतिसंवेद्यः। कार्यमुपायानुष्ठानम्। अर्थः प्रयोजनम्॥

यथा प्रह्लादनाच्चन्द्रः प्रतापात्तपनो यथा।
तथैव सोऽभूदन्वर्थो राजा प्रकृतिरञ्जनात् ॥ १० ॥

प्रका—एवं प्रतिपादितस्य रञ्जनस्य प्रकर्षमसाधारणत्वेन दर्शयति—यथेति॥ चन्द्र इति। 'चदि आह्लादने' इति धातुः। तपन इति। 'तप सन्तापे' इति। तथैवेति। तद्वृत्तेः किञ्चिदपि कदाचिदपि अजहत्त्वा-



1 न ताभ्याम्।

र्थतया। अन्वर्थोऽनुगतार्थः। शब्दार्थयोरभेदादेतद्विशेषणम्। अस्य राजशब्दश्चन्द्रादिशब्दवदेवान्वर्थः। न तु पाचकादिवत्कदाचित्संभवदवयवार्थः। खद्योतादिवत्किञ्चिदन्वितार्थो वेत्यर्थः॥

**पदा—यथेति॥** प्रह्लादनात् चन्द्रः यथा प्रतापात् तपनः यथा सः राजा प्रकृतिरञ्जनात् तथा एव अन्वर्थः अभूत्। चन्द्रः प्रह्लादनादन्वर्थो भवति। 'चदि आह्लादे' इति धातुः। तपनः सूर्यः प्रकर्षेण तपनात्। 'तप सन्तापे' इति धातुः। प्रकृतीनां प्रजानां रञ्जनात्। 'रञ्ज रागे' इति धातुः। अन्वर्थोऽनुगतार्थः। यथा चन्द्रादीनामाह्लादकरत्वादयो न कदाचिदप्यन्यथा भवन्ति, तथास्य रञ्जकत्वमपीत्यर्थः॥

**नयविद्भिर्नवे राज्ञि सदसच्चोपदर्शितम्।**
**पूर्व एवाभवत्पक्षस्तस्मिन्नाभवदुत्तरः ॥ ११ ॥**

**प्रका—**ननु शास्त्रस्याधिकारिभेदाद्भेदे सति तद्विदां मन्त्रनिश्चयेषु तत्तच्छास्त्रानुसारेण सदसदुपायोपदर्शने नायकस्यापि तत्प्रवणत्वात्पाक्षिकोऽपि लोकानुरागप्रक्षयः स्यादित्याह—**नयेति॥** नयो दण्डनीतिः। नव इति अपरीक्षितशील इत्यर्थः। परीक्षितत्वे त्वन्यतरदेवोपदर्शयेयुः। विषयार्थे सप्तमी। सदिति धर्मयुद्धादि। असदिति कूटयुद्धादि। उपदर्शितमुपन्यस्तम्। पूर्वः सदिति निर्दिष्टः। तर्हि पूर्वमिति भवितव्यम्। न 'निर्दिश्यमानप्रतिनिर्दिश्यमानयोरेकतरतामापादयन्ति[1] सर्वनामानि पर्यायेण तल्लिङ्गमुपाददत' इति न्यायात्। पक्षः साध्यः। अङ्गीकरणीय इत्यर्थः। 'पक्षः पार्श्वगरुत्साध्यसहायबलभित्तिषु' इति केशवः। तस्मिन् तद्विषये। तस्येत्यर्थः। तेन सदेवाङ्गीकृतमासीदित्यर्थः। 'नवं हि पात्रं येन येनोपदिश्यते तत्तदाचूषती'ति कौटलीयन्यायो यः, स नैसर्गिकगाढविनये तस्मिन्न प्रवृत्त इति भावः। एतमेव नवशब्दो द्योतयति॥

**पदा—नयेति॥** नयविद्भिः नवे राज्ञि सत् असत् च उपदर्शितम्। नयं दण्डनीतिं विदन्तीति नयविदः। नवे राज्ञीति विषयसप्तमी। अज्ञात-

1 रेकतामिति क्वचित्।

स्वभावत्वं नवशब्देनोच्यते । स्वभावपरिज्ञाने हि संदेवोपंदर्शयन्ति । सत् धर्मयुद्धादि । असत् कूटयुद्धादि । उपदर्शितमुपन्यस्तम् । तस्मिन् पूर्व एव पक्षः अभवत्, उत्तरः न अभवत् । तस्मिन् तद्विषये । तस्येति यावत् । पूर्वः सच्छब्दोक्तः । उत्तरोऽन्यः । पक्षः साध्यः । अङ्गीकरणीय इत्यर्थः । 'पक्षः पार्श्वगरुत्साध्यसहायबलभित्तिषु' इति केशवः । धर्मयुद्धादय एव तस्याङ्गीकरणीया बभूवुः । अन्यस्य तु ज्ञानमेव । वक्ष्यति च—"कूटयुद्धविधिज्ञेऽपि" इति ॥

पञ्चानामपि भूतानामुत्कर्षं पुपुषुर्गुणाः ।
नवे तस्मिन्महीपाले सर्वं नवमिवाभवत् ॥ १२ ॥

प्रका—पञ्चानामिति ॥ भूतानामाकाशादीनाम् । गुणाः शब्दादयः । पुपुषुः प्रापुः । नवेऽदृष्टपूर्वानुभावे । सर्वं जगद्गतं पदार्थसार्थम् । नवमिवेति गुणातिशययोगादन्यदिवाभवदित्युत्प्रेक्षा ॥

पदा—पञ्चानामिति ॥ पञ्चानां भूतानाम् अपि गुणाः उत्कर्षं पुपुषुः । पृथिव्यप्तेजोवाय्वाकाशाः पञ्चभूतानि तेषाम् । गुणा गन्धरसादयः । उत्कर्षं गुणाधिक्यम् । पुपुषुः प्रापुः । तस्य राज्ञः काले गन्धरसरूपस्पर्शशब्दा मनोहरा एवासन् । नान्यादृशा इत्यर्थः । अत एवोत्प्रेक्षते— तस्मिन्महीपाले नवे सर्वं नवम् अभवत् इव इति । तस्मिन्नदृष्टचरानुभावे सति सर्वं जगद्गतं पदार्थसार्थमपि गुणातिशययोगादन्यदेवाभवदित्यर्थः ॥

दिलीपानन्तरं राज्ये तं निशम्य प्रतिष्ठितम् ।
पूर्वं प्रधूपितो[1] राज्ञां हृदयेऽग्निरिवोत्थितः ॥ १३ ॥

प्रका—इत्थं निष्पन्नस्य लब्धप्रशमनस्य कार्यमाह—दिलीपेति ॥ दिलीपानन्तरमित्यनेन दिलीपानन्तरमपराधीनवृत्तयो रत्नभुजश्च भवेमेति राज्ञां प्राक्तनी प्रत्याशा द्योतिता । राज्ये प्रकृतिसमष्टौ । प्रतिष्ठितमनुरञ्जनेन लब्धस्थेमानम् । अनेन प्रत्याशाभङ्गहेतुरुक्तः । निशम्येति । अत्र भोजराजः

1 प्रधूमितो ।

निशमनस्याग्निकर्तृकत्वस्यासंभवात् क्त्वोऽसङ्गतिमाशङ्क्य परिहृतवान्--'तं निशम्यापि राज्ञां राजतामिति व्युत्पत्तिकालार्थोऽव्यवहितोप्यपेक्ष्यते। तेनायमर्थः संपद्यते, तं राज्ये प्रतिष्ठितं निशम्य राजाभिमानमुद्वहतां हृदयेऽग्निरुत्थितः इव' इति। महिमा चाह--'कर्तुरुपाधितयोक्ता कृद्वाच्यतया गतान्यगुणतां वा। क्त्वो भिन्नकर्तृकत्वभ्रमाय भवति क्रियाऽवचश्च तयोः॥ पौर्वापर्यं क्रियाणां यद्वास्तवं तदपेक्षिणि। क्त्वः पौर्वकाल्ये किं तासां प्राधान्येतरचिन्तया॥' इति। पूर्वमग्निः प्रधूपितोऽनाविर्भूतज्वालः। तत्काले उत्थितः उद्गतज्वाल इवेति भयशोकशङ्कादैन्यचिन्ताविषादाद्यात्मकं दुःखमेवमुत्प्रेक्ष्यते। एतच्च वाक्यं भाविनं दिग्विजयारम्भस्य सूचकमार्गपरिशोधकत्वेन स्थितपवसेयम्॥

पदा--दिलीपेति॥ दिलीपानन्तरं राज्ये तं प्रतिष्ठितं निशम्य राज्ञां हृदये अग्निः उत्थितः इव। प्रतिष्ठितं लब्धस्थेमानम् अनुरञ्जनेन स्थिरम्। दिलीपानन्तरं पराधीनतां परित्यज्य वयमद्यप्रभृति रत्नभुजो भवाम इति राज्ञां काचिदाशा जाता। सा तस्य प्रकृतिषट्के लब्धप्रतिष्ठत्वमाकर्ण्य निवृत्ता चेत्यर्थः। अत्र दैन्यचिन्ताविषादात्मकं दुःखमेवाग्नित्वेनोत्प्रेक्ष्यते। पूर्वं प्रधूपितः अनाविर्भूतज्वालः। ननु श्रवणे राज्ञां कर्तृत्वम् उत्थाने पुनरग्नेः। 'समानकर्तृकयोः पूर्वकाले' इति हि सूत्रम्। अतः कथमत्रोपपत्तिः इति शङ्का तु भोजराजोक्तया रीत्या परिहर्तव्या। एवं हि तेनोक्तम्--'तं राज्ये प्रतिष्ठितं निशम्यापि राज्ञां राजाभिमानमुद्वहताम्' इति॥

लब्धप्रशमनस्वस्थमथैनं समुपस्थिता।
पार्थिवश्रीर्द्वितीयेव शरत्पङ्कजलक्षणा ॥ १४ ॥

प्रका--अथ तदवतारणाय तदुचितमृतुं प्रस्तौति --लब्धेति॥ लब्धप्रशमनेनोक्तप्रकारेण स्वस्थमयत्नसंपद्यमानतन्त्रानुष्ठानमित्यर्थः। अथशब्दोऽधिकारे। अन्यन्नायकवृत्तमावापलक्षणमधिकृतमित्यर्थः। पार्थिवश्रीः पार्थिवसम्पदधिदेवता। पार्थिवशब्देन विजिगीषोरेव परमोपकारितां शरदः प्रकाशयति। अत एव--तं समुपस्थितेत्युक्तम्। श्रीसमुत्प्रेक्षायाश्च पङ्कजलक्षणेति सामान्यं हेतुः। ऐकान्त्येनार्थसाधकत्वप्रतीतिश्च फलम्। यथा हि पार्थिवश्रीरनुकूला सती वाञ्छितानि साधयति, तथेयमपि विग्रहयानादिष्वनुकूला सती विजिगीषोरिति॥

**पदा**—अथ पूर्वश्लोके सूचितस्य दिग्विजयस्यावतारणाय तदुचितमृतुं वर्णयति—**लब्धेति** ॥ अथ शरत् एनं समुपस्थिता। तामुत्प्रेक्षते—द्वितीयां पार्थिवश्रीरिवेति। अन्या कापि राजलक्ष्मीरिव। लब्धस्य अर्थाद्राज्यस्य प्रशमनेनानुरञ्जनेन स्वस्थमव्याकुलम्। लब्धप्रशमने पञ्जिकाकारः—'तत्तु लब्धस्य राज्यस्य परिपन्थिनामनुरञ्जनप्रतीकाराभ्यां शमनम्' इति। पङ्कजमेव लक्षणं यस्याः इति श्रीत्वोत्प्रेक्षाहेतुः ॥

निर्वृष्टलघुभिर्मेघैर्मुक्तवर्त्मा दुरुत्सहः।
प्रतापस्तस्य भानोश्च युगपद्व्यानशे दिशः ॥ १५ ॥

**प्रका**—**निर्वृष्टेति** ॥ इत आरभ्य राजशरदोः संभूय वर्णनं दशसु श्लोकेषु—एतच्च वृत्तस्य लब्धप्रशमनस्य, वर्तिष्यमाणस्य च दिग्विजयस्य मध्ये केवलशरद्वर्णनेन प्रकृतवीररसविच्छेदो माभूदित्यवधान[2]वता कविचक्रवर्तिना कृतमित्यवसेयम्। यद्यपि पर्यन्ते 'यात्रायै चोदयामास' इत्युत्साहोद्दीपनत्वेन वीराङ्गतास्य शरद्वर्णनस्य योजिता, तथापि केवलशरद्वर्णने तावत्कालमनैकान्त्याद्विच्छेद एव रसस्य। तदुक्तं 'विस्तरेणान्वितस्यापि' इत्यादिना। निर्वृष्टः उपरतवर्षः। यथा—'निर्वृष्टेऽपि बहिर्घने' इति। मेघैर्मुक्तवर्त्मत्वं [3]प्रतापस्याप्यस्ति। घनसमये यानादेरशक्यत्वात्। यथा सेतौ—'ववसाअ इव ओसो' इत्यादि। दुरुत्सहः दुरभिभवः। प्रतापः पौरुषमातपश्च। 'प्रतापौ पौरुषातपौ' इति यादवः। पौरुषस्य दिग्व्याप्तिर्नाम तस्य शक्तिमतोऽनलसस्य यात्रायाः सकलराजमण्डलेषु बुद्ध्यारूढत्वम्। अत्र तुल्ययोगितालङ्कारः। न तु समुच्चयोऽलङ्कारः, वैचित्र्याभावात् ॥

**पदा**—अथ दशभिः श्लोकैः शरद्राजानौ संभूय वर्ण्येते, अन्यथा प्रकृतस्य वीररसस्य विच्छेदप्रसङ्गात्—**निर्वृष्टेति** ॥ तस्य भानोः च प्रतापः दिशः युगपत् व्यानशे। प्रतापः पौरुषमातपश्च। 'प्रतापौ पौरुषातपौ' इति यादवः। युगपत् एकदैव। व्यानशे व्याप्तोऽभूत्। मेघैर्मुक्तः परित्यक्तो मार्गो यस्य। एतच्च विशेषणं प्रतापेऽपि योजनीयम्। घनसमये यानादेरसम्भवेन



1 सुदुःसहः। 2 रय। 3 प्रतापस्य पौरुषस्यापीत्यर्थः।

शरदीव प्रतापस्यापि व्याप्त्यसंभवात् । निर्वृष्टैरुपरतवर्षैः । यथा—'निर्वृष्टेऽपि बहिर्घने' इत्यादौ । अत एव लघुभिस्तूलादितुल्यैः । दुरुत्सहो दुरभिभवः । अत्र तुल्ययोगितालङ्कारः ॥

वार्षिकं संजहारेन्द्रो धनुर्जैत्रं रघुर्दधौ ।
प्रजार्थसाधने तौ हि पर्यायोद्यमविश्रमौ ॥ १६ ॥

प्रका—वार्षिकमिति ॥ वार्षिकं वर्षासु भवं वर्षनिमित्तमित्यर्थः । 'वर्षाभ्यष्ठक्' । जैत्रं जयसाधनम् । अत्र वर्षमुपसंहरन्निन्द्रस्तत्कालभावि स्वीयत्वेन प्रसिद्धं तैजसं धनुः संहृतवान् । रघुस्तु लब्धोचितसमयो युयुत्समानः स्वभुजसारसहं धनुः परीक्षार्थं परामृष्टवानिति योऽर्थ उक्तस्तमुपपादयति —प्रजेति । प्रजार्थसाधने विषयभूते इत्यर्थः । 'साधनौ' इति वा पाठः । तावितीन्द्ररघू । हि यस्मात् । पर्यायोद्यमविश्रमौ सन्तौ प्रजार्थं साधयतः । यौगपद्ये तु कदाचित्प्रजार्थ उच्छिद्येतापीति भावः । पर्यायेणोद्यमः प्रवृत्तिः विश्रमो निवृत्तिश्च ययोः ॥

पदा—वार्षिकमिति ॥ इन्द्रः वार्षिकं धनुः संजहार । वार्षिकं वर्षासु भवम् । वर्षनिमित्तमिति यावत् । 'वर्षाभ्यष्ठक्' इति ठक् । इन्द्रो वर्षमुपसंहरन् आत्मीयत्वेन प्रसिद्धं तैजसं धनुः संहृतवानित्यर्थः । रघुः जैत्रं धनुः दधौ । जैत्रं जयसाधनम् । लब्धयानोचितसमयः स्वहस्तपीडनक्षमं धनुराददे इत्यर्थः । तौ प्रजार्थसाधने पर्यायोद्यमविश्रमौ हि । ताविन्द्ररघू । प्रजानामर्थसाधने पर्यायेण क्रमेण उद्यमः प्रवृत्तिः विश्रमो निवृत्तिश्च ययोः । यौगपद्येनोद्योगे प्रजार्थः कदाचिदुच्छिद्येतापीति भावः । हिर्यस्मादर्थे ॥

पुण्डरीकातपत्रस्तं विकसत्काशचामरः ।
ऋतुर्विडम्बयामास न पुनः प्राप तच्छ्रियम् ॥ १७ ॥

प्रका—पुण्डरीकेति ॥ विडम्बयामास अनुचकार । न पुनरिति व्यतिरेकः । 'उपमानाद्यदन्यस्य व्यतिरेकः स एव सः' इति ॥

पदा—पुण्डरीकेति ॥ ऋतुः तं विडम्बयामास अनुचकार । कथमित्यत्राह—पुण्डरीकमेवातपत्रं यस्य । विलसन्तः काशा एव चामरा यस्य ।

1 तत्कार्मुकौ ।

तच्छ्रियं न पुनः प्राप । तस्य रघोः श्रियम् । रघुस्तु शोभया तदधिक एवाभवदित्यर्थः । अत्र व्यतिरेकोऽलङ्कारः । 'उपमानाद्यदन्यस्य व्यतिरेकः स एव सः' इति ॥

प्रसादसुमुखे तस्मिंश्चन्द्रे च विशदप्रभे ।
तदा चक्षुष्मतां प्रीतिरासीत्समरसा द्वयोः ॥ १८ ॥

प्रका—प्रसादेति ॥ तत्कालमेव प्रीतिसामरस्यहेतुश्चन्द्रस्य प्रभावैशद्यं राज्ञस्तु प्रसादसौमुख्यं नैसर्गिकमिति व्यतिरेकध्वनिः । चक्षुष्मतां चक्षुष्मत्तैवोपाधिर्न तु सुजनत्वादिरित्यर्थः । समो रसो रसनमास्वादनं यस्याः सा समरसा ॥

पदा—प्रसादेति ॥ तदा चक्षुष्मतां प्रीतिः द्वयोः समरसा आसीत् । चक्षुष्मत्तैव तत्रापि हेतुः न सुजनत्वादिरिति भावः । अस्तिविवक्षामात्रे मतुप् । द्वयोः वक्ष्यमाणवस्तुद्वये । 'समो रसो रसनमास्वादनं यस्याः' इति शिवदासः । "समानद्रवा तुल्यनिष्यन्देति यावत् । 'शृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे रसः' इत्यमरः इति दक्षिणावर्तः । वस्तुद्वयमेवाह—प्रसादसुमुखे तस्मिन् विशदप्रभे चन्द्रे च इति । राज्ञः प्रसादसुमुखत्वं स्वाभाविकं चन्द्रस्य विशदप्रभत्वं तु तादात्विकमिति व्यतिरेकध्वनिः ॥

हंसश्रेणीषु तारासु कुमुद्वत्सु च वारिषु ।
विभूतयस्तदीयानां पर्यस्ता यशसामिव ॥ १९ ॥

प्रका—हंसेति ॥ कुमुद्वत्सु । 'कुमुद्वान् कुमुदप्राये' इति सिंहः । विभूतयः संपदः पर्यस्ताः कीर्णाः । तद्यशोविभूतयः पर्यस्ता इवेत्युत्प्रेक्षाया धावल्यं हेतुः । फलं च यशसः सार्वत्रिकत्वम् ॥

पदा—हंसेति ॥ तदीयानां यशसां विभूतयः हंसश्रेणीषु तारासु कुमुद्वत्सु वारिषु च पर्यस्ताः इव । विभूतयः संपदः । कुमुद्वत्सु कुमुदभूयिष्ठेषु । 'कुमुद्वान् कुमुदप्राये' इत्यमरः । पर्यस्ताः कीर्णाः । धावल्यमुत्प्रेक्षाहेतुः । यशसः सार्वत्रिकत्वप्रतीतिः फलम् ॥

इक्षुच्छायानिषादिन्यस्तस्य गोप्तुर्गुणोदयम्[1] ।
आकुमारकथोद्घातं शालिगोप्यो जगुर्यशः ॥ २० ॥

प्रका—इक्षुच्छायेति ॥ इक्षोश्च तत्काले संपन्नत्वात्तच्छायानिषदनमौचित्यप्राप्तम् । तच्च सुखासीनताया गानीपयोगित्वादुपात्तम् । यथाह मुरारिः—'पटीरतरुकोटरकुटीरमध्यमध्यासीनाः' इति । गोप्तुरिति गानस्य प्रीतिप्रवृत्तत्वे हेतुः । गुणैरुदयो यस्येति गुणोदयम् । न तु मिथ्याप्रथितमित्यर्थः । आकुमारेति । आकुमारमाबालं कथायाः कथनस्योद्घात आरम्भो यस्य तत्तथा । असमग्रवाक्छक्तिभिरर्भकैरपि कथयितुमारभ्यमाणमित्यर्थः । 'स्यादभ्यादानमुद्घात आरम्भः' इति सिंहः । शालिगोप्य इति तद्यशोगानस्यात्मार्थत्वं द्योत्यते ॥

पदा—इक्षुच्छायेति ॥ शालिगोप्यः तस्य यशः जगुः । व्रीहिरक्षणार्थमाकरेषु वर्तमानाः स्त्रियः तत्कालसुलभायामिक्षुच्छायायां निषदनशीलाः । बाहुल्यस्याविवक्षितत्वान्न नपुंसकलिङ्गता। इक्षूणां छायानिषादिन्य इति वा विग्रहः । गोप्तुः सम्यग्रक्षितुः । गुणैरुदय आविर्भावो यस्य । न तु स्वजनस्तुतिभिर्मिथ्याप्रथितमित्यर्थः । आकुमारमाबालम् । अभिविधावाङ् । कथायाः कथनस्य उद्घात आरम्भो यस्य । 'स्यादभ्यादानमुद्घात आरम्भः' इत्यमरः । असमग्रवाक्प्रवृत्तिभिर्बालैरपि कथयितुमारभ्यमाणमित्यर्थः ॥

प्रससादोदयादम्भः कुम्भयोनेर्महौजसः ।
रघोरभिभवाशङ्कि चुक्षुभे द्विषतां मनः ॥ २१ ॥

प्रका—प्रससादेति ॥ कुम्भयोनेरिति । अत्र वराहमिहिरः—'उदये च मुनेरगस्त्यनाम्नः कुसमायोगमलप्रदूषितानि । हृदयानि सतामिव स्वभावात्पुनरम्बूनि भवन्ति निर्मलानि ॥' इति । महाप्रभावस्य कुम्भयोनेरुदयादम्भः प्रसन्नमभवत् । तथाविधस्य रघोरुदयाद्युचितकालप्रत्यासत्त्या संभावितात्माभिभवद्विषन्मनस्तु चुक्षुभ इत्यर्थः । अत्र प्रतीयमानसौक्ष्म्यादिसाम्ययोरम्भोमनसोः प्रसादक्षोभविषयतया यो व्यतिरेकः स तुशब्देन द्योत्यते । स चालङ्कारः, काव्यशोभाहेतुत्वात् । 'आधिक्यं व्यतिरेकः' इति तु प्रायोवृत्त्या लक्षितम् । अत्र वार्षिकं यदम्भसि कालुष्यं, यश्च वार्षिक एव निर्वृततालक्षणो द्विषन्मनसि प्रसादः

1 छायनिषादिन्यः ।

तयोस्तदानीं विनिमय उक्तिभङ्ग्या प्रतीयत इति परिवृत्तिध्वनिः। यथा महौजसः कुम्भयोनेरुदयादम्भः प्रससाद, तथा तादृशस्य रघोरुदयादभिभवाशङ्कि द्विषतां मनश्चुक्षुभ इत्युपमाध्वनिरपि। ननु किमत्र सामान्यम्। दृष्टान्तालङ्कारन्यायेन प्रसादक्षोभावेव बिम्बप्रतिबिम्बभावेन निर्दिष्टौ। हेतुसन्निधिमात्रजनितत्वेन च तयोर्बिम्बप्रतिबिम्बभावः सुलक्षः॥

पदा — प्रससादेति॥ कुम्भयोनेः उदयात् अम्भः प्रससाद। 'अगस्त्यः कुम्भसंभवः' इत्यमरः। अगस्त्योदये जलप्रसादो वराहसंहितायामुक्तः— 'उदये च मुनेरगस्त्यनाम्नः कुसमायोगमलप्रदूषितानि। हृदयानि सतामिव स्वभावात्पुनरम्बूनि भवन्ति निर्मलानि॥' इति। द्विषतां मनः तु चुक्षुभे कलुषमभूत्। द्विषतां चित्तक्षोभहेतुमाह — रघोः अभिभवाशङ्कि इति। अभिभवं परिभवं आशङ्कितुं शीलमस्येति तथा। रघोरिति कर्तरि षष्ठी। महौजस इत्युभजयविशेषणं महाप्रभावस्य। अत्र व र्षिकं यदम्भसि कालुष्यं, यश्च वार्षिको युद्धाभावनिश्चयाद्द्विषतां मनसि प्रसादः, तयोस्तदानीं विनिमयो जात इति शब्दशक्त्या ध्वन्यत इति परिवृत्तिध्वनिः॥

मदोदग्राः ककुद्मन्तः सरितां कूलमुद्रुजाः।
लीलाखेलमनुप्रापुर्महोक्षास्तस्य विक्रमम् ॥ २२ ॥

प्रका — मदेति॥ मदेन गर्वेण उदग्रा उन्नताः। शरदस्तृणादिसंपत्त्या गोधनानुकूलत्वेन महोक्षाणां मदादियोग इत्यवसेयम्। यथाह भारविः— 'परीतमुक्षापजये जयश्रिया नदन्तमुच्चैः क्षतसिन्धुरोधसम्। ददर्श पुष्टिं दधतं स शारदीं सविग्रहं दर्पमिवाधिपं गवाम्॥' इति। ककुद्मन्तः प्रशस्तककुदः। लञ्च् कूलमुद्रुजा इति। 'उदि कूले रुजिवहोः' इत्युत्पूर्वाद्रुजेः कूल उपपदे खश् प्रत्ययः। अरुर्द्विषदजन्तस्येति मुमागमश्च। 'लीला विलासक्रिययोः' इति सिंहः। विलासश्च लक्षितो भरतेन — 'धीरसञ्चारिणी दृष्टिर्गतिर्गोवृषभाञ्चिता। स्मितपूर्वमथालापो विलास इति कीर्तितः॥' इति। विलासश्च सत्त्वजो गुणः। तेन खेलं सुन्दरम्। विक्रमं शौर्यकरणम्। 'विक्रमः शौर्यकरणे' इति यादवः। अनुप्रापुरनुजग्मुः। अत्रोपमायामाद्यस्य विशेषणद्वयस्य उपमानतया विवक्षितेन नायकेनाप्यर्थशक्त्या शब्दशक्त्या च सम्बन्धो ध्वन्यते। तस्यापि हि शक्त्यादिसंपत्त्या रणमदोदग्रत्वम्। ककुद्मत्वं तु राजचिह्नादि ककुच्छब्दाभिधेय-

त्वात्। 'अथ ककुत्स्त्रियाम्। पुंसि चोक्षणः स्कन्धदेशे प्रोन्नते राजलक्ष्मणि॥' इति केशवः। सरित्कूलभञ्जनेन च विक्रमानुकरणं विवक्षितम्। परानीकव्यूहदुर्गादिभञ्जनेषु तस्य यो विक्रमस्तमुन्नतसरित्कूलसहेलभञ्जनेनानुकृतवन्त इत्यर्थः। लीलाखेलत्वं तु 'गतिर्गोवृषभाञ्चिता' इति। एवमनेकविधं सादृश्यं गर्भीकृत्य विचित्रया भङ्ग्या कविरुपमां निबद्धवानित्यनुसन्धेयम्। नन्वप्रकृतेन ह्युपमानेन भवितव्यम्। नैवम् प्रकृतेपि वैवक्षिकस्योपमानत्वस्योपपत्तेः। यथा—'धीरिव जळसमूहम्' इत्यादौ॥

पदा—मदेति॥ महोक्षाः तस्य विक्रमम् अनुप्रापुः। विक्रमं शौर्यकरणम्। 'विक्रमः शौर्यकरणे' इति यादवः। महोक्षाः तस्य शौर्यव्यापारमनुजग्मुरित्यर्थः। लीलाखेलं लीलया विलासेन खेलं सुन्दरम्। विलासलक्षणे भरतः—धीरसञ्चारिणी दृष्टिर्गतिर्गोवृषभाञ्चिता। स्मितपूर्वमथालापो विलास इति कीर्तितः॥' इति अनुकरणप्रकारमाह—मदोदग्रा इत्यादिना। मदेन गर्वेण उदग्राः उन्नताः। शरदि तृणादिबाहुल्यादुक्ष्णां मदाधिक्यम्। अनेन नायकस्य युद्धादौ यो मदः तस्यानुकरणं विवक्षितम्। ककुद्मन्तः प्रशस्तककुदः। अत्र राजचिह्नानुकरणम्, राजचिह्नस्यापि ककुच्छब्दाभिधेयत्वात्। 'अथ ककुत्स्त्रियाम्। पुंसि चोक्षणः स्कन्धदेशे प्रोन्नते राजलक्ष्मणि॥' इति केशवः। सरितां कूलमुद्रुजाः। 'रुजो भङ्गे' इति धातुः। 'उदि कूले रुजिवहोः' इत्युत्पूर्वाद्रुजेः कूल उपपदे खश्प्रत्ययः। 'अरुर्द्विषदजन्तस्य मुम्' इति मुमागमः। सरित्कूलभञ्जका इत्यर्थः। अनेन परानीकव्यूहदुर्गादिभञ्जनानुकरणम्॥

प्रसवैः सप्तपर्णानां मदगन्धिभिराहताः।
असूययेव तन्नागाः सप्तधैव प्रसुस्रुवुः ॥ २३ ॥

प्रका—प्रसवैरिति॥ मदगन्धिभिः मदसमानगन्धैः। आहताः स्पृष्टाः। असूयया ईर्ष्यया। न तु गुणेषु दोषाविष्करणमसूया। यतो निर्वेदग्लानीत्यादावुद्देशे ईर्ष्यां निर्दिश्य 'परोत्कर्षाक्षमासूये'ति लक्षणं प्रणीतं दशरूपके। सप्तधेति नेत्रे कपोले कररन्ध्रे मेढ्रे चेति सप्त मदस्रुतिस्थानानि। अत्र पालकाप्यः—'करात्कटाभ्यां मेढ्राच्च नेत्राभ्यां च मदस्रुतिः' इति। अत्र

गजानां ग्रीष्मकर्शितानां जलसात्म्याद्या वर्षासु धातुपोषबलमदादिसंपत्तिः, यथा चादिकविः— 'वहन्ति वर्षन्ति नदन्ति भान्ति' इत्युद्दिश्य 'नद्यो घना मत्तगजा वनान्ताः' इत्यनूद्दिष्टवान्. सा तदनन्तरं शरद्यपि सुलभसुखाहारविहार त्वात्साातिशया भवतीति तत्कालकृताया मदस्रुतेर्मदगन्धिसप्तच्छदजनितासूया हेतुत्वेनोत्प्रेक्ष्यते। यद्यपि तादृगसूया संभविनी, तथापि तस्या हेतुत्वमुत्प्रेक्ष्यमेव। उत्प्रेक्षानिमित्तं च ईर्ष्यालुः परगुणेषु प्रकटेषु तत्तिरस्काराय स्वगुणानाविष्करोतीति लौकिकी व्याप्तिः। किं च सेनागजानां मदसंपत्त्या परानभियास्यतो नेतुः शक्त्युपचय उक्तः। मत्ता हि गजाः पराक्रमशालिनो भवन्ति। ते चाङ्गेषु प्रधानम्। यथाह—'परानीकव्यूहदुर्गस्कन्धावारप्रमर्दना ह्यतिप्रमाणशरीराः प्राणहरकर्माणो हस्तिनः' इति ॥

पदा—प्रसवैरिति॥ तत्रागाः सप्तधा एव प्रसुस्रुवुः। नेत्रद्वयं कपोलद्वयं करन्ध्रद्वयं मेढ्रं चेति सप्त मदस्रुतिस्थानानि। अत्र पालकाप्यः— 'करात्कटाभ्यां मेढ्राच्च नेत्राभ्यां च मदस्रुतिः' इति। सप्तधैव न त्वेकधा द्वेधा वा। तेन मदाधिक्यमुक्तम्। सप्तपर्णासूयाहेतुश्च ध्वन्यते। प्रसुस्रुवुर्मदस्रुतिं चक्रुः। असूययेवेत्युत्प्रेक्षा। ईर्ष्ययेवेत्यर्थः। 'परोत्कर्षाक्षमासूया गर्वदौर्जन्यमन्युजा' इति दशरूपके। ईर्ष्यायां हेतुमाह—सप्तपर्णानां प्रसवैः आहताः इति। सप्तपर्णा वृक्षविशेषाः। तेषां प्रसवैः पुष्पैराहताः स्पृष्टाः। मदस्य गन्ध इव गन्धो येषामिति मदगन्धयः। 'उपमानाच्च' इतीकारः॥

**सरित्सु[1] कुर्वती गाधं[2] पथश्चाश्यानकर्दमान्।**
**यात्रायै चोदयामास तं शक्तेः प्रथमं शरत् ॥ २४ ॥**

**प्रका**—एवमुपवर्णितायाः शरदो वीररसं प्रत्युद्दीपनत्वं दर्शयन्नायकवृत्तान्तोपयोगं दर्शयति—**सरित्स्विति**॥ गाधं प्रतिष्ठाम्। शक्तेः प्रथममिति। शक्तौ समग्रायां प्रथममेव प्रेरयन्त्यां पश्चादागतायाः शरदः प्रेरणातिशयात्प्राथम्यमुपचरितम्। यथाह—'विजिगीषुरात्मनः परस्य च बलाबलं शक्तिदेशकालयात्राकालबलसमुद्दानकालपश्चात्कोपक्षयव्ययलाभापदो ज्ञात्वा विशिष्टबलो यायात्' इति। ननु शरदो यात्राकालत्वं शास्त्रे नोक्तम्। उच्यते। मार्गशीर्षीं तैषीं चान्तरेण दीर्घकालां यात्रां यायात्' इत्युक्तेर्द्वादशराजकविषयत्वात्सकलविजयस्य



1 सरितः। 2 गाधाः।

तदतिरिक्तकालापेक्षितत्वात् शरद्येव यात्रा। अथवा, मार्गशीर्षी तैषी चान्तरेण या यात्रा सैवात्रापि। शरत्तु तस्याः पूर्वरङ्गत्वेनोपवर्णिता ॥

पदा—सरित्स्विति ॥ शरत् शक्तेः प्रथमं तं यात्रायै चोदयामास। अत्र यद्यपि प्रभुशक्त्यादिसामग्रीकर्तृकं दिग्विजययात्राप्रेरणं पूर्वमेव जातम्, तथापि शरदागमनानन्तरमेव प्रस्थानोद्योगदर्शनात् तस्याः प्राथम्यमुपचरितम्। चोदनाप्रकारमाह—सरित्स्वित्यादिना। सरित्सु गाधं कुर्वती। गाधं प्रतिष्ठां सुतरत्वमिति यावत्। पथः आश्यानकर्दमान् च मार्गानीषच्छुष्कपङ्कांश्च कुर्वती। मार्गाणां शुष्ककर्दमत्वात्प्रयाणसौकर्यम् ॥

तस्मै सम्यग्घुतो वह्निर्वाजिनीराजनाविधौ।
प्रदक्षिणार्चिर्व्याजेन हस्तेनेव जयं ददौ ॥ २५ ॥

प्रका—उद्धर्षणान्तरमप्याह—तस्मा इति ॥ सम्यगविकलम्। एतदपि भाविश्रेयस्सूचकम्। वाजिनीराजनाविधाविति। अत्र वराहमिहिरः—'द्वादश्यामष्टम्यां कार्तिकशुक्लस्य पञ्चदश्यां वा। आश्वयुजे वा कुर्यान्नीराजनसंज्ञितां शान्तिम्' इति। प्रदक्षिणेति। अत्र योगयात्रावचनम्—'स्वाहावसानसमये स्वयमुज्ज्वलार्चिरिद्धः प्रदक्षिणगतो हुतभुङ्नृपस्य। गङ्गादिवाकरसुताजलचारुहारां धात्रीं समुद्रवसनां वशगां करोति' इति। अत्रार्चिषो हस्तानुकारित्वात् तत्प्रादक्षिण्यस्य च जयसूचकत्वाद्धस्तेन जयदानमुत्प्रेक्ष्यते। व्याजशब्दोपादानादपह्नुतिः, इवशब्दोपादानादुत्प्रेक्षा च ॥

पदा—तस्मायिति ॥ वाजिनीराजनाविधौ सम्यक् हुतः वह्निः प्रदक्षिणार्चिर्व्याजेन तस्मै हस्तेन जयं ददौ इव। तुरगाणां नीराजनक्रिया दिग्विजयप्रस्थानोचिता। अत्र वराहमिहिरः—'द्वादश्यामष्टम्यां कार्तिक्यां शुक्लपञ्चदश्यां वा। आश्वयुजे वा कुर्यान्नीराजनसंज्ञितां शान्तिम्' इति। प्रदक्षिणमर्चिः प्रदक्षिणार्चिः। अत्रार्चिषो हस्तत्वप्रतीतिः। तस्य प्रदक्षिणत्वं जयसूचकम्। अत्र योगयात्रावचनम्—'स्वाहावसानसमये स्वयमुज्ज्वलार्चिरिद्धः प्रदक्षिणगतो हुतभुङ्नृपस्य। गङ्गादिवाकरसुताजलचारुहारां धात्रीं समुद्रवसनां वशगां करोति' इति। अत एव हस्तेन जयदानमुत्प्रेक्ष्यते। व्याजशब्दोपादानादपह्नुतिश्च ॥

स गुप्तमूलप्रत्यन्तः शुद्धपार्ष्णिरयान्वितः ।
षड्विधं बलमादाय प्रतस्थे दिग्जिगीषया ॥ २६ ॥

प्रका— स गुप्तेति ॥ गुप्तौ मूलप्रत्यन्तौ येन। मूलगृहत्वाद्राजधानी मूलमित्युच्यते। प्रत्यन्तो राष्ट्रान्तः। तस्य द्वन्द्वनिर्देशेन मूलवदेव कृतरक्षणत्वं द्योत्यते। तदुभयगोपनेन हि सकलमेव राष्ट्रं गुप्तं भवति। शुद्धपार्ष्णिः प्रकोपशून्यपश्चाद्भागः। प्रतापानुरागप्रशमितपार्ष्णिग्राह इत्यर्थः। अयान्वितः। 'अयः शुभावहो विधिः' इति सिंहः। तेनान्वितः सुनिमित्तादिसूचितदैवानुकूल्य इत्यर्थः। षड्विधमिति मौलभृतकश्रेणिमित्रामित्राटविकभेदेन। आदायेत्यत्रापि पूर्ववदेव लक्ष्यद्योत्ये। दिग्जिगीषया। न तु भूम्यनन्तरमात्रजिगीषया। दिक्छब्देन सकलं राजकं लक्षितम्। अत्र कौटल्यः— 'परस्परसाधका हि शक्तिदेशकालास्तैरभ्युच्छ्रितस्तृतीयं चतुर्थं वा दण्डस्यांशं मूले पार्ष्ण्यां प्रत्यन्ताटवीषु च रक्षां निधाय' इत्यादि ॥

पदा—स इति ॥ सः दिग्जिगीषया षड्विधं बलम् आदाय प्रतस्थे। मौलभृतकश्रेणीमित्रामित्राटविकभेदेन षडेव विधाः प्रकारा यस्य। आदानशब्दो हि हस्तेन ग्रहणे प्रसिद्धः। तेन चात्र स्वाधीनत्वं द्योत्यते। दिक्छब्देनात्र तदवस्थिता राजानो लक्ष्यन्ते। गुप्तौ रक्षितौ मूलप्रत्यन्तौ येन। मूलं राजधानी। प्रत्यन्तो राष्ट्रान्तः। शुद्धः प्रकोपशून्यः पार्ष्णिः पृष्ठभागो यस्य। प्रतापानुरागाभ्यां वशीकृतपृष्ठराजन्य इयर्थः। अयान्वितः। 'अयः शुभावहो विधिः' इत्यमरः। अत्र कामन्दकः— 'देवानभ्यर्च्य विप्रांश्च प्रशस्तग्रहतारकः। षड्विधं तु बलं व्यूहन्' इत्यादि। राज्यस्य राजधान्याश्च रक्षां सम्यग्विधाय प्रस्थितवानित्यर्थः। अन्यथा तत्र बाधा स्यादिति भावः ॥

अवाकिरन्वयोवृद्धास्तं लाजैः पौरयोषितः।
पृषतैर्मन्दरोद्धूतैः क्षीरोर्मय इवाच्युतम् ॥ २७ ॥

प्रका—इत आरभ्य यानविग्रहावुपवर्ण्येते—अवाकिरन्निति ॥ वयोवृद्धा इति। युवतीनां कुलवधूनां राजवीथ्यां प्रकाशावस्थानस्यानुचितत्वात्प्रवयसामुपादानम्। अत्राच्युतमिवेत्यमृतमथनोद्युक्तस्य भगवत उपमानीकृतत्वादेतदुद्यमस्यापि महाफलत्वं द्योत्यते॥

पदा—अवाकिरन्निति ॥ पौरयोषितः लाजैः तम् अवाकिरन्। 'कॄ विक्षेपे' इति धातुः। वयोवृद्धाः प्रवयसः। क्षीरोर्मयः मन्दरोद्धूतैः पृषतैः अच्युतम् इव। क्षीरसमुद्रोर्मयः। पृषतैः बिन्दुभिः। अत्रामृतमथनोद्यतस्य हरेरुपमानेनास्योद्यमस्य सुरप्रसादादिमहाफलत्वं द्योत्यते। वक्ष्यति च— 'स विश्वजितमाजह्रे यज्ञम्' इति ॥

स ययौ प्रथमं प्राचीं तुल्यः प्राचीनबर्हिषा।
अनुलोमानिलोद्धूतैस्तर्जयन्निव केतुभिः ॥ २८ ॥

प्रका— स इति। प्राचीं प्रथममिति। प्राच्युदीच्योर्दिक्षु मङ्गलत्वात्प्राच्युपक्रम उदीच्युपसंहारो दिग्विजय उक्तः। प्राचीनबर्हिषेति। प्राचीनबर्हिरिति कश्चिदाद्यो राजर्षिः। पुराणे च 'प्राचीनबर्हिर्भगवान् महानासीत्प्रजापतिः' इति। अथवा—इन्द्रः। अग्निर्वा। 'अथ वह्नौ पुरन्दरे प्राचीनबर्हिः' इति केशवः। तर्जयन्निति। चुरादिपठितस्य तर्जेरात्मनेपदित्वात् ण्यन्ताद्भूवादिपठितात्तर्जेरिदं मन्तव्यम्। तर्जनं च भर्त्सनम्। केतुभिर्ध्वजपटैः। अर्थादभियास्यमानानां कर्मत्वम्। अत्र केतुधूननस्य तर्जनीचालनसाम्यमुत्प्रेक्षाया हेतुः। प्रतिराजकभयं च फलम् ॥

पदा— स इति ॥ सः प्रथमं प्राचीं ययौ। पूर्वस्यां दिशि प्रारम्भः उत्तरस्यामुपसंहारः इति दिग्विजये क्रमः। प्राचीनबर्हिरिन्द्रः। 'अथ वह्नौ पुरन्दरे प्राचीनबर्हिः' इति केशवः। अनुलोमानिलोद्धूतैः केतुभिः तर्जयन् कुत्सयन् इव। अर्थादभियास्यमानानां कर्मत्वम्। ध्वजपटानां तर्जनीसाम्यमुत्प्रेक्षाहेतुः। ण्यन्ताद्भूवादिपठितात्तर्जेरिदं रूपम् ॥

रजोभिः स्यन्दनोद्धूतैर्गजैश्च घनसन्निभैः।
भुवस्तलमिव व्योम कुर्वन् व्योमेव भूतलम् ॥ २९ ॥

प्रका—रजोभिरिति ॥ तलं समप्रदेशम्। रजोव्याप्ते व्योम्नि या तलप्रतीतिः तामनुसृत्य तलशब्द उपात्तः। अत्र करणभूतानामुत्प्रेक्षाया हेतुत्वम्। क्रिया चोत्प्रेक्ष्या। फलं च शक्तिसंपदतिशयः ॥

1 अहितान।

**पदा—रजोभिरिति ॥** स्यन्दनोद्धूतैः रजोभिः घनसान्निभैः गजैः च व्योम भुवः तलम् इव भूतलं व्योम इव कुर्वन्। तलम् समप्रदेशः। स्यन्दनचक्रोत्क्षिप्ते रजसि व्योमव्याप्ते सति तत्र भूतलत्वप्रतीतिः, भूमौ संचरतां गजानां घनसादृश्यात् भुवि गगनत्वप्रतीतिश्च तेन कृतेत्यर्थः। प्रभुशक्तिसंपत्तिरुत्प्रेक्षाफलम् ॥

[1]स सेनां महतीं कर्षन् पूर्वसागरगामिनीम् ।
बभौ हरजटाभ्रष्टां गङ्गामिव भगीरथः ॥ ३० ॥

**प्रका—स सेनामिति ॥** कर्षन्निति नयनं लक्ष्यते। स्वाधीनता च द्योत्यते। अत्रोपमानोपमेययोर्यत्प्रभूतदेशव्यापकत्वदुर्धरवेगत्वादिसाम्यं प्रतीयते, तस्य हरजटाभ्रष्टत्वं द्योतकम्। तस्या अपि तत्काले तथाभावात्। पूर्वसागरगामिनीत्वं च साधारणम्। उपमया च तद्व्यापारस्य जगत उपमर्दकत्वेपि परमोपकारकत्वं ध्वनितम् ॥

**पदा—स इति ॥** महतीं सेनां कर्षन् स बभौ। कर्षन्नित्यनेन प्रापणं लक्ष्यते। स्वाधीनताप्रतीतिः फलम्। हरजटाभ्रष्टां त्रिपुरहरकोटीराद्गलितां गङ्गां कर्षन् भगीरथ इव। पूर्वसागरगामिनीमिति साधारणो धर्मः। अस्य व्यापारस्य जगदुपमर्दकत्वेपि परमोपकारकत्वमुपमया ध्वन्यते ॥

प्रतापोऽग्रे ततः शब्दः परागस्तदनन्तरम् ।
ययौ पश्चाद्रथादीत्याचतुःस्कन्धेव सा चमूः ॥ ३१ ॥

**प्रका—प्रताप इति ॥** प्रतापस्य यानं नाम वार्ताहरादिमुखेन प्रसरणम्। तत इति पश्चादर्थे निपातः। शब्दः सेनाकलकलः। पश्चाद्भागे रथादिर्यस्य स तथा। तस्य भावस्तत्त्वम्। स्कन्धश्चयः। व्यूह इत्यर्थः। 'स्कन्धः समुदये चये' इति केशवः। ययाविति प्रत्येकं संबन्धः। तेषु पुरो गच्छत्सु पश्चात्कृतरथादित्वात्सा चमूश्चतुस्कन्धेवाभवदित्यर्थः। उत्प्रेक्षया च सेनायाः स्कन्धैरिव प्रतापादिभिरपि परविलासकत्वं व्यङ्ग्यम् ॥

---

1 मल्लिनाथपाठे तु इतः परं योजिताभ्यां 'प्रतापः' इति 'मरुपृष्ठानि' इति च पद्याभ्यां समनन्तरमेवास्य पद्यस्य योजना दृश्यते। 2 प्रतीति।

पदा—प्रताप इति ॥ अग्रे प्रताप: ययौ । 'स प्रताप: प्रभावश्च यत्तेज: कोशदण्डजम्, इति सिंह:। आगमनकाल: संप्राप्त इति वार्ताहरै: कथ्यमानत्वात्प्रतापस्य पूर्वगमनम् । तत: शब्द: । ययाविति सर्वत्र योजनीयम्। शब्द: सेनाकळकळ: । तदनन्तरं पराग: तुरगादिसमुद्भूतं रज: । सा सेना पश्चाद्रथादित्वात् चतुस्कन्धा इव । पश्चाद्भागे रथादिर्यस्यास्तस्या भावस्तत्त्वम्। चत्वार: स्कन्धा यस्या: । स्कन्धश्चय: व्यूह इति यावत् । 'स्कन्ध: समुदये चये' इति केशव: । प्रतापादीनामपि सेनाचयवदेव भयजनकत्वमुत्प्रेक्षया द्योत्यते ॥

मरुपृष्ठान्युदम्भांसि नाव्या: सुप्रतरा नदी: ।
विपिनानि प्रकाशानि शक्तिमत्वाच्चकार स: ॥ ३२ ॥

प्रका—मरुपृष्ठानीति ॥ मरुर्निर्जलो देश: । पृष्ठमुपरिभाग: । अनेनोदम्भस्त्वस्यात्यन्तासंभाव्यत्वं ध्वन्यते । उदम्भांसि प्रभूताम्भांसीत्यर्थ: । अत्र कौटल्य:—'अनुदके च त्रिचतुष्पदमध्वप्रमाणेन शक्त्या चोदकं वाहयेत्' इति । नाव्या इति । 'नाव्यं त्रिलिङ्गं नौतार्ये' इति सिंह: । सुप्रतरा: तरणसाधनसंपदा । यथाह कौटल्य:—हस्तिस्तम्भसंक्रमसेतुबन्धनौकाष्ठवेणुसंघातैरलाबुचर्मकरण्डदृतिप्लवगण्डिकावेणिकाभिश्चोदकानि तारयेत्' इति । शक्तिमत्त्वात् कोशदण्डसंपन्नत्वात् । विपिनानि वनभुव: । प्रकाशानि वनच्छेदेन स्फुटानि । अत्र कश्चित्—मरुपृष्ठान्युदम्भांसि चकार । उदम्भांसि च मरुपृष्ठनीत्यादि वदन् विध्यनुवादौ पर्यायेण विपर्यस्ताश्रयौ दर्शितवान् । तदशाब्दमयुक्तमनुपयुक्तं च । अनुवाद्यं हि प्रथममुपन्यस्य तद्भित्तिकत्वेन विधेयं पश्चादुपन्यस्यमिति युक्तो मार्ग: । या तु विपर्ययेपि तन्नियमप्रतीति:, सार्थबलेन । न तु शब्दन्यायेन । तथाङ्गीकारेप्येकस्मिन् वाक्ये विवक्षाद्वयानुपपत्ति: । विवक्षाभेदे तु विपर्ययेण तथैव व्यावृत्य पठनीयम् । अर्थबलात्त्वावृत्ति: शास्त्र एवाङ्गीकरणीया । किं च उदम्भांसीत्यस्यानुवाद्यत्वे विशेष्यस्यासिद्धि: । अध्याहारो वा कर्तव्य: । अध्याहर्तुं च न किञ्चित्प्रसिद्धमुपपन्नं वा विद्यते । अन्विष्य वा ग्रहणे प्रतीतिविरस्यं काव्यसमयानिवृत्तिश्च स्यात् । एवमशाब्दत्वम्। अयुक्तत्वानुपयुक्तत्वे तु, उदम्भसां मरुपृष्ठकरणे हि न किञ्चित्प्रयेजनं सुयोजम्। सुप्रतराणां च नदीनां नाव्यत्वकरणे निमित्तमुभयं संभाव्यते पराभियोगप्रतिघात:, स्वसैन्योपभोग्यजलसमृद्धिश्च । तत्राद्य: पक्षो निरतिशयसंपन्नप्रभुशक्तेरस्य

पराभियोज्यत्वासंभवादसंभवी। संभवे वास्य स्वरक्षणोपक्षीणैवास्य प्रभुशक्तिः स्यात्। द्वितीयस्तु पक्षो मरुपृष्ठान्युदम्भांसि कृतवतः सुप्रतराणां नदीनां नाव्यत्वकरणे न च कश्चिदतिशय इत्युपेक्ष्यः। विजिगीषोश्च पथि, स्कन्धावारे, परपुरोपरोधे, वा यत्त्रितयं परिपन्थि निर्जलत्वम्, अगाधजलत्वं, वनदुर्गमत्वं, च तस्मिन् परिहृते किमन्यदर्थनीयम्। यत्सिद्धये कष्टकल्पनाप्रयासोऽङ्गीक्रियते॥

पदा—मरुपृष्ठानीति॥ सः शक्तिमत्त्वात् कोशदण्डसंपन्नत्वात् मरूणां निर्जलप्रदेशानां पृष्ठान्युपरिभागान् उदम्भांस्युद्भूतजलानि चकार। निर्जलप्रदेशान् प्रभूतजलान् चकारेत्यर्थः। नाव्याः नावा तरितुं शक्याः। 'नाव्यं त्रिलिङ्गं नौतार्ये' इत्यमरः। नदीः सुप्रतराः सुखेन तरितुं शक्याः चकार। सेतुबन्धनसंक्रमीयादिविधानैरिति भावः। विपिनानि प्रकाशानि स्फुटानि चकार। वनच्छेदादिति शेषः॥

त्याजितैः फलमुत्खातैर्भग्नैश्च बहुधा नृपैः।
तस्यासीदुल्बणो मार्गः पादपैरिव दन्तिनः ॥ ३३ ॥

प्रका—त्याजितैरिति॥ फलं त्याजितैः हृतधनैरित्यर्थः। 'फलं फाले धने बीजे निष्पत्तौ भोगलाभयोः' इति केशवः। एतत्प्रह्वविषयम्। उत्खातैः राज्याद्भ्रंशितैः। एतदप्रह्वविषयम्। भग्नैः पीडितैः एतदप्रह्वदुर्गापाश्रयविषयम्। उल्बणो व्यक्तः। 'स्फुटं प्रव्यक्तमुल्बणम्' इति सिंहः। दन्तिन इवेत्युपमया नेतृव्यापारस्यान्यदुष्करत्वाप्रतिविधेयत्वादि ध्वन्यते॥

पदा—त्याजितैरिति॥ फलं त्याजितैः उत्खातैः बहुधा भग्नैः च नृपैः तस्य मार्गः उल्बणः आसीत्। फलं धनम्। 'फलं फाले धने' इत्यादि केशवः। हृतधनैरित्यर्थः। प्रह्वेभ्यः करादानमनेनोक्तम्। उत्खातैः राज्याद्भ्रंशितैः। एतदप्रह्वविषयम्। बहुधा भग्नैः पीडितैश्च। अप्रह्वदुर्गाद्याश्रितविषयमिदम्। उल्बणः स्पष्टः। 'प्रकाशं प्रकटं स्पष्टमुल्बणं विशदं स्फुटम्' इति यादवः। दन्तिनः पादपैः इव। त्याजितैरित्यादिविशेषणान्यत्रापि योजनीयानि। अर्थस्तु स्पष्टः। उपमया तद्व्यापारस्यान्यदुष्करत्वादयः प्रतिपाद्यन्ते॥

पौरस्त्यानेवमाक्रामंस्तांस्ताञ्जनपदाञ्जयी।
प्राप तालीवनश्याममुपकण्ठं महोदधेः ॥ ३४ ॥

**प्रका—पौरस्त्यानिति** ॥ एवमिति। करादानपीडनोच्छेदनैरित्यर्थः। आक्रामन्नभिभवन्। हेतौ शता। पौरस्त्यजनपदाक्रमणेन हेतुना समुद्रान्तिकं प्रापेत्यर्थः। तांस्तानिति वीप्सया मध्ये न कश्चिद्विस्मृत उपेक्षितोऽशक्याक्रमणो वाभवदिति ध्वन्यते। जयीति। प्रकारत्रयेऽपि सिद्धजय इत्यर्थः। 'जिदृक्षि' इत्यादिनेनिप्रत्ययः। तालीवनश्याममिति सैन्यनिवेशसुखत्वमुक्तम्। अनेन प्राचीविजयस्य किञ्चिच्छेषत्वमुक्तम्॥

**पदा—पौरस्त्यानिति** ॥ पौरस्त्यान् तान् तान् जनपदान् एवं आक्रामन् सः पयोनिधेः उपकण्ठं प्राप। पौरस्त्यान् पूर्वस्यां दिशि भवान्। दक्षिणापश्चात् पुरसस्त्याक्। एवं करादानोच्छेदनपीडनैः। आक्रामन्नभिभवन् सन्। उपकण्ठं समीपम्। जयी सिद्धजय इयर्थः। 'जिदृक्षि' इत्यादिनेनिप्रत्ययः। तालीवनेन श्यामम्। अनेन सेनानिवेशसौकर्यमुक्तम्॥

**अनम्राणां समुद्धर्तुस्तस्मात्सिन्धुरयादिव।**
**आत्मा संरक्षितः सुह्मैर्वृत्तिमाश्रित्य वैतसीम्** ॥ ३५ ॥

**प्रका—अनम्राणामिति** ॥ समुद्धर्तुः सम्यगुच्छेतुः। सिन्धुरयात् नदीवेगात्। वैतसीमिति। यथाह--'बलीयसाभियुक्तो दुर्बलः सर्वत्रानुप्रणतो वैतसं धर्ममातिष्ठेत्' इति॥

**पदा--अनम्राणामिति** ॥ सुह्मैः वैतसीं वृत्तिम् आश्रित्य तस्मात् आत्मा संरक्षितः। सुह्मास्तद्देशभवा राजानः वेतससंबन्धिनीं वृत्तिमाश्रित्य आगमनसमय एव प्रणमन्त इत्यर्थः। अत्र कौटल्यः—'बलीयसाभियुक्तो दुर्बलः सर्वत्रानुप्रणतो वैतसं धर्ममातिष्ठेत्' इति। सिन्धुरयान्नदीवेगात्सकाशादिवेत्युपमा। 'देशे नदविशेषेऽब्धौ सिन्धुर्ना सरिति स्त्रियाम्' इत्यमरः। वेतसा यथा नदीवेगे सति नमन्ति तद्गमने चोत्तिष्ठन्ति तथेत्यर्थः। अनम्राणाम् अप्रणतानाम्। समुद्धर्तुः सम्यगुन्मूलयितुः। नदीवेगोऽप्यनम्रान् वृक्षादीनुन्मूलयति॥

**वङ्गानुत्खाय तरसा नेता[1] नौसाधनोद्यतान्[2]।**
**निचखान जयस्तम्भान्गङ्गास्रोतोन्तरेषु सः** ॥ ३६ ॥

1 नेता। 2 द्य।

प्रका—वङ्गानिति ॥ वङ्गास्तदनन्तरं दक्षिणतो जनपदाः। उत्खाय राष्ट्रादपसार्य। तरसा बलेन शक्तिविनियोगेनेत्यर्थः। रिपून् कृतापकारान्। नौसाधनोद्धतान् नौलक्षणयुद्धसाधनदृप्तान्। जयस्तम्भो नाम प्रशस्तिरचनाक्षराङ्कितो जयसूचकस्तम्भः। यथाह मुरारिः—"प्रशस्तिरचनावर्णायमानेक्षणश्रेणीसंभृतगोत्रभिन्मयजयस्तम्भो यथा रावणः" इति। गङ्गास्रोतोन्तरेष्विति। मुखसहस्रेण सरितां पतिमुपतिष्ठमानाया भगवत्याः पूर्वापरायतानि यानि स्रोतांसि तत्तदन्तरालवर्तिनो दुस्साधासाधारणनौयुद्धनैपुणेन च दृप्तान् अत एव कृतावस्कन्दाद्यपकारानवश्योच्छेद्यान् वङ्गान् प्रतिनौसहस्रविरचनादिभिः प्रध्वस्तोद्यमान् विद्राव्य अत्र न कश्चिदनाक्रान्तः प्रदेश इति प्रथयितुं तत्तत्स्रोतोन्तरालेषु बहून् जयस्तम्भान् निखातवानित्यर्थः। उत्खाय निचखानेति परिवृत्तिरलङ्कारः॥

पदा—वङ्गानिति ॥ सः तरसा वङ्गान् रिपून् उत्खाय गङ्गास्रोतोन्तरेषु जयस्तम्भान् निचखान। वङ्गास्तदनन्तरं दक्षिणस्यां दिशि जनपदाः[1]। तरसा बलेन। 'तरसी बलरंहसी' इति यादवः। उत्खाय राज्यान्निस्सार्य। गङ्गायाः स्रोतसां प्रवाहाणां अन्तरालेषु। गङ्गा हि मुखसहस्रेण सरित्पतिं निषेवते। तेषां मध्ये बहवो जनपदाश्च सन्ति। ते सर्वेऽपि वङ्गाख्याः। जयसूचकास्तम्भा जयस्तम्भाः। रघुरेतावत्पर्यन्तं जितवानित्यादीन्यक्षराणि च स्तम्भे लिख्यन्ते। निचखान प्रतिष्ठापितवान्। नावा साधनेन युद्धसाधनेनोद्धतान् दृप्तान्। नौकासमरनिपुणानित्यर्थः। अत एव कृतापराधत्वाद्रिपून्। अत एव चोत्खननम्। नौसहस्रं विधाय तान् सर्वानप्यपसार्य तेषु सर्वेषु जयस्तम्भं निचखानेत्यर्थः। उत्खाय निचखानेति परिवृत्तिरलङ्कारः॥

आपादपद्मप्रणताः कलमा इव ते रघुम्।
धनैः[2] संवर्धयामासुरुत्खातप्रतिरोपिताः ॥ ३७ ॥

प्रका—अपादेति ॥ कळमाः शालिभेदाः। धनैरिति बहुवचनं नानाविधत्वात्। संवर्धयामासुः कोशदण्डोपचयं चक्रुरित्यर्थः। प्रतिरोपिताः पुनःस्थापिताः। अत्रोत्खननं प्रह्वत्वे हेतुः, तच्च प्रतिरोपणे, तदपि धनदाने इति क्रमः। कळमाश्चोत्खातप्रतिरोपिताः सन्तः फलशालिनो भवन्ति। तत्प-

1 णाता। 2 फलैः।

रिणामे च निकटपद्मावधि प्रवणाश्च। यथा—'नमन्ति निर्घ्रातुमिवासितोत्पलम्' इति॥

पदा—आपादेति॥ ते फलैः रघुं संवर्धयामासुः। ते वङ्गाः। फलैर्धनैः। 'फलं फाले धने बीजे निष्पत्तौ भोगलाभयोः। सस्ये' इति केशवः। संवर्धयामासुः कोशवृद्धिं चक्रुः। कळमाः इवेत्युपमा। कळमाः शालिभेदाः। साधारणं धर्ममाह—आपादेत्यादिना। पादपद्मपर्यन्तं प्रवणाः कृतप्रणामाः। कळमा अपि स्वपादगतपद्मपर्यन्तं प्रवणा भवन्ति। तदुक्तं—'कळमाः पाकविनम्रा मूलसरोजस्य गन्धमाघ्राय। पवनान्दोळितशिरसः प्रायः कुर्वन्ति परिमळश्लाघाम्' इति। पूर्वमुत्खाताः पुनश्च प्रतिरोपिताः। कळमानामप्युत्खातप्रतिरोपितत्वे सस्याधिक्यं प्रसिद्धम्॥

स तीर्त्वा कळमां[1] सैन्यैर्बद्धद्विरदसेतुभिः।
उत्कलादर्शितपथः कलिङ्गाभिमुखो ययौ ॥ ३८॥

प्रका—स इति॥ कळमा नदीभेदः। बद्धेति। बद्धो द्विरदमयः सेतुर्यैः। उत्कलास्तत्तीरवासिनः। अत्र तेषां दुर्बलत्वमध्वनो दुर्गमत्वं च द्योत्यते॥

पदा—स इति॥ सः सैन्यैः कळमां तीर्त्वा कलिङ्गाभिमुखः ययौ। सैन्यैः तरणसाधनैः। कळमां नदीभेदम्। कलिङ्गा जनपदविशेषाः। सैन्यैः कळमातरणप्रकारमाह—बद्धद्विरदसेतुभिरिति। बद्धा द्विरदमयः सेतुर्यैः। उत्कलैः कळमातीरवासिभिर्जनैः आदर्शितः पन्था यस्य। अनेनोत्कलानां दुर्बलत्वं मार्गस्य दुर्गमत्वं च द्योत्यते॥

स प्रतापं महेन्द्रस्य मूर्ध्नि तीक्ष्णं न्यवेशयत्।
अङ्कुशं द्विरदस्येव यन्ता गम्भीरवेदिनः ॥ ३९॥

प्रका—स इति॥ महेन्द्रो नाम कश्चित्कुलपर्वतः कलिङ्गेषु। तीक्ष्णमुष्णं दुःसहमित्यर्थः। न्यवेशयदिति। तथाविधदुर्गाश्रयैरपि प्रतापोऽस्य

1 कपिशाम्।

दुःसहत्वेनावधृत इत्यर्थः । गम्भीरवेदिन इति । 'त्वग्भेदाच्छोणितस्रावादामांसव्यथनाच्च यः । वेदयेद्वारणः स स्याज्ज्ञेयो गम्भीरवेदकः ॥'' इति राजपुत्रीये ॥

पदा—स इति ॥ सः महेन्द्रस्य मूर्ध्नि प्रतापं न्यवेशयत् । महेन्द्रः कलिङ्गदेशवर्ती कश्चित्कुलपर्वतः । स च सप्तसु कुलपर्वतेष्वेकः । यथा विष्णुपुराणे—'महेन्द्रो मलयः सह्यः शुक्तिमानृक्षपर्वतः । विन्ध्यश्च पारियात्रश्च सप्तैते कुलपर्वताः' इति । यन्ता गम्भीरवेदिनः द्विरदस्य मूर्ध्नि अङ्कुशम् इवेत्युपमा । 'त्वग्भेदाच्छोणितस्रावादामांसव्यथनाच्च यः । वेदयेद्वारणः स स्याज्ज्ञेयो गम्भीरवेदकः' इति राजपुत्रीये । 'चिरकालेन यो वेत्ति शिक्षां परिचितामपि । गम्भीरवेदी विज्ञेयः स गजो गजवेदिभिः' इति मृगवर्मीये च । अनेन रघुप्रतापस्य दुस्सहत्वेपि कलिङ्गाधिपतेः क्रमेणैव विज्ञानमित्युक्तम् । तीक्ष्णमित्युभयविशेषणम् । दुस्सहमित्यर्थः ॥

प्रतिजग्राह कालिङ्गस्तमस्त्रैर्गजसाधनः ।
पक्षच्छेदोद्यतं शक्रं शिलावर्षीव पर्वतः ॥ ४० ॥

प्रका—इत्थं दुर्गं निराशस्य कलिङ्गपतेः क्षत्रधर्मेण साहसिकत्वमाह—प्रतिजग्राहेति ॥ प्रत्युद्गमनेन ग्रहणं प्रतिग्रहः । कालिङ्ग इति देशाभिमान उक्तः । गजाः साधनं बलं यस्य ; अनेन गजवनेषु कलिङ्गवनस्य श्रेष्ठत्वादसाधारणदण्डसंपदुक्ता । गजशिलासाम्येन पर्वतसाम्यं च प्रत्याय्यते । उपमयात्र विफलसाहसत्वं ध्वन्यते । पक्षच्छेदोद्यमवचनेन सपक्षत्वप्रतीतेः पर्वतस्यापि प्रतिग्रह उपपन्न इत्यवसेयम् ॥

पदा—प्रतिजग्राहेति ॥ कालिङ्गः अस्त्रैः तं प्रतिजग्राह । प्रत्युद्ययौ । आगमनसमय एवास्त्रप्रयोगं कृतवानित्यर्थः । गजाः साधनं युद्धसाधनं यस्य । अनेन तद्देशस्य गजबाहुल्यमुक्तम् । पर्वतः पक्षच्छेदोद्यतं शक्रं शिलावर्षी इव । यथा पक्षच्छेदोद्यतमिन्द्रं पर्वतः शिलावर्षी प्रत्युद्ययौ तथेत्यर्थः ॥

द्विषां विषह्य काकुत्स्थस्तत्र नाराचदुर्दिनम् ।
सन्मङ्गलस्नात इव प्रतिपेदे जयश्रियम् ॥ ४१ ॥

  

**प्रका—द्विषामिति ॥** विषह्येति पराक्रमस्य प्रसरं दत्त्वेत्यर्थः। दुर्दिनशब्देन वर्षं लक्ष्यते। मेघच्छन्नेऽह्नि दुर्दिनमिति मुख्योऽर्थः। अन्धकारितगगनत्वं च द्योत्यम्। सन्मङ्गलस्नातः सद्भिः कृतमङ्गलस्नानः। तच्च सर्वौषधिस्नानम्। 'यत्तु सर्वौषधिस्नानं तन्मङ्गल्यमलोचकम्'[1] इति यादवः। जयश्रियं जयसम्पदं सम्पूर्णजयमित्यर्थः ॥

**पदा—द्विषामिति ॥** काकुत्स्थः तत्र द्विषां नाराचदुर्दिनं विषह्य जयश्रियं प्रतिपेदे। नाराचः शरविशेषः दुर्दिनशब्देन वर्षं लक्ष्यते। मेघच्छन्नेऽह्नि दुर्दिनमिति मुख्योर्थः। अन्धकारितगगनत्वप्रतीतिः फलम्। विषह्य मर्षित्वा। शरवर्षं चिरकालमनुभूयेत्यर्थः। तेषां विक्रमदर्शनार्थमिति शेषः। जयश्रियं जयसम्पदम्। सन्मङ्गलस्नात इव सन्मङ्गलैः स्नातः कृतस्नानः। सद्भिः कृतमङ्गलस्नान इत्यर्थः। मङ्गलस्नानं सर्वौषधिस्नानम्। 'यत्तु सर्वौषधिस्नानं तन्मङ्गल्यमलोचकम्' इति यादवः। अत्र द्विषां नाराचवर्षानुभवस्तस्य सर्वदिव्यौषधिसनाथेन जलेन कलशमापूर्य सद्भिः कृतं विजयार्थं यत्स्नानं तदनुभव इवाभूदित्युत्प्रेक्षते। नाराचपातेषु पीडाभावस्तदनन्तरं जयदर्शनं चोत्प्रेक्षाहेतुः ॥

> **ताम्बूलीनां दलैस्तत्र रचितापानभूमयः।**
> **नालिकेरासवं योधाः शात्रवं च पपुर्यशः ॥ ४२ ॥**

**प्रका—ताम्बूलीनामिति ॥** आपानं पानमेव। 'आपानं तु सुरापाने तद्गोष्ठ्याम्' इति केशवः। वक्ष्यति च—'पानभूमिरचनाः' इति। नालिकेरासवं नालिकेरकृतं मधु। ताम्बूलीनां दलैः पपुरित्यन्वयः। शात्रवमिति तद्देशाक्रमणेन तद्यशोऽपि हृतवन्त इत्यर्थः ॥

**पदा—ताम्बूलीनामिति ॥** योधाः तत्र ताम्बूलीनां दलैः नालिकेरासवं पपुः। तद्देशसुलभैस्ताम्बूलीदलैस्तद्देशसुलभं नालिकेरमद्यं पपुरित्यर्थः। शात्रवं यशश्च। पपुरित्यनुषज्यते। तद्देशाक्रमणेन शत्रूणां यशोऽप्यपहृतवन्त इत्यर्थः। रचितापानभूमयः आपानं सुरापानम्। 'आपानं तु सुरापाने तद्गोष्ठ्याम्'' इत्यादि केशवः। तदर्था भूमिरापानभूमिः। अनेन कृतविजयत्वात्स्वास्थ्यमुक्तम् ॥

---

1 आलोचकम् अनभ्यङ्गमित्यर्थः।

गृहीतप्रतिमुक्तस्य स धर्मविजयी नृपः ।
श्रियं महेन्द्रनाथस्य जहार न तु मेदिनीम् ॥ ४३ ॥

प्रका — गृहीतेति ॥ धर्मविजयी शत्रोरत्यन्तानुच्छेदेन विजयी । अथ च धर्मार्थं विजयी । श्रियं धनसंपदम् । ननु आचार्येण; 'त्रयोऽभियोक्तारो धर्म,लोभा,सुरविजयिनः' इति । तेषामभ्यवपत्त्या धर्मविजयी तुष्यति । तमभ्यवपद्येत । परेषामपि भयाद्भूमिद्रव्यहरणेन लोभविजयी तुष्यति । तमर्थेनाभ्यवपद्येत' इत्युक्तम् । तत्कथं धर्मविजयिनो धनहरणम् । तत्र वा कथं लोभविजयित्वं न स्यात् । उच्यते — शास्त्रे परिभाषामात्रमिदम् । न वस्त्वर्थोऽसौ । स तु शब्दशक्त्या गम्यत एव । धर्मेण निमित्तेन यो विजयी, स धर्मविजयी । यस्तु लोभेन, स लोभविजयी । रघुस्तु धर्मार्थं विजयी । 'स विश्वजितमाजह्रे' इति वक्ष्यमाणत्वात् । पारिभाषिकत्वेऽपि 'न तु मेदिनीम्' इत्युक्तत्वान्न लोभविजयित्वम् । न च लोभव्यतिरिक्तहेतुकमर्थादानं लोभविजयित्वं प्रयोजयति ॥

पदा — गृहीतेति ॥ सः महेन्द्रनाथस्य श्रियं जहार । महेन्द्रनाथः कालिङ्गः । मेदिनीं तु न । जहारेत्यनुषज्यते । गृहीतप्रतिमुक्तस्य पूर्वं गृहीतस्य पश्चात्प्रतिमुक्तस्य विसृष्टस्य । प्राणापहारोऽपि तदानीं शक्योऽभूदिति भावः । मेदिनीप्राणयोर्हरणाभावे हेतुमाह — धर्मविजयी धर्मार्थं विजेतुं शीलमस्येति तथा । अत एव धनस्य विश्वजित्युपयोगं वक्ष्यति ॥

ततो वेलातटेनैव फलवत्पूगमालिना ।
अगस्त्यचरितामाशामनाशास्यजयो ययौ ॥ ४४ ॥

प्रका — तत इति ॥ ततः इत्थमुपवर्णितात्प्राचीविजयादनन्तरमित्यर्थः । वेलातटेनैवेति । 'वेला कूले समुद्रस्य' इति केशवः । तटमुपान्तः । अनेन गमने स्वाच्छन्द्यमुक्तम् । फलवदित्यादिना भोग्यवस्तुसंपदमुपलक्षयति । ननु, 'फलवत्पूगमालेन' इति भवितव्यम् । 'कर्मधारयमत्वर्थीयाभ्यां बहुव्रीहिर्लघुत्वात्प्रक्रमस्य' इति । न । फलवत्पूगान् मलितुं धर्तुं शीलमस्येति विवक्षणात् । 'मल मल्ल धारणे' इति धातुः । यथा — 'किरणमाली' इति । अनाशास्यजयः

1 स्त्या ।

सिद्धजय इत्यर्थः। अनेनास्य स्वच्छन्दयात्रायां कः प्रतिरोध इति ध्वन्यते। अथवा, परैरनाशास्योऽप्रार्थनीयो जयो यस्येति। अनेन तत्रत्यानां स्वयमुपनतत्वमुक्तम्। अगस्त्यचरितां दक्षिणाम्। अत्र लोकश्रेष्ठेनादृतत्वादिवायमादृतवानित्युत्प्रेक्षा ध्वन्यते॥

**पदा—तत इति॥** ततः सः वेलातटेन एव अगस्त्यचरिताम् आशां ययौ। ततः प्राचीजयानन्तरम्। वेलातटेन वेलाप्रदेशेन। 'वेला कूले समुद्रस्य' इति केशवः। अगस्त्यचरितामाशां दक्षिणां दिशम्। फलवतः पूगान् मलितुं धर्तुं शीलमस्येति तथा। 'मल मल्ल धारणे' इति धातुः। एतच्चोपभोग्यवस्त्वन्तराणामप्युपलक्षणम्। अनाशास्यः अनभिलषणीयो जयो येन। सिद्धजय इत्यर्थः। परैरनाशास्योऽप्रार्थनीयो जयो यस्येति वा॥

स[1] सैन्यपरिभोगेन गजदानसुगन्धिना।
कावेरीं सरितां पत्युः शङ्कनीयामिवाकरोत् ॥ ४५ ॥

**प्रका—स इति॥** गजेति। गजदानसुगन्धोऽस्यास्तीत्यस्मिन्नर्थे इनिप्रत्ययः। उपमानाभावात् सहजगन्धाभावाच्च 'गन्धस्येदुत्पूतिसुसुरभिभ्यः' इतीकाराभावः। शङ्कनीयामन्यभुक्तत्वेन वितर्कणीयाम्॥

**पदा—स इति॥** सः सैन्यपरिभोगेन कावेरीं सरितां पत्युः शङ्कनीयाम् अकरोत् इव। गजतुरगादिरूपस्य सैन्यस्य परिभोगेन स्नानपानादिरूपेणानुभवेन। सरितां पत्युः समुद्रस्य कावेरीमन्यभुक्तेयमिति शङ्कनीयामकरोदिव। शङ्कायां हेतुमाह—गजदानसुगन्धिनेति। गजानां दानस्य मदजलस्य गन्धोऽस्त्यस्मिन्निती निप्रत्ययः। 'गन्धस्येदुत्पूतिसुसुरभिभ्यः' इतीकारस्त्वत्र न संभवति। उपमानाभावात् सहजगन्धाभावाच्च॥

[2]भयोत्सृष्टविभूषाणां तेन चोलकयोषिताम्।
अळकेषु चमूरेणुश्चूर्णप्रतिनिधीकृतः ॥ ४६ ॥

1 एतत्पद्यानन्तरं, बलैरध्युषिताः, ससञ्जुः, भोगिवेष्टनमार्गेषु इति क्रमः सञ्जीविनीसहितमुद्रितपुस्तकेषु दृश्यते।

2 सञ्जीविनीकृतस्तु केरळयोषितामितिपठन्तः इदं पद्यं तस्यानीकैः इति पद्यस्य मुरचीत्यादिपद्यस्य च मध्ये संनिवेश्य व्याख्यातवन्तः।

प्रका — भयोत्सृष्टेति ॥ चूर्णप्रतिनिधीकृत इति । चूर्णं वासचूर्णम् । प्रतिनिधिर्मुख्याभावे ग्राह्यस्तत्सदृशः । अत्रानुकम्पाशीलत्वादिवेत्युत्प्रेक्षाप्रतीतिः । केचित्तु, 'केरळयोषिताम् इति पाठमादृत्य तत्प्रकरणे पठन्ति ॥

पदा — भयेति ॥ तेन केरळयोषितां अळकेषु चमूरेणुः चूर्णप्रतिनिधीकृतः । मुख्याभावे योऽन्यस्तत्सदृशः स प्रतिनिधिः । गजतुरगादिसमुत्थितं रेणुमेव गन्धसंस्कारचूर्णानां प्रतिनिधित्वेन कल्पितवान् । अत्र दयाशीलत्वादिवेत्युत्प्रेक्षाध्वनिः । स्त्रीजनसुलभाद्भयादुत्सृष्टाः परित्यक्ताः विभूषा अळकचूर्णाद्यलङ्कारा याभिः ॥

[1]दिशि मन्दायते तेजो दक्षिणस्यां रवेरपि ।
तस्यामेव रघोः पाण्ड्याः प्रतापं न विषेहिरे ॥ ४७ ॥

प्रका — दिशीति ॥ मन्दायते मन्दीभवति । दक्षिणायने हि मेघच्छन्नत्वात् रविर्मन्दप्रतापो भवतीति भावः । रवेरपीति । अप्रतिभटप्रतापस्यापीत्यर्थः । तस्यामेवेति दिगन्तरव्यवच्छेदेनाद्भुतत्वं ध्वनति ॥

पदा — दिशीति ॥ दक्षिणस्यां दिशि रवेः तेजः अपि मन्दायते । दुरभिभवप्रभावस्य रवेरपि तेजो दक्षिणस्यां दिशि मन्दीभवति । सूर्यस्य तदानीं मेघच्छन्नत्वादियमुक्तिः । पाण्ड्याः तस्यामेव रघोः प्रतापं न विषेहिरे । तस्यामेव नान्यस्यां दिशि । अहो महानुभावोऽसाविति भावः । न विषेहिरे न सेहिरे ॥

ताम्रपर्णीसमेतस्य मुक्तासारं महोदधेः ।
ते निपत्य ददुस्तस्मै यशः स्वमिव संचितम् ॥ ४८ ॥

प्रका — ताम्रपर्णीति ॥ मुक्तासारं मौक्तिकवरम् । 'सारो बले स्थिरांशे च न्याय्ये क्लीबं वरे त्रिषु' इत्यमरः । महोदधेः महोदधिसंबन्धि । ताम्रपर्णीमहोदधिसंगमसमुद्भूतत्वादसाधारणं स्ववंशपरम्परार्जितं परमञ्च धनं मौक्तिकश्रेष्ठं एतदस्मत्सर्वस्वभूतं स्वीकृत्य प्रसीदतु स्वामीति प्रणिपातपुरस्सरं ददुरित्यर्थः ।

1 इदं पद्यं, तस्यानीकैरित्यस्यानन्तरं मुरची इत्यादेः पूर्वञ्च सञ्जीविनीसहितमुद्रितपुस्तके ।

यश इवेत्युत्प्रेक्षया तस्याप्यसाधारणरत्नभाजनतालक्षणस्य यशसो भाजनं स एव संवृत्त इति ध्वन्यते ॥

पदा—अत एवाह—ताम्रपर्णीति ॥ ते तस्मै निपत्य ताम्रपर्णीसमेतस्य महोदधेः मुक्तासारं ददुः । ताम्रपर्णीसमुद्रसमागमे हि मौक्तिकोद्भवः। मुक्तासारं मौक्तिकवरम् । 'सारो बले स्थिरांशे च न्याय्ये क्लीबं वरे त्रिषु' इति सिंहः । अविषह्यपराक्रमोऽयमिति मत्वा निजसर्वस्वभूतं चिरकालसंचितं मौक्तिकवरमेव प्रणिपातपुरःसरं तस्मै समर्पयामासुरित्यर्थः । संचितं स्वं यश इव चिरकालसंचितमात्मीयं यश इव । धावल्यमुत्प्रेक्षाहेतुः । संचितमिति मुक्तासारेऽपि द्रष्टव्यम् । स्वशब्दोऽप्युभयशेषः । असाधारणरत्नभाजनत्वलक्षणस्य यशसोऽपि स एव भाजनं जात इत्युत्प्रेक्षया ध्वन्यते ॥

बलैरध्युषितास्तस्य विजिगीषोर्गताध्वनः ।
मरिचोद्भ्रान्तहारीता मलयाद्रेरुपत्यकाः ॥ ४९ ॥

प्रका—बलैरिति ॥ मरिचेति मरिचेभ्य उद्भ्रान्ता उड्डीना हारीताः पक्षिविशेषा येषु ते तथा इति देशस्वभावोक्तिः । बहुकुतूहलोपलक्षणञ्चैतत् । तस्य विजिगीषुत्वादनलसस्यासन्तुष्टस्य चातिदीर्घमध्वानं लङ्घितवतस्सैनिकैर्विश्रमाय बहुकुतूहला मलयासन्नभूमयोऽध्युषिता इत्यर्थः ॥

पदा—बलैरिति ॥ तस्य बलैः मलयाद्रेः उपत्यकाः अध्युषिताः। 'उपत्यकाद्रेरासन्ना भूमिः' इति सिंहः । मलयाचलोपकण्ठे सैनिका विश्रमार्थं निषेदुरित्यर्थः । विजिगीषोर्विजयेच्छोः । गतो लङ्घितोऽध्वा येन । मरिचेभ्य उद्भ्रान्ता बहुजनदर्शनभयादुड्डीना हारीता मरिचप्रियाः पक्षिविशेषा येषु । अत्र स्वभावोक्तिः ॥

ससञ्जुरश्वक्षुण्णानामेलानामुत्पतिष्णवः ।
तुल्यगन्धिषु मत्तेभकटेषु फलरेणवः ॥ ५० ॥

प्रका—ससञ्जुरिति ॥ 'दंशसञ्जस्वञ्जां शपि' इत्यनुनासिकलोपनियमादन्यत्रानुनासिकलोपाभावः । तुल्यगन्धिष्विति । यथा केचित् समरोपहतजन-

1 मा ।

पदभ्रष्टाः पर्यटन्तस्तुल्यजातीयेषु सज्जन्ति, तथैव तेऽपीत्युपमाध्वनिः पदप्रकाश्यः। क्षुद्रेणोपद्रुतस्य महानेव गतिरित्यर्थान्तरन्यासध्वनिश्च वाक्यप्रकाश्यः॥

पदा— ससञ्जुरिति॥ अश्वक्षुण्णानाम् एलानाम् उत्पतिष्णवः फलरेणवः मत्तेभकटेषु ससञ्जुः। 'षञ्ज सङ्गे' इति धातुः। अश्वखुरक्षुण्णानामेलानां पवनवशादुद्गमनशीलाः फलपरागा मत्तानां गजानां मदजलसनाथेषु गण्डप्रदेशेषु विषक्ता बभूवुः। तद्देशानामेलापरिलसितत्वादियमुक्तिः। तुल्यगन्धिषु एलागन्धसमानगन्धवत्सु। अत्र क्षुद्रेण पीडितानां महानेव गतिरित्यर्थान्तरन्यासध्वनिः॥

भोगिवेष्टनमार्गेषु चन्दनानां समर्पितम्।
नास्रसत्करिणां ग्रैवं त्रिपदीच्छेदिनामपि ॥ ५१ ॥

प्रका—भोगीति॥ मार्गशब्देन स्थानं लक्ष्यते। द्योत्यते च निम्नत्वम्। समर्पितं सम्यङ्न्यस्तम्। अस्रसदिति। 'स्रन्सु अवस्रंसने' इति धातोर्लुङि कृते 'द्युभ्यो लुङि' इति परस्मैपदम्। 'पुषादिद्युताद्य्लृदितः परस्मैपदेषु' इत्यङ्। 'अनिदितां हल उपधायाः क्ङिति' इति नकारलोपः। 'अस्रंसत' इत्यपपाठः। स्रंसेर्धातोर्लुङोऽन्यत्रात्मनेपदित्वात्। ग्रैवं ग्रीवाबन्धनं रज्ज्वादि। त्रिपदी पादबन्धनरज्जुः। 'त्रिपदी पादबन्धनम्' इति यादवः। बलमदेन त्रिपदीमपि छिन्दतां करिणां भोगिवेष्टनपदसमर्पणगाढत्वात् ग्रैवं न स्रस्तमित्यर्थः॥

पदा – भोगीति॥ चन्दनानां भोगिवेष्टनमार्गेषु समर्पितं करिणां ग्रैवं न अस्रसत्। भोगिनां सर्पाणां वेष्टनमार्गेषु। मार्गशब्देनात्र स्थानं लक्ष्यते। मार्गवन्निम्नत्वप्रतीतिः फलम्। चन्दनानां बाल्यावस्थायामेव तत्र कृतवेष्टनेषु सर्पेषु प्रदेशान्तराणां उच्छ्रितत्वाद्वेष्टितप्रदेशो निम्नो भवति। यथा लतादिवेष्टितानां वृक्षाणाम्। तत्र समर्पितं बद्धम्। करिणां ग्रैवं ग्रीवाबन्धनरज्जु.। नास्रसत् न स्रस्तमभूत्। अयमपि कुतूहलहेतुः। 'स्रन्सु अवस्रंसने' इति धातोर्लुङि कृते 'द्युभ्यो लुङि' इति परस्मैपदम्। 'पुषादिद्युताद्य्लृदितः परस्मैपदेषु' इत्यङ्। 'अनिदितां हल उपधायाः क्ङिति' इति नकारलोपः। अस्रसदिति रूपम्। 'अस्रंसत' इत्यपपाठः।

स्रंसतेर्लुङोऽन्यत्रात्मनेपदित्वात् । स्रंसाभावो न करिणां बलहानिनिबन्धन इत्याह — त्रिपदीच्छेदिनामपीति । त्रिपदी पादबन्धनरज्जुः । 'कलापकः कण्ठबन्धः त्रिपदी पादबन्धनम्' इति यादवः । तां छेत्तुं शीलमेषामिति तथा ॥

स निर्विश्य यथाकामं तटेष्वालीनचन्दनौ ।
स्तनाविव दिशस्तस्याः शैलौ मलयदर्दुरौ ॥ ५२ ॥
असह्यविक्रमः सह्यं दूरान्मुक्तमुदन्वता ।
नितम्बमिव मेदिन्याः स्रस्तांशुकमलङ्घयत् ॥ ५३ ॥

**प्रका**— स इति ॥ निर्विश्येत्युत्तरश्लोके संबन्धः । यथाकामं सैनिकविश्रमापेक्षानुरूपमित्यर्थः । अत्रोत्प्रेक्षायां तटालीनचन्दनत्वमुक्तं प्रतीयमानं तुङ्गत्वञ्च सामान्यं हेतुः । फलञ्च तस्यां दिशि तयोस्सारत्वप्रतीतिः । योषिदङ्गेषु स्तनयोर्मुख्यत्वात् ॥ असह्येति । असह्यविक्रमत्वं सह्यदुर्गाश्रयिभिरप्यवरुद्धस्य सतो लङ्घने हेतुः । उदन्वता दूरमुक्तत्वं तु सह्योदन्वदन्तराळे जनपदप्राचुर्यद्योतनाय । अत्रोदन्वदंशुकयोर्विप्रकृष्टतालक्षणो यो धर्मश्शब्दभेदेनोपात्तः, स सामान्यमायतत्वादिश्च प्रतीयमानम् । यथा — 'समुद्रवसना' इत्यत्र । सदृशोदन्वदंशुकसंबन्धात्प्रतीयमानाभोगत्वाच्च सह्यनितम्बयोस्सादृश्यप्रतीतिः । तत एव चोत्प्रेक्षा । तस्याश्च फलं तल्लङ्घने मेदिन्या भुक्तप्रायत्वप्रतीतिः ॥

**पदा**— स इति ॥ द्वाभ्यां सन्दानितकम् । सः मलयदर्दुरौ शैलौ यथाकामं निर्विश्य सह्यम् अलङ्घयत् । यथाकामं सैनिकोपभोगानुरूपम् । निर्विश्य अनुभूय । सह्यं लङ्घितवान् । मलयदर्दुरौ शैलावुत्प्रेक्षते — तस्याः दिशः स्तनाविवेति । साधारणं धर्ममाह — तटेष्वालीनचन्दनाविति । आलीनं सक्तं चन्दनं यत्र । प्रतीयमानमौन्नत्यमप्युत्प्रेक्षाहेतुत्वेन द्रष्टव्यम् । तस्यां दिशि तयोः शैलयोस्सारत्वप्रतीतिः फलम् । स्त्रीशरीरे हि स्तनौ मुख्यौ । सह्यं विशिनष्टि — उदन्वता दूरान्मुक्तमिति । समुद्रेण दूरतो मुक्तम् । परशुरामप्रभावादिति शेषः । तादृशं सह्यमुत्प्रेक्षते — मेदिन्याः स्रस्तांशुकं नितम्बमिवेति । समुद्रवसना हि मेदिनी । स्रस्तं गळितम् अंशुकं वसनं यस्मात् । सह्यलङ्घने मेदिन्या भुक्तप्रायत्वप्रतीतिरुत्प्रेक्षाफलम् । असह्यविक्रमः सह्यदुर्गाश्रयैरपि अविषह्यपराक्रमः ॥

तस्यानीकैर्विसर्पद्भिरपरान्तजयोद्यतैः ।
रामास्त्रोत्सारितोऽप्यासीत्सह्यलग्न इवार्णवः ॥ ५४ ॥

**प्रका**— इतः प्रभृति प्रतीचीविजयः—**तस्येति** ॥ अपरान्ताः पाश्चात्या जनपदाः । 'अपरान्तास्तु पाश्चात्यास्ते च सूर्पारकादयः' इति यादवः । तेषां जये उद्यतैरित्यनेन वर्ण्यमानगमनस्य केरळदेशस्य सुजयत्वं द्योत्यते । अत्र महत्त्वसादृश्यहेतुकयार्णवस्य सह्यलग्नत्वोत्प्रेक्षया सैन्यस्य युगपदखिलदेशाक्रमणाविच्छिन्नत्वाप्रतिवार्यत्वादि ध्वन्यते ॥

**पदा**—तस्येति ॥ अपरान्तजयोद्यतैः विसर्पद्भिः तस्य अनीकैः अर्णवः सह्यलग्नः आसीत् इव । अपरान्तानां पाश्चात्यानां जनपदानां जये उद्यतैः । 'अपरान्तास्तु पाश्चात्यास्ते च सूर्पारकादयः' इति यादवः । पाश्चात्यजय एव तेषामुद्योगः । केरळानां ब्राह्मणदेशत्वात् तत्रत्यानां राज्ञां ब्राह्मणरक्षामात्रपरत्वात् तेषां जयेषु साक्षादनुद्योग इति द्रष्टव्यम् । विसर्पद्भिः समुद्रतीरमारभ्य सह्यपर्यन्तं व्याप्नुवद्भिः । इदमुत्प्रेक्षाहेतुः । महत्त्वमनिवार्यत्वं महाघोषवत्त्वमित्यादयश्चानया ध्वन्यन्ते । अनीकैरिति हेतौ तृतीया । रामास्त्रोत्सारितः अपि परशुरामास्त्रेण दूरनिरस्तः अपि सह्यलग्नः आसीदित्येवेत्यर्थः ॥

मुरचीमारुतोद्धूतमगमत्कैतकं रजः ।
तद्योधवारवाणानामयत्नपटवासताम् ॥ ५५ ॥

**प्रका**—मुरचीति ॥ मुरची केरळदेशेषु काचिन्नदी । वारवाणः कञ्चुकः । पटवासो गन्धसंस्कारचूर्णम् । अत्र देशस्वभावोक्त्या सरिन्मारुतादयोऽपि तत्सैनिकानुकूलाचरणप्रवृत्ता इति तस्य महानुभावता द्योत्यते ॥

**पदा**—मुरचीति ॥ मुरचीमारुतोद्धूतं कैतकं रजः तद्योधवारवाणानाम् अयत्नपटवासताम् अगमत् । मुरची नाम केरळदेशेषु दक्षिणस्यां दिशि काचिन्नदी । तत्रत्येन मरुता उद्धूत मुत्क्षिप्तम् । वारवाणः कञ्चुकः । 'कञ्चुको वारवाणोऽस्त्री' इत्यमरः । पटवासो गन्धसंस्कारचूर्णम् । केतकपुष्परेणुरेव यत्नेन विना गन्धसंस्कारचूर्णतामगमदित्यर्थः । केरळदेशेषु धर्मप्रधानत्वात् पञ्चभूतानामपि तत्प्रवणत्वं जातमिति ध्वन्यते ॥

अभ्यभूयत वाहानां चरतां गात्रशिञ्जितैः ।
मर्मरः पवनोद्धूतराजतालीवनध्वनिः ॥ ५६ ॥

1 ला ।

**प्रका**—**अभ्यभूयतेति** ॥ चरतां गच्छताम् । गात्रशिञ्जितैः शिञ्जितध्वनिमित्त्वेन गात्रस्यायानवत्त्वं लभ्यते । मर्मर इति । 'मर्मरस्तु पुमान् वस्त्रपर्णयोः स्वनिते' इति केशवः । अत्र केचित् पौनरुक्त्यमाशङ्क्य वर्मभिरिति पाठमाद्रियन्ते । वर्माणि कवचानि । अत्र पाठे गात्रेषु शिञ्जितैरिति वर्मविशेषणम् । शिञ्जितशब्दः कर्तरि द्रष्टव्यः । यथा—'श्लथशिञ्जितमेखलाः' इति । राजताली तालीभेदः । अत्र निरर्गळस्य राजतालीवनध्वनेरप्यननुभूतपूर्वोऽभिभवो जात इति तस्मिन्नुपस्थिते तथाविधानां सह्यदुर्गापाश्रयाणां जनपदानामपि तादृगभिभवो युज्यत इति ध्वन्यते ॥

**पदा**—**अभ्यभूयतेति** ॥ चरतां वाहानां गात्रशिञ्जितैः पवनोद्धूतराजतालीवनध्वनिः अभ्यभूयत । चरतां गच्छताम् । गात्राणां शिञ्जितैः गात्रगतानां घण्टादीनां शिञ्जितैश्शब्दैः । 'मञ्चाः क्रोशन्ति' इत्यादिवद्द्रष्टव्यः । राजताली तालीविशेषः । अभ्यभूयत अभिभूतोऽभूत् । केरळेषु नान्यस्य कस्यचिदभिभवो जात इति भावः । राजतालीवनध्वनिं विशिनष्टि—मर्मर इति । वस्त्रपर्णानां ध्वनेरनुकरणशब्दोऽयम् । 'अथ मर्मरः स्वनिते वस्त्रपर्णानाम्' इति सिंहः । मर्मरध्वनियुक्तः । 'वर्मभिः' इति पाठे गात्रेषु शिञ्जितैश्शब्दायमानैः कवचैरित्यर्थः । शिञ्जितशब्दः कर्तर्यपि प्रयुज्यते । यथा—'श्लथशिञ्जितमेखलाः' इति ॥

**[1]अवकाशं किलोदन्वान् रामायाभ्यर्थितो ददौ ।**
**अपरान्तमहीपालव्याजेन रघवे करम् ॥ ५७ ॥**

**प्रका**—**अवकाशमिति** ॥ किलशब्दो वार्तायाम् । अत्र प्रकृतं करादानं व्यतिरेकभङ्ग्या दर्शितवान् । व्यतिरेकश्च रामाद्रघोः अभ्यर्थनाबलात्काराभ्याम् । 'उपमानाद्यदन्यस्य व्यतिरेकः स एव सः' इति व्यतिरेकः । व्याजशब्दोपात्ता चापह्नुतिरत्रानुग्राहिका । उदन्वदपरान्तमहीपालयोरभेदसिद्धौ व्यतिरेकसिद्धेः । तच्च जेन समुद्रो दत्तवानिति करस्य प्रभूत्यादिर्ध्वन्यते ॥

**पद**—अपरान्तजयमेवाह—**अवकाशमिति** ॥ उदन्वान् अभ्यर्थितः किल रामाय अवकाशं ददौ । अपरान्तमहीपालव्याजेन रघवे करम् ।

---

1 इतः पूर्वम्, खर्जूरीस्कन्धनद्धानां मदोद्गारसुगन्धिषु । कटेषु करिणां पेतुः पुंनागेभ्यः शिलीमुखाः । इति श्लोकोऽपि दृश्यते मल्लिनाथपाठे ।

किलशब्दः पुराणप्रसिद्धिमाह । रामाय परशुरामाय । अवकाशं केरळनिर्माणप्रदेशम् । रघवे तु करं ददौ । न हि करादानमभ्यर्थनया, किन्तु बलात्कारेणैव इति रामात् रघोर्व्यतिरेकः । व्याजशब्दोपादानादपह्नुतिश्च । सा च व्यतिरेकस्यानुग्राहिका । उदन्वदपरान्तयोरभेदसिद्धिमूलत्वाद्व्यतिरेकस्य इति तयोः सङ्करः ॥

महेभरदनोत्कीर्णव्यक्तविक्रमलक्षणम् ।
त्रिकूटमेव तत्रोच्चैर्जयस्तम्भं चकार सः ॥ ५८ ॥

प्रका—महेभेति ॥ उत्कीर्णमुत्किरणम् । भावे निष्ठा । तदेव व्यक्तविक्रमलक्षणं यत्र । उच्चैरिति त्रिकूटविशेषणम् । त्रिकूटमेवेति । अन्यापेक्षा नासीदिति भावः । सेनागजरदनोत्कीर्णस्त्रिकूट एव तस्य जयस्तम्भोऽभवदित्यर्थः ॥

पदा—महेभेति ॥ सः तत्र त्रिकूटम् एव जयस्तम्भं चकार । तत्रापरान्तविषये । प्रशस्तिवर्णरचनायामपि नान्यापेक्षा जातेत्याह—महेभरदनोत्कीर्णव्यक्तविक्रमलक्षणमिति । महेभानां रदनैर्दन्तैः यदुत्कीर्णमुत्किरणम् । भावे निष्ठा । तदेवाभिव्यक्तं पराक्रमचिह्नं यत्र । उच्चैरिति त्रिकूटविशेषणम् । उन्नतमित्यर्थः । अनेन जयस्तंभकरणयोग्यतोक्ता ॥

पारसीकास्ततो जेतुं प्रतस्थे स्थलवर्त्मना ।
इन्द्रियाख्यानिव रिपूंस्तत्त्वज्ञानेन संयमी ॥ ५९ ॥

प्रका—पारसीकानिति ॥ पारसीका यवनाः । स्थलवर्त्मनेति अपरान्तानां जलपथेन प्रत्यासन्नो यद्यपि पारसीकदेशः, तथापि समुद्रलङ्घननिषेधदर्शी रघुर्जलयात्रां मुक्त्वा अतिदवीयसापि स्थलवर्त्मना प्रतस्थे इति भावः । अत्र लिङ्गं तत्त्वज्ञानेनेत्युपमानेऽपि मार्गशुद्धिकथनम् । संयमिना हीन्द्रियजये तत्त्वज्ञानमेव निरपायोपायत्वेनाङ्गीक्रियते, न तु विजिगीषुणेव सम्भवदपायोनुचितविषयप्रवृत्तकामादिपरित्यागः ॥

पदा—पारसीकानिति ॥ ततः सः पारसीकान् जेतुं स्थलवर्त्मना प्रतस्थे । पारसीका यवनाः । यद्यपि यवनदेशस्तत्रत्यजलमार्गेण प्रयाणे

प्रत्यासन्नः, तथापि रघुस्समुद्रयानस्य प्रतिषिद्धत्वाद्दूरतरमपि निर्दोषमेव मार्गमङ्गीकृत्य प्रस्थितवानित्यर्थः। अत एव संयमिनां मार्गो दृष्टान्तत्वेनोक्तः इति पूर्वव्याख्यातॄणां मतम्। वयं तु, जयद्वयेऽपि प्रकृतस्य मार्गस्य सुगमत्वेन मार्गान्तरस्य दुर्गमत्वेनापातसिद्धौ सुगमत्वप्रतीत्या च परस्परसादृश्यं तयोरुपमानोपमेयभावे हेतुरिति ब्रूमः। तत्र पारसीकजये तावत् सेतुं बध्वा समुद्रतरणं नारायणावतारभूताद्रामादन्यैरसाध्यम्। नापि कळमायमिव द्विरदसेतुबन्धनमगाधे समुद्रे संभवति। नौकानिर्माणे तु कियत्यो नौका निर्मीयन्ते, ताभिश्च कियन्तो रथतुरगादयो नीयन्ते इति दूरत्वेऽपि स्थलवर्त्मैव सुगमः। इत्थमेवेन्द्रियजयेऽपि प्रकृत एव मार्गस्सुगमः। ननु, भोगेन विषयेच्छाया उपरमे सतीन्द्रियाणि स्वयमेव विषयेभ्यो निवर्तन्ते। मैवम्, भोगस्य तादात्विकेच्छानिवृत्तिकरत्वेऽपि परमार्थतोऽभिलाषवर्धनकरत्वात्। यथाहुः—'न जातु कामः कामानामुपभोगेन शाम्यति। हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते' इति। नाप्युपेक्षया विषयेच्छानिवृत्तिः। तस्यास्सुतरामभिलाषवर्धनकत्वात्। नह्युपवासे कृते बुभुक्षा क्षीयते। किन्तु वर्धत एव। तस्मात्तद्विषयगतक्षुद्रत्वक्षयिष्णुत्वादितत्त्वज्ञानेनैव विषयनिवृत्तिः। तथैवेन्द्रियविजयः कालक्रमेण सुकरश्च। तथैव बहुभिर्दिवसैः पारसीकदेशप्राप्तिरपीति भाव इत्यलमनेन। प्रकृतमनुसरामः। संयमी इन्द्रियाख्यान् रिपून् तत्त्वज्ञानेन इव। संयमी योगी। इन्द्रियमित्याख्या येषाम्। जेतुमित्यनुषज्यते॥

यवनीमुखपद्मानां सेहे मधुमदं न सः।
बालातपमिवाब्जानामकालजलदोदयः ॥ ६० ॥

**प्रका— यवनीति॥** मधुमदमिति मदेन तत्कार्यभूतो रागो लक्ष्यते। अत एव बालातपोपमितिः। अकालो वर्षाव्यतिरिक्तकालः। वर्षासु पद्मानामसंभवात् अकालेत्युपात्तम्। पर्यायोक्तश्चालङ्कारः। 'पर्यायोक्तं विना वाच्यवाचकत्वे वचस्तु यत्' इति। अत्र वाच्यवाचकभावविविक्तेनावगमनव्यापारेण यवन्यस्तद्भयान्मधुपानमत्यजन्निति प्रतिपादितम्। अनेन चोपमानुगृह्यते। पर्यायोक्तभङ्ग्या ह्युपमेयस्वरूपलाभः। अकालेत्यनेनातिदवीयस्त्वात्तद्दर्शनात्तदागमनं प्रत्यसम्भावना द्योत्यते॥

**पदा—यवनीति॥** सः यवनीमुखपद्मानां मधुमदं न सेहे। पद्ममिव मुखं मुखपद्मम्। 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' इति समासः।

मदशब्देन मदकार्यभूतो रागो लक्ष्यते। अन्यथा बालातपोपमानानुपपत्तेः। मधुजनितं मुखरागं न सोढवान्। अकालजलदोदयः अब्जानां बालातपमिव। वर्षासु पद्माभावात् अकालपदप्रयोगः। यवनदेशानामतिदूरत्वाद्राज्ञस्तत्रागमनं प्रति तद्देश्यानामसम्भावना च द्योत्यते। अत्र यवनीनां तद्भयान्मधुपानं न जातमिति वाच्योऽर्थः। स तु नोक्तः। किन्तु वाक्यभङ्ग्या लभ्यत इति पर्यायोक्तमलङ्कारः। 'पर्यायोक्तं विना वाच्यवाचकत्वे वचस्तु यत्' इति। तेन चोपमानुगृह्यते। पर्यायोक्तभङ्ग्या मधुपानपरित्यागप्रतिपत्तावुपमेयलाभात् इति तयोस्सङ्करः॥

सङ्ग्रामस्तुमुलस्तस्य पाश्चात्यैरश्वसाधनैः।
शार्ङ्गकूजितविज्ञेयप्रतियोधे रजस्यभूत् ॥ ६१ ॥

प्रका—सङ्ग्राम इति॥ तुमुलो व्याकुलः। 'तुमुलं तु क्ली व्यामिश्रसमरेऽथ ना। स्वरे स्याद्व्याकुलेऽस्त्री तु वैजयन्त्यामभाषत।' इति केशवस्वामिना पक्षद्वयमुक्तम्। तत्र वैजयन्तीपक्षोऽत्र सङ्गतः पुलिङ्गश्रुतेः। पाश्चात्यैरिति गजबलराहित्यं द्योत्यते। गजानां प्रायः प्राच्यत्वात्। अत एवोक्तम्—अश्वसाधनैरिति। अश्वोत्पत्तिभूमिषु च पारसीका विशिष्टाः। शार्ङ्गं शृङ्गमयं धनुः। 'द्वे तु पक्ष्यन्तरे शार्ङ्गं पुनर्धनुषि शार्ङ्गिणः। अजयः शृङ्गविहितचापेऽप्याह विशेषतः॥ धनुर्मात्रे ननु' इति केशवः। शार्ङ्गाख्यपक्षिकूजितं वा। यवना हि तद्वत्कूजन्तीत्युपदेशः॥

पद—सङ्ग्राम इति॥ तस्य रजसि पाश्चात्यैः तुमुलः सङ्ग्रामः अभूत्। तुमुलो व्याकुलः। 'तुमुलं तु क्ली व्यामिश्रसमरेऽथ ना। स्वरे स्याद्व्याकुलेऽस्त्री तु वैजयन्त्यामभाषत॥' इति केशवः। रजसा परस्परदर्शनाभावात् संग्रामस्य व्याकुलत्वम्। अश्वा एव साधनं युद्धसाधनं येषाम्। अनेन तेषां गजाभावो द्योत्यते। प्राच्यामेव गजवनसद्भावात्। शार्ङ्गाः शृङ्गमयाश्चापाः। 'द्वे तु पक्ष्यन्तरे शार्ङ्गं पुनर्धनुषि शार्ङ्गिणः। अजयश्शृङ्गविहिते चापेऽप्याह विशेषतः॥ धनुर्मात्रे ननु' इति केशवः। तेषां कूजितेन शब्देन विज्ञेयाः प्रतियोधाः प्रतिभटा यत्र। यवनाः शृङ्गमयचपधारिणः इति प्रसिद्धिः। रघोस्तु तत्रापि प्रतियोधमात्रज्ञातेति भावः॥

भल्लापवर्जितैस्तेषां शिरोभिः श्मश्रुलैर्महीम् ।
तस्तार सरघाव्याप्तैः सक्षौद्रपटलैरिव ॥ ६२ ॥

**प्रका**—भल्लेति ॥ भल्लः स्नुहिपत्त्राकारः शरः । 'स्नुहीदलफलो भल्लः' इति यादवः । स च शिरःकर्तनानुकूलः । अत एवापवर्जनमुक्तम् । तच्चायत्नच्छेदनाम् । यथाह भारविः—'इमान्यमूनीत्यपवर्जिते शनैः' इति । श्मश्रुलैः बहुलश्मश्रुभिः । अनेन 'बीभत्साच्च भयानकः' इति भयानको वीराङ्गतामुपगतोऽत्र प्रतीयते । शिरोमुण्डनेप्यकल्पश्मश्रवो वदना इति देशाचारोऽत्र दर्शितः । सरघाव्याप्तैरिति पाठः । 'सरघा मधुमक्षिका' इति सिंहः । क्षौद्रस्य पटलैः समूहैः मधुगोळैरित्यर्थः ॥

**पदा**—तत्फलमाह—भल्लेति ॥ सः भल्लापवर्जितैः तेषां शिरोभिः महीं तस्तार । भल्लः स्नुहीपत्राकारः शरः । 'स्नुही पत्रफलो भल्लो विपाठोऽल्पस्तदाकृतिः' इति यादवः । शिरःकर्तनानुकूलत्वात् तदुपादानम् । तैरपवर्जितैः छिन्नैः । तस्तार । 'स्तॄ छादने' इति धातुः । श्मश्रुलैः बहुलश्मश्रुभिः । यवना हि शिरोमुण्डनेऽपि श्मश्रुवपनं न कुर्वन्ति । सरघाव्याप्तैः क्षौद्रपटलैरिवेत्युत्प्रेक्षा । 'सरघा मधुमक्षिका' इत्यमरः । क्षौद्राणां मधुगोळानां पटलैः समूहैरिव ॥

अपनीतशिरस्त्राणाः शेषास्तं शरणं ययुः ।
प्रणिपातप्रतीकारः संरम्भो हि महात्मनाम् ॥ ६३ ॥

**प्रका**—अपनीतेति ॥ शिरस्त्राणापनयनं निरुद्यमत्वचिह्नम् । एतदेव मुक्तकेशत्वम् । 'यत्र वीरा न प्रहरन्ति' इति महाभारतादिप्रसिद्धिः ॥

**पदा**—अपनीतेति ॥ शेषाः अपनीतशिरस्त्राणाः तं शरणं ययुः । शिरस्त्राणापनयनं निरुद्यमत्वद्योतकम् । तदेव मुक्तकेशत्वं च । न हि मुक्तकेशेषु वीराः प्रहरन्ति । तदुक्तं श्रीभागवते— 'मुक्तकक्ष्यशिखाः केचिद्भीताः स्म इति वादिनः' इत्यादि । महात्मनां संरम्भः प्रणिपातप्रतीकारः हि । संरम्भः क्रोधः । प्रणिपातः प्रणमनमेव प्रतीकारः प्रतिक्रिया यस्य ॥

विनयन्ते स्म तद्योधा मधुभिर्विजयश्रमम् ।
आस्तीर्णाजिनरत्नासु द्राक्षावलयभूमिषु ॥ ६४ ॥

प्रका—विनयन्त इति ॥ 'कर्तृस्थे चाशरीरे कर्मणि' इत्यात्मनेपदम्। मधुभिरित्यौचित्याद्द्राक्षानिर्मितैः। अजिनरत्नानि कदळीकन्दळीप्रियकादिमृगयोनीनि महार्घाणि चर्माणि। तानि च हैमवतानि तद्देशसुलभानि। द्राक्षावलयभूमिषु द्राक्षालतामण्डपेषु। वलयाकारा लता वलयः॥

पदा—विनयन्त इति ॥ तद्योधाः द्राक्षावलयभूमिषु मधुभिः विजयश्रमं विनयन्ते स्म। द्राक्षावलयभूमिषु द्राक्षालतामण्डपेष्वित्यर्थः। 'मृद्वीका गोस्तनी द्राक्षा स्वाद्वी मधुरसेति च' इत्यमरः। मधुभिः द्राक्षामद्यैरित्यर्थः। विनयन्ते स्म अपनीतवन्तः। 'कर्तृस्थे चाशरीरे कर्मणि' इत्यात्मनेपदम्। आस्तीर्णान्यजिनरत्नानि अजिनश्रेष्ठानि यासु। 'रत्नं स्वजातिश्रेष्ठेऽपि' इत्यमरः॥

ततः प्रतस्थे कौबेरीं भास्वानिव रघुर्दिशम्।
शरैरुस्रैरिवोदीच्यानुद्धरिष्यन् रसानिव ॥ ६५ ॥

प्रका—अथोदीचीविजयोपक्रममाह—तत इति ॥ उद्धरिष्यन् आदास्यन्। उत्तरायणमादानकाल इति प्रसिद्धिः। उदीच्यानामादानमर्थाद्धनादानम्॥

पदा—तत इति ॥ ततः रघुः कौबेरीं दिशं प्रतस्थे। कुबेरो वैश्रवणः तत्संबन्धिनीम् उदीचीदिशमित्यर्थः। भास्वानिवेत्युपमा। उस्रैः इव शरैः रसान् इव उदीच्यान् उद्धरिष्यन्। उस्रैः रश्मिभिः। रसान् जलानि। उत्तरायणं हि रवेरादानकालः। उदीच्यानामुद्धरणम् अर्थादर्थानाम्।

विनीताध्वश्रमास्तस्य[1] सिन्धुतीरविवेष्टनैः[2]।
दुधुवुर्वाजिनः स्कन्धाँल्लग्नकुङ्कुमकेसरान् ॥ ६६ ॥

प्रका—विनीतेति ॥ सिन्धुः काश्मीरेषु काचिन्नदी। विवेष्टनं श्रमहरमश्वानाम्। तच्च सिकतिलप्रदेशेषु प्रायस्ते कुर्वन्ति। लग्नकुङ्कुमकेसरानिति। अनेन काश्मीराक्रमणमुक्तम्। काश्मीरेषु हि कुङ्कुमजन्म।

1 श्र। 2 चे।

यथाह विल्हण: — "सहोदरा: कुङ्कुमकेसराणां भवन्ति नूनं कवितविलासा:। न शारदादेशमपास्य येषां दृष्टो यदन्यत्र मया प्ररोह: ॥" इति ॥

पदा — विनीतेति ॥ तस्य वाजिन: सिन्धुतीरविवेष्टनै: विनीताध्वक्लमा: स्कन्धान् दुधुवु:। सिन्धु: काश्मीरदेशे काचिन्नदी। तस्यास्तीरे यानि विवेष्टनानि तैरपनीतमार्गखेदा:। पीडिता ह्यश्वा: सिकतिलेषु प्रदेशेषु लुठन्त: पीडामपनयन्ति। पुनश्च सिकतापनयनार्थं स्कन्धं च धून्वति इति स्वभावोक्ति:। लग्नानि कुङ्कुमकेसराणि कुङ्कुमपुष्पकेसराणि येषु। लग्नकुङ्कुमानि केसराणि स्कन्धरोमाणि येषु इति वा। काश्मीरदेशे कुङ्कुमोत्पत्तिरिति प्रसिद्धि: ॥

तत्र हूणावरोधानां भर्तृषु व्यक्तविक्रमम्।
कपोलपाटलादेशि बभूव रघुचेष्टितम् ॥ ६७ ॥

प्रका — तत्रेति ॥ 'अवरोधशब्देन तद्योषितो लक्ष्यन्ते' इत्युक्तं प्राक्। व्यक्तविक्रमं स्फुटशक्तिसंपत्ति। 'अथ क्रान्तौ च विक्रम:। तथैव शक्तिसंपत्तौ' इति केशव:। कपोलेति। कपोलस्य पाटलवर्णमादेष्टुं प्रयोजयितुं शीलमस्येति। हूणयोधेष्वस्तमुपानीतेषु स्फुटीकृतशक्ति रघोराचरितं तद्योषितामनवरताश्रुपातजनितं पाटलवर्णं कपोले न्यस्तवदित्यर्थ:। हूणीनां च प्रसिद्धं स्वाभाविकं कपोलस्य गौरत्वमपनीय तत्स्थाने पाटलत्वं न्यस्तमिति परिवृत्ति: आदेशीति शब्दशक्त्या ध्वन्यते। निहतभर्तृकाणामत एव दयापात्रभूतानां तासां कपोलेषु दूरीभूतचुम्बनरागेषु प्रकारान्तरेण पाटलत्वं दयालुनेव रघुचेष्टितेन संपादितमित्युत्प्रेक्षाध्वनि: ॥

पदा — तत्रेति ॥ रघुचेष्टितं तत्र हूणावरोधानां कपोलपाटलादेशि बभूव। हूणा: काश्मीरदेशाधिपतय: तेषामवरोधानामन्त:पुरस्त्रीणां कपोलस्य पाटलं पाटलवर्णमादेष्टुं प्रयोजयितुं शीलमस्येति तथा। कपोलपाटलादेशप्रकारमाह — भर्तृषु व्यक्तविक्रममिति। हूणस्त्रीणां भर्तृषु व्यक्तो विक्रम: पराक्रमो यस्य। भर्तृषु निहतेषु सन्ततगलिताभिरश्रुधाराभि: स्वत: श्वेतं कपोलस्थलं रक्तमभूदित्यर्थ:। अत्र श्वेतत्वमपहाय तत्स्थाने पाटलत्वं न्यस्तमिति परिवृत्तिर्ध्वन्यते।

काम्बोजाः समरे सोढुं तस्य वीर्यमनीश्वराः ।
गजालानपरिक्लिष्टैरक्षोलैः सार्धमानताः ॥ ६८ ॥

प्रका—काम्बोजा इति ॥ गजानामाळानं बन्धनम् । 'आळानं बन्धस्तम्भे च बन्धने' इति सिंहः । तेन परिक्लिष्टैर्मृदितैः । अक्षोलास्तद्देशप्रचुराः । सार्धमिति सहोक्तिः ॥

पदा—काम्बोजा इति ॥ काम्बोजाः समरे तस्य वीर्यं सोढुम् अनीश्वराः गजाळानपरिक्लिष्टैः अक्षोलैः सार्धम् आनताः । काम्बोजास्तदनन्तराधिपतयः । अनीश्वरा अशक्ताः । गजानामाळानेन बन्धनेन परिक्लिष्टैर्मृदितैः । अळानं बन्धनम् । 'आळानं बन्धस्तम्भे च बन्धने' इति सिंहः । अक्षोलास्तद्देशसुलभा वृक्षविशेषाः । तैः सार्धमानताः प्रणताः इति सहोक्तिः ॥

तेषां सदश्वभूयिष्ठास्तुङ्गद्रविणराशयः ।
उपदा विविशुः शश्वन्नोत्सेकः कोसलेश्वरम् ॥ ६९ ॥

प्रका—तेषामिति ॥ उपदा उपायनानि । शश्वदाभीक्ष्ण्येन । उत्सेको गर्वः । भुजबलार्जितविभूतिदर्शनसम्भवी गर्वस्तस्य महाधीरत्वात् दृष्टपरावरत्वाच्च नासीदित्यर्थः । विशेषोक्तिश्चात्र । 'विशेषोक्तिरखण्डेषु कारणेषु फलावचः' इति । अत्र कारणे समग्रेऽपि कार्यानुदयः स्फुट एव ॥

पदा—तेषामिति ॥ तेषाम् उपदाः शश्वत् कोसलेश्वरं विविशुः । उपदा उपायनानि । शश्वदाभीक्ष्ण्येन । पुनः पुनर्विविशुरित्यर्थः । तत्प्रसादपर्यन्तमिति यावत् । उत्सेकः न विवेश इति वचनपरिणामेनानुषज्यते । उत्सेको गर्वः । तुङ्गा द्रविणराशयो धनसमूहा यासु । तेषामुत्सेको धनं च विनष्टम् । तत्र तत्त दृशधनदर्शनसंभवो मदस्तु दृष्टपरावरं तं न प्रापदित्यर्थः । विशेषोक्तिरलङ्कारः । कारणपौष्कल्ये कार्यानुत्पत्तेरुक्तत्वात् । 'विशेषोक्तिरखण्डेषु कारणेषु फलावचः' इति ॥

ततो गौरीगुरुं शैलमारुरोहाश्वसाधनः ।
वर्धयन्निव तत्कूटानुद्धूतैर्धातुरेणुभिः ॥ ७० ॥



1 क्षोटे ।

**प्रका—तत इति ॥** अश्वसाधनः अश्वप्रायबल इत्यर्थः । नत्वश्वैकबलः। पत्तीनां किं पुनर्न्यायसिद्धत्वात्। गजरथयोस्त्वभूमित्वादल्पत्वं बोद्धव्यम्। 'गजवर्ष्म किरातेभ्यः' इति वक्ष्यति च। अत्र वर्धनोत्प्रेक्षायां कूटरेणुपुञ्जयोस्तुल्यरूपतया कूटोर्ध्वावधेरनुपलक्षणं हेतुः। गगनाच्छादकत्वं च फलं प्रतीयते॥

**पदा—तत इति ॥** ततः सः गौरीगुरुं शैलम् आरुरोह। गौरीगुरुर्हिमवान्। अश्वसाधनः अश्वप्रायबल इत्यर्थः। उद्धूतैः धातुरेणुभिः तत्कूटान् वर्धयन् इव। तुरगखुरोद्धूतानां धातुपरागाणां निबिडतया गगनव्याप्तत्वात् तस्य शृङ्गाणामेवाधिकतरमौन्नत्यं जातमिति मतिं जनयन्नित्यर्थः। अत्रोत्प्रेक्षा॥

शशंस तुल्यसत्त्वानां सैन्यघोषेऽप्यसंभ्रमम्।
गुहाशयानां सिंहानां परिवृत्त्यावलोकितम् ॥ ७१ ॥

**प्रका—शशंसेति ॥** शंसनं प्रशंसनम्। यथा—'शस्तम्' इति। तुल्यसत्त्वानामात्मना तुल्यधैर्याणाम्। असंभ्रमं संभ्रमरहितम्। तादृशं सैन्यघोषमाकर्ण्यापि अस्खलितधैर्याणां पराक्रमशालित्वाद्विश्वमपि तृणाय मन्यमानानाम्। अत एव संभ्रमाभावाद् गुहाशयितानामेव यद्वलितग्रीवं वीक्षणं तत्तुल्यशीलतया तद्विशेषाभिज्ञो रघुः प्रशशंसेत्यर्थः॥

**पदा—शशंसेति ॥** सः गुहाशयानां सिंहानां परिवृत्त्या अवलोकितं शशंस। सकलमपि सैनिकजनं तृणाय मत्वा गुहायामेव शयनं कुर्वतां सिंहानां किञ्चित्कण्ठं परिवृत्त्य यदवलोकनं तद्रघुः प्रशंसितवान्। वीरस्वभावाभिज्ञत्वादिति शेषः। वीर एव हि वीरस्वभावं जानातीति भावः। अत एवाह—तुल्यसत्त्वानामिति। आत्मना तुल्यधैर्याणाम्। सैन्यघोषे अपि असंभ्रमं तादृशसैन्यघोषेऽपि संभ्रमरहितम्। अत्र स्वभावोक्तिः॥

भूर्जेषु मर्मरीभूताः कीचकध्वनिहेतवः।
गङ्गाशीकरिणो मार्गे मरुतस्तं सिषेविरे ॥ ७२ ॥

**प्रका—भूर्जेष्विति ॥** भूर्जा भुजपत्राः। 'भुजपत्रो भुजो भूर्जो मृदुत्वक्चर्मचर्मिकौ' इति यादवः। मर्मरीभूताः मर्मरः शुष्कपत्रध्वनिः।

तेन तद्वानिह लक्ष्यते। मर्मरध्वनिमन्तो जाता इत्यर्थः। वक्ष्यति च-- 'मर्मरैरगरुधूपगन्धिभिः' इति। गङ्गाशीकरिण इति गङ्गाप्रभवासन्नत्वं मार्गस्य दर्शितम्। सिषेविरे इत्यनुकूलत्वं द्योतितम्। यथा जानपदाः स्तुवन्तो वाद्यानि च वादयन्तः सोपायना राजानं यान्तमुपतिष्ठन्ते[1], तद्वद्विशिष्टा मरुतोऽपीति ध्वन्यते। तदर्थमेव च बहुवचनम् ॥

पदा--भूर्जेष्विति ॥ मरुतः मार्गे तं सिषेविरे। शैलाधिरोहण-श्रममपनयामासुरित्यर्थः। भूर्जेषु मर्मरीभूताः। 'भुजपत्रो भुजो भूर्जो मृदुत्वक्चर्मचर्मिकौ' इति यादवः। मर्मरः शुष्कपत्रध्वनिः। 'मर्मरः शुष्कपत्राणाम्' इति यादवः। तेन मर्मरध्वनिमानिह लक्ष्यते। अभूततद्भावे च्विः। मर्मरध्वनिमन्तो भवन्त इत्यर्थः। कीचकध्वनीनां हेतवः। गङ्गाजलधारिणः। यथा राजानं गच्छन्तं जानपदाः स्तुवन्तो वाद्यानि च वादयन्तः सोपायनास्सेवन्ते, तद्वदत्र मरुतोऽपीत्युपमाध्वनिः ॥

विशश्रमुर्नमेरूणां छायास्वध्यास्य सैनिकाः।
दृषदो वासितोत्सङ्गा निषण्णमृगनाभिभिः ॥ ७३ ॥

प्रका—विशश्रमुरिति ॥ एवंविधा दृषदोऽध्यास्य सैनिकाः छायासु विशश्रमुरित्यन्वयः। नमेरुस्सुरपुन्नागः। निषण्णानां मृगाणां नाभिभिः नाभिगन्धैरित्यर्थः। तथा च मेघसन्देशे— 'आसीनानां सुरभितशिलं नाभिगन्धैर्मृगाणाम्' इति। उत्सङ्ग इवोत्सङ्गः उपरिभागः ॥

पदा—विशश्रमुरिति ॥ सैनिकाः नमेरूणां छायासु दृषदः अध्यास्य विशश्रमुः। नमेरुः सुरपुन्नागः। 'अधिशीङ्स्थासां कर्म' इति दृषदां कर्मसंज्ञा। निषण्णमृगनाभिभिः वासितोत्सङ्गाः। निषण्णानां मृगाणां नाभिभिः नाभिगन्धैः। 'नाभिगन्धैर्मृगाणाम्' इति मेघसन्देशे च। वासिताः सुरभीकृताः उत्सङ्गा उपरिभागा यासाम्। उपभोगसाधनान्तराणामप्युपलक्षणमेतत् ॥

सरळासक्तमातङ्गग्रैवेयस्फुरितत्विषः।
आसन्नोषधयो नेतुर्नक्तमस्नेहदीपिकाः ॥ ७४ ॥

1 यान्तमिति क्वचिन्नास्ति।

**प्रका—सरळेति ॥** सरळासक्तानां मातङ्गानां ग्रैवेये कण्ठभूषणे स्फुरिता प्रतिफलिता त्विट् येषां ते तथा। 'ग्रैवेयं कण्ठभूषणम्' इति सिंहः। नेतुर्विजिगीषोः। ओषधयो रात्रावुज्वलिनो वृक्षाः। अस्नेहदीपिका इति रूपकविशेषः। मतान्तरे विशेषोक्तिः ॥

**पदा—सरळेति ॥** ओषधयः नक्तं नेतुः अस्नेहदीपिकाः आसन्। ओषधयो रात्रावुज्वला वृक्षविशेषाः। नक्तमिति रात्रिवाचकमव्ययं रात्रौ। नेतुर्विजिगीषोः। स्नेहेन तैलादिना रहिताः प्रदीपाः आसन्। रूपकविशेषश्चायम्। सरळेषु वृक्षविशेषेषु आसक्तानां बद्धानां मातङ्गानां गजानां ग्रैवेयेषु कण्ठभूषणेषु स्फुरिता प्रतिफलिता त्विट् प्रभा येषाम्। यथा दर्पणादिषु प्रतिफलितं तेजः सर्वत्र प्रसरति तथेति भावः ॥

तस्योत्सृष्टनिवासेषु कण्ठरज्जुक्षतत्वचः।
गजवर्ष्म किरातेभ्यः शशंसुर्देवदारवः ॥ ७५ ॥

**प्रका—तस्येति ॥** वर्ष्म प्रमाणम्। 'वर्ष्म न स्त्री शुभाकारे सौख्ये देहप्रमाणयोः' इति यादवः। अलब्धशिबिरप्रवेशानां पश्चादुच्चलिते शिबिरे कौतुकेन तं प्रदेशमालोकयतां वनेचराणामाळानितगजकण्ठरज्जुस्फुटितत्वचो देवदारवः इयदूर्ध्वप्रमाणं सेनागजानामिति कथितवन्त इवेत्यर्थः ॥

**पदा—तस्येति ॥** तस्य उत्सृष्टनिवासेषु देवदारवः किरातेभ्यः गजवर्ष्म शशंसुः। उत्सृष्टेषु परित्यक्तेषु तस्य निवासेषु वर्तमाना देवदारवः सेनाप्रवेशभयादुच्चलितेभ्यः तन्निर्गमने प्रविष्टेभ्यश्च किरातेभ्यः कुतूहलात्तत्प्रदेशावलोकनमये सेनागजानां वर्ष्म प्रमाणं कथयामासुः। 'वर्ष्म न स्त्री शुभाकारे सौख्ये देहप्रमाणयोः' इति यादवः। कथनप्रकारमाह--- कण्ठरज्जुक्षतत्वच इति। कण्ठे वर्तमानया रज्वा क्षता स्फुटिता त्वग्येषाम्। रघोः सेनागजा इयत्प्रमाणा इति क्षतेनैव कथयामासुरित्यर्थः ॥

तत्र जन्यं रघोर्घोरं पर्वतीयैर्गणैरभूत्।
नाराचक्षेपणीयाश्मनिष्पेषोत्पतितानलम् ॥ ७६ ॥

**प्रका—तत्रेति ॥** जन्यं युद्धम्। पर्वतीयैः पर्वतनिवासिभिः। 'पर्वताश्च' इति छः। गणैरिति उत्सवसङ्केताख्यैरासभिस्सङ्घैः। तथा महाभारते

—'गणानुत्सवसङ्केतानजयत्सप्त पाण्डवः'। इति। नाराचः कूर्चिकाकृतिस्सायकः। क्षेपणीयो भिण्डिपालः। 'भिण्डिपालः क्षेपणीयस्सृगो दीर्घो महाफलः' इति यादवः। भिण्डिपालः कुन्तएव पृथुफल इति भट्टस्वामी। अत्र पर्वतीयाः पाषाणयोधिन इति तत्प्रत्ययस्तया नाराचक्षेपणीययोरुपादानम्। अथवा —क्षेपणीयेत्यश्मविशेषणम्। यन्त्रक्षेपणीयाश्मनामित्यर्थः। इदञ्च घोरत्वे हेतुः॥

पदा—तत्रेति॥ रघोः तत्र पर्वतीयैः गणैः घोरं जन्यम् अभूत्। पर्वतीयैः पर्वतनिवासिभिः। 'पर्वताच्च' इति छः। गणैरुत्सवसङ्केताख्यैस्सप्तभिस्सङ्घैः। यथा महाभारते—'गणानुत्सवसङ्केतानजयत्सप्त पाण्डवः'। इति। जन्यं युद्धम्। 'युद्धमायोधनं जन्यम्' इत्यमरः। घोरत्वमेव स्फुटयति—नाराचेत्यादिना। नाराचश्शरविशेषः। क्षेपणीयो भिण्डिपालः। 'भिण्डिपालः क्षेपणीयः सृगो दीर्घो महाफलः' इति यादवः। स तु महान् कुन्तविशेष एवेति भट्टस्वामिना व्याख्यातम्। नाराचक्षेपणीयाभ्यां यदश्मनिष्पेषणं पाषाणचूर्णिकरणं तत्रोत्पतित उत्पन्नः अनलो यत्र। पाषाणप्रहारिणो हि पर्वतीयाः। न च तस्यान्येन चूर्णीकरणं संभवति। अथवा—क्षेपणीयेत्यश्मविशेणम्। यन्त्रक्षेपणीयानामश्मनां निष्पेष इत्यर्थः॥

शरैरुत्सवसङ्केतान् स कृत्वा विरतोत्सवान्।
जयोदाहरणं बाह्वोर्गापयामास किंनरैः[1] ॥ ७७ ॥

प्रका—शरैरिति॥ विरतोत्सवानित्यत्रोत्सवशब्दस्तन्त्रेण चतुरर्थः॥ 'अथोत्सवः। उत्सेकामर्षयोरिच्छाप्रसरे च महे तथा' इति केशवः। जयोदाहरणं जयविषयं वाक्यम्। जयगाथामित्यर्थः। वाक्यपर्यायश्चोदाहरणम्। यथा—'तुल्यानुरागपिशुनं ललितार्थबन्धं पत्रे निवेशितमुदाहरणं प्रियायाः' इति। जनोदाहरणमिति वा पाठः। 'यशो जनोदाहरणम्' इति यादवः। गापयामासेति। विरतोत्सवकिरणमेवात्र प्रयोजकव्यापारः, न त्वन्यः कश्चिदित्यवसेयम्। तस्य दिव्यत्वात्तद्देशौचित्याच्च किन्नरैरित्युक्तम्। तस्य विक्रमं दृष्ट्वा स्वयमेव किंनरास्तं जगुरित्यर्थः॥

---

1 रान्।

पदा--शरैरिति ।। सः उत्सवसङ्केतान् शरैः विरतोत्सवान् कृत्वा बाह्वोः जयोदाहरणं किंनरैः गापयामास । विरताः उत्सवाः उत्सेकादयो येषाम् । 'अथोत्सवः । उत्सेकामर्षयोरिच्छाप्रसरे च महे तथा ॥' इति केशवः । जयोदाहरणं विजयविषयं वाक्यम् । जयगाथामित्यर्थः । उदाहरणस्य वाक्यपर्यायत्वं च प्रसिद्धम् । यथा विक्रमोर्वशीये—'तुल्यानुरागपिशुनं ललितार्थबन्धं पत्रे निवेशितमुदाहरणं प्रियायाः' इति । विरतोत्सवीकरणमेव प्रयोजकस्य रघोर्व्यापारः । रघोर्वीर्यातिशयं दृष्ट्वा तद्देशसुलभाः किंनरास्तं जगुरित्यर्थः ॥

परस्परस्य[1] विज्ञातं[2] तेषूपायनपाणिषु ।
राज्ञा हिमवतः सारो राज्ञः सारो हिमाद्रिणा ॥ ७८ ॥

प्रका--परस्परस्येति ॥ इदं च विभक्तिप्रतिरूपकमव्ययमन्योन्यमित्यस्यार्थे । स चार्थः क्रियाव्यतिहारः । तेनात्र विज्ञानव्यतिहारो गम्यते । उपायनपाणिष्विति शूलपाणिवद्बहुव्रीहिः । सारो धनं बलं च । अत्र प्रथमार्धावधि सामान्यविषयमेकं वाक्यम् । ततः केन केन कस्य कस्य किं किमित्याकाङ्क्षायामाह—राज्ञेत्यादि । हिमाद्रिणेति तद्वर्निदिव्यादिव्यजनाभेदोपचारेणोक्तम् । तदधिदेवताभेदोपचारेण वा । अन्यथा, यस्य स्थावरस्य सतो हिमवतो धनवत्ता राज्ञा विज्ञाता, स कथं राज्ञो बलं विजानीयात् ॥

पदा- परस्परस्येति ॥ तेषु उपायनपाणिषु परस्परस्य विज्ञातम् । परस्परस्येति परस्परमित्येतस्मिन्नर्थे विभक्तिप्रतिरूपकमव्ययम् । उपायनपाणिष्विति वीणापाणिवत्समासः । पाणावुपायनं येषामिति विग्रहः । उत्सवसङ्केतेषुपायनपाणिषु सत्सु परस्परं विज्ञातमभूत् । केन वा विज्ञातं, किं वा विज्ञातमित्याकाङ्क्षायामाह— राज्ञा हिमवतः सारः हिमाद्रिणा राज्ञः सार इति । सारो धनं बलं च । हिमाचलस्थानां जनानां धनं राज्ञा विज्ञातम् तैश्च राज्ञो बलम् ॥

तत्राक्षोभ्यं यशोराशिं निवेश्यावरुरोह सः ।
पौलस्त्यतुलितस्याद्रेरादधान इव ह्रियम् ॥ ७९ ॥

---

1 रेण । 2 तः ।

**प्रका—तत्रेति ॥** अक्षोभ्यमचालनीयम् । अवरुरोह । तत इति शेषः । तुलितस्योद्धृतस्य । अत्र प्रतीयमानोच्छ्रायधावल्ययोर्यशोराशिकैलासयोरक्षोभ्यत्वतुलितत्वाभ्यां व्यतिरेकः, तद्धेतुका च ह्रियमादधान इवेत्युत्प्रेक्षा इति सङ्करः । उत्प्रेक्षायाश्च एतद्यशसोऽन्ययशोधनाहंकारप्रशमकत्वं व्यङ्ग्यम् ॥

**पदा—तत्रेति ॥** सः तत्र अक्षोभ्यं यशोराशिं निवेश्य अवरुरोह । अक्षोभ्यमचालनीयम् । अवरुरोह । तस्मादिति शेषः । पौलस्त्यतुलितस्य अद्रेः ह्रियम् आदधानः इव । पौलस्त्येन रावणेन तुलितस्य उद्धृतस्य । अद्रेः कैलासस्य । ह्रियमादधान इव । अत्र यशोराशेरौन्नत्यधावल्याभ्यां कैलाससाम्ये सत्यपि यशोराशेरक्षोभ्यत्वात्तुलितात्कैलासाद्व्यतिरेकः, तद्धेतुका चोत्प्रेक्षेति सङ्करः ॥

चकम्पे तीर्णलौहित्ये तस्मिन् प्राग्ज्योतिषेश्वरः ।
गजाळानतां प्राप्तैः सह कालागरुद्रुमैः ॥ ८० ॥

**प्रका—चकम्प इति ॥** तीर्णलोहित्ये लोहित्या नाम काचिन्नदी । यथा महाभारते—'लोहित्यां करतोयां च' इत्यादि । प्राग्ज्योतिषा इति कश्चिज्जनपदः । अत्र यादवः—'अथ प्राच्या जनपदास्तत्र मुद्गरकाः खजाः । प्राग्ज्योतिषाः कामरूपाः' इति । नरकासुरपुरमिति केचिद्व्याचक्षते । आळानं बन्धनस्तम्भः । काळागरुद्रुमैरिति तद्देशस्य तद्बाहुल्यादुक्तम् । सहोक्तिश्चालङ्कारः ॥

**पदा—चकम्प इति ॥** तस्मिन् तीर्णलोहित्ये प्राग्ज्योतिषेश्वरः तद्गजाळानतां प्राप्तैः काळागरुद्रुमैः सह चकम्पे । लोहित्या नाम काचिन्नदी । यथा महाभारते—"लोहित्यां करतोयां च तथैव दृढसज्जलाम् । कुमारीमृषिकन्यां च" इत्यादि । प्राग्ज्योतिषः प्राच्यो जनपदविशेषः । अत्र यादवः—"अथ प्राच्या जनपदास्तत्र मुद्गरकाः खजाः । प्राग्ज्योतिषाः कामरूपाः" इति । नरकासुरपुरं वा । "सभार्यो गरुडारूढः प्राग्ज्योतिषपुरं ययौ" इति श्रीभागवते । आळानं बन्धनस्तम्भः । लोहित्यां तीर्त्वा तद्देशसुलभेषु काळागरुवृक्षेषु गजेषु बद्धेषु तैः सह तद्राष्ट्राधिपतिः कम्पं प्रापदित्यर्थः । अत्र सहोक्तिरलङ्कारः ॥

न प्रसेहे स रुद्धार्कमधारावर्षि[1] दुर्दिनम् ।
रथवंश[2]रजोऽप्यस्य कुत एव पताकिनीम् ॥ ८१ ॥

प्रका—नेति ॥ प्रसेहे सोढुं शक्तोऽभूत् । रुद्धार्कमिति सामान्यम् । [3]धारावर्षि अविच्छेदेन वर्षितुं शीलमस्य । अधारावर्षीति पाठे रथवंशरजोदुर्दिनस्य मुख्यदुर्दिनाद्व्यतिरेकः । स आपात एव नम्रोऽभूदित्यर्थः ॥

पदा—नेति ॥ सः अस्य रथवंशरजः अपि न प्रसेहे । पताकिनीं कुतः एव । प्राग्ज्योतिषेश्वरो रघोस्स्यन्दनसमूहस्य रेणुमात्रमपि न प्रसेहे सोढुं शक्तोऽभूत् । पताकिनीं सेनाम् । कुत एव । किं पुनरित्यर्थः । अधारावर्षि दुर्दिनम् । धारामविच्छेदेन वर्षितुं शीलमस्येति धारावर्षि ततोऽन्यदिति दुर्दिनविशेषणम् । 'मेघच्छन्नेऽह्नि दुर्दिनम्, इत्यमरः । रूपकं चेदम् । रुद्धोऽर्कः सूर्यो येन इति साधारणो धर्मः । आगमनसमय एव प्रणतोऽभूदिति भावः ॥

तमीशः कामरूपाणामत्याखण्डलविक्रमम् ।
भेजे भिन्नकटैर्नागैरन्यानुपरुरोध यैः ॥ ८२ ॥

प्रका—तमिति ॥ अत्याखण्डलविक्रममिति संश्रयवृत्तेः हेतुः । अनेन च, 'बलीयसाभियुक्तो दुर्बलस्सर्वत्रानुप्रणतो वैतसं धर्ममातिष्ठेत् । इन्द्रस्य हि स प्रणमति यो बलीयसो नमति' इत्येतदनुसंहितम् । बलीयस्त्वञ्चात्र तथाविक्रमत्वसंपत् । न तु प्रभुशक्तिसंपत् । कामरूपेश्वरस्यापि कोशदण्डदुर्गादिसंपन्नत्वात् । भेज इति संश्रयवृत्तिः । भिन्नकटैरिति । यदेव भिन्नकटत्वमन्यत्र विग्रहोपयोगि, तदेवात्र संश्रयोपयोगि जातमिति भावः । नागैरिति करणत्वेनोपायनमुक्तम् । अन्यानिति राज्ञः । उपरुरोध । दुर्गाणीति शेषः । रुधेर्द्विकर्मकत्वात् । यथा—'व्रजं गामवरुणद्धि' इति ॥

पदा—तमिति ॥ कामरूपाणाम् ईशः भिन्नकटैः नागैः तं भेजे । कामरूपा जनपदविशेषाः । तेषामीशः । भिन्नकटैः । स्रवन्मदजलैरित्यर्थः । गजैरुपायनसाधनैः । भेजे सिषेवे । भजने हेतुमाह—अत्याखण्डलविक्रममिति । आखण्डलमतिक्रम्य वर्तमानो विक्रमो यस्य । 'इन्द्रस्य हि स प्रणमति यो

1 पंदु । 2 वर्म । 3 एतत्पक्षे '[illegible]' इति पाठेन भाव्यमिति भाति ।

बलीयसो नमति' इति नयशास्त्रमनेन दर्शितम्। यैः अन्यान् उपरुरोध। यैर्गजैरन्यान् रघुव्यतिरिक्तान् प्रतिभटानुपरुरोध, तैरेव तं भेजे इति पूर्वेण योजना। विग्रहोपयोगिनामपि संश्रयोपयोगित्वमपि जातमिति भावः ॥

उपपन्नसुखश्चास्य[1] हेमपीठाधिदेवताम्।
रत्नपुष्पोपहारेण छायामानर्च पादयोः ॥ ८३ ॥

प्रका—उपपन्नेति ॥ उपपन्नसुखः एतत्प्रसाददर्शनेन निर्वृतः। हेमपीठाधिदेवतां हेमपादपीठाधिष्ठात्रीमित्यर्थः। अर्चनीयत्वेनाधिदेवतात्वेन रूपणम्। रत्नपुष्पेति च रूपकम्। उपहारः पूजासाधनम्। छायां कान्तिम्। आनर्च चेत्यन्वयः। कामरूपेषु प्रधानशक्तिपीठानामन्यतमः पीठोऽस्तीति प्रसिद्धम्। तदुपासकश्च तत्रत्यो जन इति तत्समाधिरत्र विवक्षितः। अस्य च श्लोकद्वयस्यायमर्थः-- बलिनं धर्मविजयिनं च तं मत्वा संश्रयमेवौपयिकं मन्वानः कामरूपेश्वरः स्वराष्ट्रसारभूतैर्गजैरुपायनैस्स्वयमेवोपस्थितवान्। पश्चात्तत्प्रसादसौमुख्यदर्शनजातविस्रंभसुखश्च निकटीभूय तत्पादच्छायारञ्जिते पादपीठे रत्नोपायनं निवेशितवानिति ॥

पदा—उपपन्नेति ॥ उपपन्नसुखः अस्य पादयोः छायां रत्नपुष्पोपहारेण आनर्च च। उपपन्नं प्राप्तं सुखं यस्य। रत्नपुष्पेति रूपकम्। उपहारः पूजासाधनम्। छायां कान्तिम्। गजसमर्पणानन्तरमस्य प्रसाददर्शनादुत्पन्नमोदस्सन् महार्घाणि रत्नान्यपि वितीर्य पादप्रणामं कृतवानित्यर्थः। हेममयस्य पीठस्य अधिदेवतामधिष्ठात्रीं देवताम्। अर्चनीयत्वाद्देवतात्वेन रूपणम्। कामरूपाः शक्तिपूजाप्रधाना इति तत्समाधिरत्र विवक्षितः॥

इति जित्वा दिशो जिष्णुर्न्यवर्तत खुरोद्धतम्[2]।
रजो विश्रामयन् राज्ञां छत्रशून्येषु मौलिषु ॥ ८४ ॥

प्रका—इत्थमुपवर्णितदिग्विजयमुपसंहरति— इतीति ॥ जिष्णुरिति ताच्छीलिकेन क्वचिदप्यप्रतिहतजयत्वं ध्वनितम्। रघोस्सार्वभौमत्वादितरेषां छत्रशून्यत्वमुक्तम्। उक्तं च, 'एकातपत्रं जगतः प्रभुत्वम्' इति ॥

1 कामरूपेश्वररतस्य। 2 रथो।

**पदा**—दिग्विजयमुपसंहरति—**इतीति** ॥ सः इति दिशः जित्वा न्यवर्तत। जिष्णुर्जयशीलः। अप्रतिहतजय इत्यर्थः। खुरोद्धतं रजः राज्ञां मौलिषु विश्रामयन्। छत्रशून्येषु। सार्वभौमस्यैव छत्रयोग्यत्वादित्थमुक्तम्। 'एकातपत्रं जगतः प्रभुत्वम्' इत्यत्रोक्तं च ॥

**स विश्वजितमाजह्रे यज्ञं सर्वस्वदक्षिणम्।**
**आदानं हि विसर्गाय सतां वारिमुचामिव ॥ ८५ ॥**

**प्रका**—वृत्तस्य प्रकरणार्थस्य फलयोगं दर्शयति—**स इति** ॥ यः इत्थमाहृतसकलदिक्चक्रधनसंपदित्यर्थः। सर्वस्वदक्षिणमिति धनस्योपयोगः उक्तः। सर्वस्वदक्षिणत्वञ्चागमसिद्धम्। सर्वस्यैव धनस्य दक्षिणायामेवोपयोगमुपपादयति—आदानमिति ॥

**पदा**—भुजबलार्जितानामर्थानां फलमाह—**स इति** ॥ सः विश्वजितं यज्ञम् आजह्रे। विश्वजिदिति यज्ञविशेषसंज्ञा। आजह्रे कृतवान्। स्वशब्दो धनवाची। सर्वस्वं दक्षिणा यस्य। आगमसिद्धश्चायमर्थः। सताम् आदानं विसर्गाय हि। विसर्गो दानम्। वारिमुचामिवेत्युपमा। वारिमुचो मेघाः। अत्र मेघदृष्टान्तेन विसर्गावसाने पुनरप्यादानसौकर्यमुक्तम्। तेन चोत्तरसर्गे वक्ष्यमाणं कुबेराद्धनहरणं सूचितमित्युत्तरसर्गार्थबिन्दूपक्षेपोऽपि कृत इत्यवसेयम् ॥

**सत्रान्ते सचिवसखः पुरस्क्रियाभि-**
**र्गुर्वीभिः शमितपराजयव्यलीकान्।**
**काकुत्स्थश्चिरविरहोत्सुकावरोधान्**
**राजन्यान् स्वपुरनिवृत्तयेऽनुमेने ॥ ८६ ॥**

**प्रका**—अथ दिग्विजयशेषभूतमनुरञ्जनार्थं व्यापारं वर्णयति—**सत्रान्त इति** ॥ सचिवसख इत्यत्र बहुव्रीह्यनुपपत्तिः 'महिषीसखः' इत्यत्र दर्शिता। अथवा, समानं खं मनो यस्य स सखो बन्धुरित्यर्थः। सचिवास्सखा यस्य स तथा। पुरस्क्रियाभिः पूजाभिः। गुर्वीभिः प्रभूतदानमानाभिः। व्यलीकं दुःखम्, लज्जा वा। 'दुःखे विलक्षे व्यलीकम्' इति यादवः। चिरविरहोत्सुकावरोधानिति। तासामप्यस्यानुकूलाचरणकुशलतया राजमण्डलानुरञ्जनातिशयः प्रतीयते। अनेन दण्डोपनतवृत्तमुक्तम्। यदाह कौटल्यः-

'स्वभूमिषु च राजानः तस्मात्साम्राज्ञानुपालिताः। भवन्त्यनुगुणा राज्ञः पुत्र-पौत्रानुवर्तिनः'॥ इति॥

**पदा**—दिग्विजयाङ्गभूतमनुरञ्जनमाह—**सत्रान्त इति**॥ काकुत्स्थः सत्रान्ते राजन्यान् स्वपुरनिवृत्तये अनुमेने। 'मूर्धाभिषिक्तो राजन्यः' इत्यमरः। अनुमेनेऽनुज्ञातवान्। सचिवानां मन्त्रिणां सखा। बहुव्रीहिसमासानुपपत्तिस्तु, 'महिषीसख' इत्यत्र दर्शिता। अथवा, समानं खं मनो यस्य सः सखो बन्धुरित्यर्थः। सचिवा सखा बन्धवो यस्य। मन्त्रिभिस्सह संमन्त्र्य तेषां पराक्रमाद्यनुगुणं संमाननमनेन दर्शितम्। अत एवाह — गुर्वीभिः पुरस्क्रियाभिः शमितपराजयव्यलीकानिति। गुर्वीभिः प्रभूतदानमानाभिः पुरस्क्रियाभिः पूजाभिः। शमितं पराजयनिमित्तं व्यलीकं दुःखं लज्जा वा येषाम्। 'दुःखे विलक्षे व्यलीकम्' इति यादवः। चिरकालजातेन विरहेण उत्सुका दर्शनोत्सुका अवरोधा अन्तःपुरजना येषाम्॥

ते रेखाध्वजकुलिशातपत्रचिह्नं
सम्राजश्चरणयुगं प्रसादलभ्यम्।
प्रस्थानप्रणतिभिरङ्गुलीषु चक्रु-
र्मौलिस्रक्च्युतमकरन्दरेणुगौरम् ॥ ८७ ॥

**प्रका**—तदनुरूपां राज्ञां प्रतिपत्तिमाह—**त इति**। रेखेति। रेखारूपध्वजादिमहापुरुषलक्षणलक्षितम्। प्रसादलभ्यमिति तेषां तल्लाभे कृतार्थताभिमानो दर्शितः। प्रस्थानेति। प्रस्थानासमयोचिताचारप्रणतिभिरित्यर्थः। मौलिः केशबन्धः। 'चूडा किरीटं केशाश्च संयता मौलयस्त्रयः' इति यादवः। मकरन्दाश्च रेणवश्चेति द्वन्द्वः। तैर्गौरं पीतम्। 'शुक्लपीतारुणगुणेष्वेतद्युक्तेषु स त्रिषु' इति यादवः॥

**इत्यरुणगिरिनाथस्य कृतौ रघुवंशप्रकाशिकायां**
**चतुर्थः सर्गः**

---

**पदा**—मानितानां राज्ञां प्रतिपत्तिमाह—**त इति**॥ ते प्रस्थानप्रणतिभिः सम्राजः चरणयुगम् अङ्गुलीषु मौलिस्रक्च्युतमकरन्दरेणुगौरं चक्रुः।

सम्राजः सार्वभौमस्य। प्रस्थानप्रणतिभिः प्रस्थानसमयोचिताचारप्रणमनैः। मौलिः केशबन्धः। 'चूडा किरीटं केशाश्च संयता मौलयस्त्रयः' इत्यमरः। तत्र यास्स्रजो मालास्ताभ्यश्च्युतैर्मकरन्दैः रेणुभिः पुष्परेणुभिश्च गौरं पीतम्। 'शुक्लपीतारुणगुणेष्वेतद्युक्तेषु स त्रिषु' इति यादवः। रेखारूपाणि ध्वजकुलिशातपत्राणि चिह्नं यस्य। अनेन चरणस्य महापुरुषलक्षणलक्षितत्वमुक्तम्। प्रसादलभ्यम्। अनेनास्मान् प्रति प्रसन्नोऽयमिति राज्ञां कृतार्थत्वप्रतीतिर्द्योत्यते॥

इति श्रीकृष्णशिष्यस्य नारायणस्य कृतौ रघुवंशव्याख्यायां
पदार्थदीपिकायां चतुर्थः सर्गः॥

# पञ्चमः सर्गः

तमध्वरे विश्वजिति क्षितीशं
निःशेषविश्राणितकोशजातम्।
उपात्तविद्यो गुरुदक्षिणार्थी
कौत्सः प्रपेदे वरतन्तुशिष्यः ॥ १ ॥

**प्रका**—अथास्य कुमारोदयं दर्शयिष्यंस्तदङ्गभूतं प्रकरणं प्रस्तौति—तमिति ॥ विश्वजितीति निःशेषविश्राणितकोशजातत्वं प्रक्रम्यमाणप्रकरणघटनार्थमनूदितम्। विश्राणितं दत्तम्, कोशोऽर्थसंचयः, जातं समूहः। अनेन संचयानां बहुत्वमुक्तम्। राजोपगमनस्य गुरुदक्षिणार्थित्वं हेतुः, तस्य चोपात्तविद्यत्वम्। कौत्सः, वरतन्तुशिष्यः, इति ख्यातेः प्रकारो दर्शितः। ख्यातिश्च वक्ष्यते—'श्रुतप्रकाशम्' इति ॥

**पदा**—अथ रघोः पुत्रोत्पत्तिं वर्णयितुं तदङ्गभूतां कथामवतारयति—तमिति ॥ वरतन्तुशिष्यः कौत्सः गुरुदक्षिणार्थी तं क्षितीशं प्रपेदे। वरतन्तोश्शिष्यः। गुरुदक्षिणायै अर्थयितुं शीलमस्येति तथा। विश्वजिति अध्वरे निःशेषविश्राणितकोशजातं निःशेषं शेषरहितं यथा भवति तथा विश्राणितं दत्तं कोशजातम् अर्थसमूहो येन। 'विश्राणनं वितरणं स्पर्शनं प्रतिपादनम्, इत्यमरः। अत्र समूहवाचिना जातशब्देनार्थसंचयानां सुवर्णमणिप्रभृतीनामनेकत्वमुक्तम्। उपात्ता अधीता विद्या येन। अत एव गुरुदक्षिणार्थित्वमपि। अत एव राजप्राप्तिश्चेत्यवसेयम् ॥

स मृन्मये वीतहिरण्मयत्वा-
त्पात्रे निधायार्घ्यमनर्घशीलः।
श्रुतप्रकाशं यशसा प्रकाशः
प्रत्युज्जगामातिथिमातिथेयः ॥ २ ॥

**प्रका**—स इति ॥ मृन्मय इत्यसंभावनागर्भमभिधानम्। वीतहिरण्मयत्वात्। हिरण्मयमेव तद्भवने सम्भवति इति भावः। अर्घो मूल्यम्

तद्रहितत्वेन रत्नादिषु संभवता शीलस्य लोकोत्तरता लक्ष्यते। 'शीलं स्वभावे सद्वृत्ते' इति सिंहः। श्रुतेन प्रकाशं प्रथितम्, श्रुतशाली वरतन्तुशिष्यः कौत्सः इति प्रकाशः स्फुटरूपः। इत्थं सज्जनोपग्रहलक्षणौदार्यशालिनो यशसा प्रकाशत्वमुपपन्नमेवेति भावः। आतिथेयोऽतिथिषु साधुः। तत्रातिथित्वं श्रुतप्रकाशत्वं च प्रत्युद्गम्यत्वे हेतुः। अनर्घशीलत्वम् आतिथेयत्वं च प्रत्युद्गन्तृत्वे। यशसा प्रकाशत्वन्तु एवंविधव्यापारफलभूततया प्रत्युद्गमनोपपादकम्। वक्ष्यति च– 'गुर्वर्थमर्थी' इत्यादि। विशेषणैश्च परस्परमनुरूपमनयोस्सङ्गतमिति द्योत्यते॥

पदा —स इति॥ सः वीतहिरण्मयत्वात् मृन्मये पात्रे अर्घ्यं निधाय अतिथिं प्रत्युज्जगाम। वीतं नष्टं हिरण्मयं सुवर्णमयं पात्रं यस्य। अर्घः पूजा तदर्थं जलमर्घ्यम्। अर्घो मूल्यं तद्रहितमनर्घं शीलं स्वभावो यस्य। लोकोत्तरस्वभाव इत्यर्थः। 'शीलं स्वभावे सद्वृत्ते' इति सिंहः। श्रुतेन शास्त्रेण प्रकाशं प्रसिद्धम्। यशसा प्रकाशः प्रसिद्धः। आतिथेयः अतिथिषु साधुः। अत्र राजविशेषणैर्मुनिविशेषणेन च परस्परगुणसाम्यमुक्तम्॥

तमर्चयित्वा विधिवद्विधिज्ञ-
स्तपोधनं मानधनाग्रयायी।
विशां पतिर्विष्टरभाजमारा-
त्कृताञ्जलिः कृत्यविदित्युवाच ॥ ३ ॥

प्रका — तमिति॥ विधिवदिति। अत्र कौटल्यः—'अग्न्यगारगतः कार्यं पश्येद्वैद्यतपस्विनाम्। पुरोहिताचार्यसखः प्रत्युद्गम्याभिवाद्य च'॥ इति। विधिज्ञ इति। तस्य विधिवदर्चने किं नु दुष्करमिति भावः। तपोधनमिति उक्तविधिविशेषविषयत्वमुक्तम्। मानधनाग्रयायीति तन्मनोरथसंपादकत्वाभिप्रायम्। मानश्चित्तसमुन्नतिः स एव धनं यस्य। उन्नतचित्तो ह्यर्थिसङ्कल्पस्य मोघतां नेच्छति। विशांपतिरिति राजपर्यायः। विष्टरभाजम्। विष्टरस्वीकारानन्तरमित्यर्थः। अनेन वचनावसरज्ञत्वं द्योत्यते। आरात् निकटीभूयेत्यर्थः। कृत्यविदिति करिष्यमाणप्रश्नविशेषाभिप्रायम्। यतः कृत्यं राज्ञो वानप्रस्थविषये तपःप्रभृतीनां रक्षणम्, तानि च विविच्य प्रश्नानां विषयत्वेन लक्ष्यन्ते॥

पदा — तमिति ॥ विशां पतिः विष्टरभाजं तं तपोधनं विधिवत् अर्चयित्वा कृताञ्जलिः आरात् इति उवाच। विशांपती राजा। विष्टरमासनं भजत इति विष्टरभाक्। विधिवत्। अत्र कामन्दकः— 'अग्न्यगारगतः कार्यं पश्येद्वैद्यतपस्विनाम्। पुरोहिताचार्यसखः प्रत्युद्गम्याभिवाद्य च'॥ इति। आरादिति समीपवाचकमव्ययम्। 'आराद्दूरसमीपयोः' इति सिंहः। समीपमुपगम्येति यावत्। विधिज्ञः। विधिवदभ्यर्चने तस्य कः प्रयास इति भावः। मानश्चित्तसमुन्नतिः स एव धनं येषां तेषामग्रयायी उदारमना इत्यर्थः। अनेनार्थिकामपूरणे नैपुण्यमुक्तम्। कृत्यं वेत्तीति कृत्यवित्। वक्ष्यमाणप्रश्नविषयमिदं विशेषणम्। तपोवनरक्षणं हि राज्ञा कर्तव्यम्, तस्मात्तद्विषयः प्रश्न एव कर्तव्य इति जानन्नित्यर्थः॥

अप्यग्रणीर्मन्त्रकृतामृषीणां
कुशाग्रबुद्धे कुशली गुरुस्ते।
यतस्त्वया ज्ञानमशेषमाप्तं
लोकेन चैतन्यमिवोष्णरश्मेः ॥ ४ ॥

प्रका — अपीति ॥ अपिः प्रश्ने। मन्त्रकृतां मन्त्रद्रष्टृणाम्। तस्य कुतोऽकुशलमिति भावः। कुशाग्रमिव बुद्धिर्यस्य तीक्ष्णबुद्धिरित्यर्थः। 'कुशाग्राच्छः'। कुशली मङ्गलवान्। अशेषमखण्डम्। अत्र, 'चैतन्यमर्कादिव जीवलोकः' इति पाठे साधारणधर्मस्य स्वरूपभेदो भवतीति केचित् 'अयाः' इति पदच्छेदम्, आप्तमित्यस्य चैतन्येन संबन्धश्चाचक्षते। मन्यन्ते चार्केणैव प्रदोषे चैतन्यमाप्तम्। एतदपि दुर्योजनया आप्तत्वं धर्माधिक्येन च दूषितम्। सम्यक् पाठौ तु मषीकोशेषु दृश्येते—'ज्ञानं यतस्त्वां विशदं विवेश चैतन्यमर्कादिव जीवलोकम्' इत्येकः। 'लोकेन चैतन्यमिवोष्णरश्मेः' इत्यन्यः। नन्वत्रापि साधारणधर्मभेदहेतुः कालभेदोऽस्ति, उपमाने वर्तमाननिर्देशस्योचितत्वात्। न, कालादिभेदस्य काव्यप्रवाहेऽङ्गीकृतत्वात्। विभक्तिभेदस्तु श्रौत्यां वाक्यार्थोपमायां नेष्टः। प्रतीतिस्खलनस्य स्फुटतरत्वात्। अयं च प्रश्नस्समुदाचारतया राज्ञा कृतः। 'ब्राह्मणं कुशलं पृच्छेत्' इति वचनात्।

इत उत्तरे तु तद्वनविषयाः प्रश्नाः स्वकर्तव्यतद्रक्षाशैथिल्याशैथिल्यजिज्ञासयेति विशेषः। यद्वक्ष्यति—'नाथे कुतस्त्वय्यशुभं प्रजानाम्' इति। शाकुन्तले च—'राजा—किं तावद्व्रतिनामुपोढतपसां विघ्नैस्तपो दूषितं धर्मारण्यचरेषु केनचिदुत प्राणिष्वसच्चेष्टितम्। आहोस्वित्प्रसवो ममापचरितैर्विष्टम्भितो वीरुधामित्यारूढबहुप्रतर्कमपरिच्छेदाकुलं मे मनः'॥ इति। इयमेव जिज्ञासा क्रमेणानेन स्फुटीकृता॥

**पदा**—अथ 'ब्राह्मणं कुशलं पृच्छेत्' इति न्यायेनादौ कुशलं पृच्छति—**अपीति**॥ कुशाग्रबुद्धे ते गुरुः कुशली अपि। कुशाग्रमिव बुद्धिर्यस्य। तीक्ष्णबुद्धिरित्यर्थः। अपिशब्दः प्रश्ने। मन्त्रकृताम् ऋषीणाम् अग्रणीः मन्त्रद्रष्टॄणामृषीणां श्रेष्ठः। त्वया यतः अशेषं ज्ञानम् आत्तम्। अशेषं वेदतदङ्गोपाङ्गादिविषयम्। आत्तं प्राप्तम्। लोकेन उष्णरश्मेः चैतन्यमिवेत्युपमा। उष्णरश्मिरादित्यः। चैतन्यं चेतनत्वम्, न हि लोकः सूर्येण विना किञ्चिदपि जानाति॥

**कायेन वाचा मनसापि शश्व-**
**द्यत्संभृतं वासवधैर्यलोपि।**
**आपाद्यते न व्ययमन्तरायैः**
**कच्चिन्महर्षेस्त्रिविधं तपस्तत्** ॥ ५ ॥

**प्रका**—**कायेनेति**॥ शश्वदभीक्ष्णम्। वासवस्य स्वपदलिप्साशङ्कया धैर्यलोपीति तपोतिशय उक्तः। आपाद्यते नीयते। अन्तरायशब्देन वासवप्रहिताप्सरस्स्वन्यत्र वा शापः अनुग्रहविशेषाश्च विवक्षिताः। तेषां च व्ययकारित्वमस्ति। यद्वक्ष्यति—'त्राणाभावे हि शापास्त्राः कुर्वन्ति तपसो व्ययम्' इति। 'भूयस्तपोव्ययो मा भूत्' इति च। न तु तासु प्रसङ्गः। तद्विवक्षाया नायकवचस्यनुचितत्वात्। अन्तरायेभ्यः तपोऽपि राज्ञा रक्षणीयमिति भावः। कच्चिदित्यव्ययमिष्टज्ञाने। 'कच्चित्कामप्रवेदने' इति सिंहः। 'दिष्ट्या हन्त बत बत कत् कथं कच्चित् इति हर्षार्थाः' इति भोजः इति व्याख्या न युक्ता। विवक्षितार्थविपर्ययत्वाद्वाक्यस्य। तस्मात्प्र-

श्नार्थत्वमेव। यथाह भोजः—'सत्यं हि किं कच्चित् एवम् अपि अथ उत इति प्रश्नार्थाः' इति। त्रिविधं कायादिकरणभेदात्। प्रकारत्रययुक्तं हि तपः प्रशस्तं भवति। न तु रावणादीनामिव सङ्कल्पदुष्टम् अवैदिकानामिव परमेश्वर-कीर्तनरहितं वा तदिति प्रसिद्धम् ॥

पदा—कायेनेति ॥ महर्षेः त्रिविधं तत् तपः अन्तरायैः व्ययं न आपाद्यते कच्चित्। महर्षेः तव गुरोः। त्रिविधं कायवाङ्मनःकृतत्वात्त्रै-विध्यम्। तत् प्रसिद्धम्। अन्तरायैर्विघ्नैः। 'विघ्नोऽन्तरायः प्रत्यूहः' इत्यमरः। विघ्नकारिभिरिति यावत्। व्ययो नाशः। आपाद्यते नीयते। कच्चिदिति प्रश्नवाचकमव्ययम्। यत् कायेन वाचा मनसा च शश्वत् संभृतत्। शश्वत् सर्वदा। 'पुनस्सदार्थयोश्शश्वत्' इति सिंहः। वासवधैर्यलोपि स्व-पदलिप्सयैवायं तपस्यतीति वासवस्य धैर्यविनाशनशीलम्। अनेन तपसो महत्तरत्वमुक्तम् ॥

आधारबन्धप्रमुखैः प्रयत्नैः
संवर्धितानां सुतनिर्विशेषम्।
कच्चिन्न वाय्वादिरुपप्लवो वः
श्रमच्छिदामाश्रमपादपानाम् ॥ ६ ॥

प्रका—आधारेति। आधार आलवालम्। 'आधार आलवालेऽम्बुबन्धेऽधिकरणेऽपि च' इति यादवः। सुतनिर्विशेषमिति वात्सल्यातिशय उक्तः। श्रमच्छिदामिति पुत्रकृत्यसमाधिः ॥

पदा—आधारेति ॥ वः आश्रमपादपानां वाय्वादिः उपप्लवः न कच्चित्। वाय्वादिरित्यादिशब्देन वनगजादानीमुपादानम्। उपप्लवः उप-द्रवः। कच्चिदित्यव्ययमिष्टप्रश्ने। 'कच्चित्कामप्रवेदने' इत्यमरः। आधार-बन्धप्रमुखैः प्रयत्नैः सुतनिर्विशेषं संवर्धितानाम्। आधारबन्ध आलवालनिर्माणम्। 'आधार आलवालेऽम्बुबन्धेऽधिकरणेऽपि च' इति यादवः। सुतनिर्विशेषमि-त्यनेन वात्सल्यातिशय उक्तः। श्रमं छिन्दन्तीति श्रमच्छिदः। अत्र पदे पुत्रकृत्यसमाधिः ॥

क्रियानिमित्तेष्वपि वत्सलत्वा-
दभग्नकामा मुनिभिः कुशेषु ।
तदङ्कशय्याच्युतनाभिनाळा
कच्चिन्मृगीणामनघा प्रसूतिः ॥ ७ ॥

**प्रका—क्रियेति ॥** अभग्नकामा अखण्डितभक्षणेच्छा । अयं वात्सल्यानुभावः । 'तदङ्केति विभवः । तेषां मुनीनामङ्केष्वेव शय्यासु च्युतो जातायां द्वित्रदिनात्यये नाभिनाळः सहजो यस्या इति । अनघा व्यसनरहिता । 'दुःखेनोव्यसनेष्वघम्' इति यादवः । तच्च व्यालादिभ्यस्संभवति । प्रसूतिरपत्यम् । 'प्रसूतिस्तु पुत्रयोरपि जन्मनि' इति केशवः ॥

**पदा—क्रियेति ॥** मृगीणां प्रसूतिः अनघा कच्चित् । प्रसूतिरपत्यम् । 'प्रसूतिस्तु पुत्रयोरपि जन्मनि' इति केशवः । अनघा व्यसनरहिता । दुःखेनोव्यसनेष्वघम्' इति यादवः । व्याघ्रादिजनितं च तत् । तदपि राज्ञा निराकरणीयम् । मुनिभिर्वत्सलत्वात् क्रियानिमित्तेषु कुशेषु अपि अभग्नकामा । अभग्नोऽखण्डितः कामो भक्षणेच्छा यस्याः । तेषाम्मुनीनाम् अङ्केष्वेव शय्यासु च्युतः पतितो नाभिनाळो यस्याः । वात्सल्यातिशयादनिशमङ्केष्वेव स्थापितत्वात् सहजस्य द्वित्रदिनावसाने पततो नाभिनाळस्याङ्के पतनम् ॥

निर्वर्त्यते यैर्नियमाभिषेको
येभ्यो निवापाञ्जलयः पितॄणाम् ।
तान्युञ्छषष्ठाङ्कितसैकतानि
शिवानि वस्तीर्थजलानि कच्चित् ॥ ८ ॥

**प्रका—निर्वर्त्यत इति ॥** नियमो व्रतम् । येभ्यः । भवन्तीति शेषः । निवापः पितृदानमिति प्रसिद्धोऽपि पितृशब्दसन्निधानाद्दानमात्रे निवापशब्दोऽत्र वर्तते । यथा— 'ओदनपाकं पचति' इत्यत्र पचतिशब्दः क्रियामात्रे । गतार्थत्वन्तु श्रद्धेयताप्रतिपत्त्यर्थत्वान्न दुष्टम् । अञ्जलिः करसंपुटम् । तेन तत्परिमितमम्बु लक्ष्यते । निवापस्याञ्जलिः निवापाञ्जलिः । तादर्थ्ये त्वार्थम् । उञ्छो विप्रकीर्णानां धान्यानमेकैकश उद्धरणम् । 'उञ्छो धान्यश आदानं कणिशाद्यर्जनं शिलः' इति । तेन तल्लब्धं धान्यं

लक्ष्यते। तस्य षष्ठः उञ्छषष्ठः। षष्ठशब्दश्चात्र षष्ठं भागमाचष्टे। 'षष्ठाष्टमाभ्यां ञ च, इति भागार्थेऽन्प्रत्ययविधानात्। अतएव— 'पूरणगुण' इत्यादिना न षष्ठीसमासप्रतिषेधः। राजभागश्चात्र विवक्षितः। अत्र कौटल्यः, 'तस्मादुञ्छषड्भागमारण्यका अपि निवपन्ति। तस्यैव तद्भागधेयं योऽस्माद् गोपायति' इति। अनेनारण्यकानामात्मनि प्रतिपत्तिं दर्शयंस्तद्विषयरक्षाशैथिल्ये आत्मनः प्रत्यवायभयं ध्वनति। शिवानि ग्राहाद्यनभिभूतानि॥

पदा—निर्वर्त्यत इति॥ वः तानि तीर्थजलानि शिवानि कच्चित् ग्राहाद्यभिभवरहितानि कच्चित्। यैः नियमाभिषेकः निर्वर्त्यते। नियमो व्रतम्। अभिषेकः स्नानम्। येभ्यः पितॄणां निवापाञ्जलयः। निवापः पितृदानम्। 'पितृदानं निवापः स्यात्' इत्यमरः। निवापस्याञ्जलिः निवापाञ्जलिः। तादर्थ्यं स्वार्थमेव। अञ्जलिः करसंपुटम्। तेन तत्परिमितं जलं लक्ष्यते। अत्र निवापशब्देनैव पितृशब्दस्य गतार्थत्वेऽपि भक्त्यतिशयद्योतनार्थमुपादानम्। पितॄणां निवापाञ्जलयो येभ्यस्सकाशाद्भवन्तीत्यर्थः। उञ्छो विप्रकीर्णानां धान्यानामेकैकश उद्धरणम्। 'उञ्छो धान्यश आदानं कणिशाद्यर्जनं सिलः, इति निघण्टुः। उञ्छस्यषष्ठः उञ्छषष्ठः। षष्ठशब्दः षष्ठं भागमाचष्टे। 'षष्ठाष्टमाभ्यां ञ च' इति भागार्थेऽन्प्रत्ययविधानात्। तेनाङ्कितं सैकतं पुळिनं येषाम्। निक्षिप्तराजांशानीत्यर्थः। अनेन तेषामरक्षणे महान् प्रत्यवाय इति ध्वन्यते॥

नीवारपाकादि कडङ्करीयै-
रामृश्यते जानपदैर्न कच्चित्।
कालोपपन्नातिथिकल्प्यभागं
वन्यं शरीरस्थितिसाधनं वः ॥ ९ ॥

प्रका—नीवारेति॥ पाकः फलम्। सस्यमित्यर्थः। 'तस्य पाकमूले पील्वादिकर्णादिभ्यः कुणब्जाहचौ' इत्यत्र सूत्रे पीलोः पाकः पीलोः फलमिति दर्शनात्। 'पाकः तरोः फलम्, इति केशववचसि तरुशब्द उपलक्षणार्थः। आदिशब्देन श्यामाकपाकादिपरिग्रहः। 'कडङ्करो बुसं क्लीबे' इति सिंहः। कडङ्करमत्तुमर्हन्तीति कडङ्करीयाः गोवृषादयः। 'कडङ्करदक्षिणाच्छ च' इति छप्रत्ययः। जानपदैः जनपदादागतैः। 'तत अगतः' इत्यण्। अत्र का आस्थेत्याह— कालेति। अनेन दृष्टादृष्टसाधनत्वमुक्तम्। तदपाये सर्वमुच्छिद्येत। तस्मा-

तदेव भवतां सर्वस्वमिति भावः । वन्यमिति । तपःसिद्धौ सत्यामपि स्वाश्रमोचित तदेवेति भावः। अनेन धन्या स्थ यूयम्, येषामीदृशी स्थितिरिति राज्ञस्तापसेषु स्पृहा ध्वन्यते । अत्र प्रकरणे कायेनेत्यादौ तपोन्तरायाः, द्वितीये वाय्वाद्याः, आदिशब्देन दावाशनिद्विरदकाष्ठिकस्थावरव्याध्यादयो गृह्यन्ते। तृतीये व्याला- कालमरणाद्याः, चतुर्थे ग्राहाद्याः, पञ्चमे कडङ्करीयाः तदुपलक्षिताश्चानावृष्ट्याद्या, इत्यापदो दैवमानुष्यो जिज्ञासिताः पृच्छ्यन्ते । तासामात्मना प्रतिविधेयत्वात्। यथाह कौटल्यः— 'सर्वत्र चोपहतान् पितेवानुगृह्णीयात्' इति । 'प्रदिष्टाभ- यस्थावरजङ्गमानि ब्रह्मसोमारण्यानि तपस्विभ्यो गोरुतपराणि प्रयच्छेत्' इति च। आपदां प्रतिकारश्च तेनैव तत्र तत्रोक्तः । तत्र तपसः परमधनत्वात्प्रथमजिज्ञास्यता। ततः स्नेहविषयत्वादुपजीव्यत्वाच्च पादपानाम्। पश्चात्स्नेहविषयत्वान्मृगप्रसूतीनाम्। अनन्तरमुपयोज्यत्वाज्जलसस्यानाम् । तत्राप्युपयोगबाहुल्याज्जलानां प्राथम्यमिति प्रश्नेऽपि क्रमो विवक्षित इत्य नुसन्धेयम् ॥

पदा —नीवारेति ॥ वः नीवारपाकादि जानपदैः कडङ्करीयैः न आमृश्यते कच्चित् । नीवारस्य पाको नीवारपाकः। पाकः फलम्। सस्यमित्यर्थः। 'तस्य पाकमूले' इत्यादिसूत्रे 'पीलोः पाकः पीलोः फलम्' इति दर्शनात्। पाकस्तरोः फलमिति केशवस्वामिवचने तरुशब्द उपलक्षणार्थः। आदिशब्देन श्यामाकपाकादेरुपादानम् । जानपदैः जानपदादागतैः । 'तत आगतः' इत्यण् । 'कडङ्करो बुसं क्लीबे' इत्यमरः । कडङ्करमर्हन्तीति कड- ङ्करीया गोवृषभादयः । 'कडङ्करदक्षिणाच्छ च' इति छप्रत्ययः । आमृश्यते स्पृश्यते । भक्ष्यत इत्यर्थः । नीवारादय एव हि भवतां सर्वस्वमिति तदेव हि मया रक्षणीयमित्याह——काले त्यादिना। काले उपपन्नेभ्यः प्राप्तेभ्यः अतिथिभ्यः कल्प्यो भागो यस्य। वन्यं शरीरस्थितिसाधनम् । वन्यं वने भवम् । वानप्रस्थोचितमित्यर्थः। शरीरस्य स्थिती रक्षा तस्याः साधनम्। तदेव हि भवतामदृष्टसाधनं दृष्टसाधनं चेति भावः ॥

अपि प्रसन्नेन महर्षिणा त्वं
सम्यग्विनीयानुमतो गृहाय ।
कालो ह्ययं संक्रमितुं द्वितीयं
सर्वोपकारक्षममाश्रमं ते ॥ १० ॥

**प्रका**— अथोपस्थितकौत्सविषयं किञ्चित्पृच्छति--अपीति। प्रसन्नेनेति सम्यग्विनयने हेतुः। अथ च प्रसन्नेनानुमत इत्यनुमतिविशेषकम्। एवं हि श्रेयो भवेदिति भावः। अनुमतोऽनुज्ञातः। गृहाय गृहस्थाश्रमं प्रवेष्टुम्। 'क्रियार्थे'त्यादिना चतुर्थी। कुतोऽयं प्रश्न इत्याह---कालो हीति। यस्मादयं कालो गार्हस्थ्यस्य, तस्मात्पृष्टमित्यर्थः। कालश्च वयोवस्था। द्वितीयमिति क्रमप्राप्तत्वमुक्तम्। सर्वोपकारक्षममिति श्रेयस्त्वम्। सर्वेषामितराश्रमिणामुपकारे शक्तम्। अत्र मनुः— 'यथा मातरमाश्रित्य सर्वे जीवन्ति जन्तवः। वर्तन्ते गृहिणं तद्वदाश्रित्येतर आश्रमाः।" इति। अत्र सौजन्यसमुचिते प्रश्ने किञ्चिज्जिज्ञासितमप्यस्ति, अस्य गार्हस्थ्योपयोगि किमप्यस्मदायत्तं स्यादपीति॥

**पदा**—अथ ब्रह्मचारिणं कौत्समधिकृत्य पृच्छति— अपीति। त्वं प्रसन्नेन महर्षिणा सम्यक् विनीय गृहाय अनुमतः अपि। गृहाय गृहस्थाश्रमं प्रवेष्टुम्। 'क्रियार्थे'त्यादिना चतुर्थी। गुरुणा प्रसादपूर्वकं गृहस्थाश्रम-प्राप्तिरनुज्ञाता किं भवत इत्यर्थः। किमयं गुरुदक्षिणार्थी भवेदिति राज्ञो जिज्ञासाऽनेन सूचिता। प्रश्नस्याप्युपपत्तिमाह—काल इत्यादिना। ते द्वितीयम् आश्रमं संक्रमितुम् अयं हि कालः। द्वितीयं गृहस्थाश्रमम्। 'ब्रह्मचारी गृहस्थश्च वानप्रस्थोऽथ भिक्षुकः' इति हि क्रमः। वयोवस्थाविशेषानुमानादयं हि काल इत्युक्तम्। सर्वेषामितरेषामाश्रमिणामुपकारे क्षमं शक्तम्। अत्र मनुः— "यथा मातरमाश्रित्य सर्वे जीवन्ति जन्तवः। वर्तन्ते गृहिणं तद्वदाश्रित्येतर आश्रमाः" ॥ इति ॥

**तवार्हतो नाभिगमेन तृप्तं**
**मनो नियोगक्रिययोत्सुकं मे।**
**अप्याज्ञया शासितुरात्मना वा**
**प्राप्तोऽसि संभावयितुं वनान्माम् ॥ ११ ॥**

**प्रका**—अथान्यदपि जिज्ञासुर्जिज्ञासायां हेतुमाह— तवेति। अर्हतः पूज्यस्य। अयं च तृप्तिसंभवे हेतुः। तथापि किं न तृप्तमित्याह--नियोग-क्रिययोत्सुकमिति। 'प्रसितोत्सुकाभ्यां तृतीया च' इति सप्तम्यर्थे तृतीया। नियोगश्चासौ क्रिया चेति नियोगक्रिया नियोगस्य वा क्रिया आज्ञादानमित्यर्थः। अर्हतस्तवाभिगमनेन सम्भाविर्तं तृप्तिसाक्षात्कारोत्कण्ठा तदुन्मूलनस्वभावा बाधते

इत्यर्थः । नियुक्तार्थानुष्ठानौत्सुक्यन्तु दण्डापूपिकया सिद्ध्यत्येव । तृप्त्यनुदयहेतुभूतौत्सुक्यविषयतया प्रस्तुतां नियोगक्रियामवतारयितुं विकल्पयति—अपीत्यादिना । शासितुर्गुरोः । आत्मना स्वयम् । 'स्वयमात्मना' इति सिंहः । उभयमप्यव्ययमात्मशब्दार्थे वर्तते । किं गुरोराज्ञया कारणभूतया । इत्थं गुरुस्त्वामाज्ञापयतीति मां सम्भावयितुमागतोऽसि । उत स्वयमाज्ञया इत्यर्थः । वनादिति । न तावद्यादृच्छिकं तवागमनमिति भावः । अत्र शिष्यस्य गुरुपराधीनत्वाद् गुर्वाज्ञायाः प्रथमं सम्भावनम्, पश्चाच्छिष्यस्यापि सम्भवत्स्वार्थत्वात् तदाज्ञाया अपि सम्भावनम् । अथ च तादृशां मतयस्तत्त्वानुसारिण्यो भवन्तीत्यबुद्धिपूर्वमेवापि स्थास्यति पक्षे पर्यवसानम् ॥

पदा—तवेति ॥ अर्हतः अभिगमेन मे मनः न तृप्तम् । अर्हतः पूज्यस्य । दर्शनेनाप्यघं हरत इत्यर्थः । 'न ह्यम्मयानि तीर्थानि न देवा मृच्छिलामयाः । ते पुनन्त्युरुकालेन दर्शनादेव साधवः' ॥ इति भागवतवचनात् । इदं च तृप्तिसंभावनायां हेतुः । आगमनमात्रेणापि तृप्तिसंभावनायां सत्यामपि न मे मनस्तृप्यतीत्यर्थः । तत्र हेतुर्नियोगक्रिययोत्सुकमिति । नियोगक्रियया नियोगकरणेन । 'प्रसितोत्सुकाभ्याम्' इत्यादिना सप्तम्यर्थे तृतीया । उत्सुकं सश्रद्धम् । उत्तरोत्तराकाङ्क्षिणां कुतस्तृप्तिरिति भावः । नियोगक्रियामवतारयितुं विकल्पयति—अपीत्यादिना । त्वं शासितुः आज्ञया अपि आत्मना वा मां संभावयितुं वनात् प्राप्तः असि । शासितुः गुरोः आज्ञया संभावनायां साधनभूतया । आत्मनेत्यव्ययं स्वयमित्यस्मिन्नर्थे । 'स्वयमात्मना' इति सिंहः । त्वं मामाज्ञया संभावयितुमेव प्राप्तोऽसि । नात्र मे सन्देहः । अत एवाह—वनादिति । न हि दूरादागमनं निर्निमित्तं भवति । तत्रैतावानस्ति सन्देहः किं गुरोराज्ञया मे संभावनमुत तवैवाज्ञयेति । सर्वथापि कृतार्थोऽस्मीति भावः ॥

इत्यर्घ्यपात्रानुमितव्ययस्य
रघोरुदारामपि गां निशम्य ।
स्वार्थोपपत्तिं प्रति दुर्बलाश-
स्तमित्यवोचद्वरतन्तुशिष्यः ॥ १२ ॥

प्रका—इतीति ॥ अत्र व्ययस्य विशेषेणानभिधानान्निश्शेषधनविषयता । अत एव तस्य विरोधिसन्निधानमपि दुर्बलाशत्वे हेतुत्वम् । उदाराम् ।

आशयमहत्त्वम् । तच्च व्यञ्जिकायां गव्यारोपितम् । उदाराशयसमर्पणक्षमामित्यर्थः । अथवा सैवाभीष्टं ददातीत्युदारा । उपपत्तिः प्राप्तिः । इतिर्वक्ष्यमाणप्रकारे । वचनस्य वक्ष्यमाणप्रकारोऽनुसंन्धेय इत्यर्थः । वरतन्तुशिष्य इति । उचितवाक्त्वादि ध्वन्यते ॥

पदा—इतीति ॥ वरतन्तुशिष्यः तम् इति अवोचत् । वरतन्तोः शिष्यः । तादृशवचनपाटवे तस्य कः प्रयास इति भावः । इति वक्ष्यमाणप्रकारेण । रघोः इति उदारां गां निशम्य अपि स्वार्थोपपत्तिं प्रति दुर्बलाशः । उदारामौदार्ययुक्ताम् । अभीष्टार्थदानव्यातिकामित्यर्थः । स्वार्थस्य उपपत्तिः प्राप्तिः । दुर्बला क्षीणा आशा यस्य । अत्र हेतुः अर्घ्यपात्रानुमितव्ययस्येति । मृन्मयार्घ्यपात्रानुमितसर्वद्रव्यव्ययस्य ॥

सर्वत्र नो वार्तमवेहि राजन्
नाथे कुतस्त्वय्यशुभं प्रजानाम् ।
सूर्ये तपत्यावरणाय दृष्टेः
कल्पेत लोकस्य कथं तमिस्रा ॥ १३ ॥

प्रका—सर्वत्रेति ॥ सर्वत्र पृष्टेषु गुर्वादिषु । वार्तमनामयम् । अत्र प्रकरणे कुशलानामययोरदूरविप्रकर्षाद् भेदोऽनुसन्धेयः । 'वार्तं पाटवमारोग्यं सव्यं स्वास्थ्यमनामयम्' इति यादवः । अवेहि । मा तेऽत्र वितर्को भूदित्यर्थः । अत्रार्थान्तरन्यासः । नाथ इति । अत्र समर्थके सामान्यमुक्तं त्वन्नाथकत्वलक्षणमशुभाभावनिमित्तं सामर्थ्याद्विशेषेऽपि प्रतिपन्नं सत् तस्यानुपपद्यमानतां निरस्यति । उक्तरूपां व्याप्तिं दृष्टान्तेन द्रढयति—सूर्य इति । अनेन सर्वत्र प्रबलविरोधिसन्निधौ विरोधो बाध्यत एवेति व्याप्तिरुपोद्बलिता । तपति । न तूदितमात्रे अस्तं जिगमिषति वा । तदा तमसः प्रवृत्तिः संभाव्येतापि । अनेन राज्ञोऽप्यखण्डमण्डलत्वं द्योत्यते । आवरणाय । 'तुमर्थाच्च भाववचनात्' इति चतुर्थी । दृष्टिमावरितुमित्यर्थः । कल्पेत शक्नुयात् । 'तिमिरं तमः तमिस्रा तमिस्रमिच्छन्ति भूच्छायाम्' इति हलायुधः । अत्र प्रतिवस्तुनोऽर्थान्तरन्यासस्य च सङ्करः । एवम् आद्यानां षण्णां प्रश्नानामनेन श्लोकेनोत्तरं दत्तम् । सप्तमस्य तु 'गुर्वर्थमाहर्तुमहं यतिष्ये' इत्यनेन गुरुकुलनिर्वृत्तिं सूचयता वाक्येनोत्तरं दास्यति ॥

पदा—सर्वत्रेति ॥ राजन् त्वं नः सर्वत्र वार्तम् अवेहि । सर्वत्र त्वया पृष्टेषु सर्वेषु वस्तुषु । वार्तमनामयम् । 'वार्तं पाटवमारोग्यं सव्यं स्वास्थ्यमनामयम्'

इति यादवः। अवेहि जानीहि। नात्र ते रक्षाशैथिल्यशङ्कालवोऽपि कार्य इति भावः। त्वयि नाथे प्रजानाम् अशुभं कुतः इति अर्थान्तरन्यासः। त्वयि नाथे सति चतुस्समुद्रमध्यवर्तिनीनां प्रजानामशुभः कुतो भवति। न कुतोऽपीत्यर्थः। एतदेव प्रतिवस्तूपमया द्रढयति—सूर्ये तपति तमिस्रा लोकस्य दृष्टेः आवरणाय कथं कल्पेत इति। तपति सति। न तूदितमात्रे। तदा तमसोऽपि प्रवृत्तिः सम्भाव्येतापि। 'तिमिरं तमस्तमिस्रा तमिस्रमिच्छन्ति भूच्छायाम्' इति हलायुधः। आवरणाय 'तुमर्थाच्च भाववचनात्' इति चतुर्थी। दृष्टिमावरितुमित्यर्थः। कथं कल्पेत शक्नुयात्। न कथमपीत्यर्थः। अत्र अर्थान्तरन्यासस्य प्रतिवस्तुनश्च सङ्करः॥

भक्तिः प्रतीक्ष्येषु कुलोचिता ते
पूर्वान्महाभाग तया तशेषे।
व्यतीतकालस्त्वहमभ्युपेत-
स्त्वामर्थिभावादिति मे विषादः ॥१४॥

प्रका—भक्तिरिति॥ इदानीं 'तवार्हतो नाभिगमेन' इत्यादिवाक्यपर्यन्ताभिरतिचतुराभिरनुभावरूपाभिरुक्तिभिर्निष्यन्दितां विनयादिगुणविभावितां हर्षौत्सुक्यादिव्यभिचार्युपकृतां गुर्वात्मविषयां राज्ञः प्रीतिमनुमोदमान आह—भक्तिरिति। प्रतीक्ष्येषु पूज्येषु। कुलेन उचिता अभ्यस्ता। पूर्वपुरुषानुष्ठितेति यावत्। तत्र विशेषमाह—पूर्वानिति। महाभाग महाभाग्यशालिन्। 'भागो भाग्ये तुरीयांशे रूपकार्थेंऽशमात्रके' इति केशवः। कुलक्रमागतया सज्जनप्रीत्या पूर्वानप्यतिशयितवतस्त्वत्तोऽन्यः को नाम महाभाग्यशाली स्यादिति भावः। इत्थमभिनन्दिताद् भूपतेरात्मनो व्यतिरेकं दर्शयन् 'अप्याज्ञया' इत्यादिना विकल्पितमागमनकारणं निगमयन् आत्मन आशाभङ्गखेदं दर्शयति—व्यतीतकाल इति। व्यतीतो विशेषेणातिक्रान्तः कालो यस्य। विशेषेण लङ्घितः कालो वा येन। अनेनानवधानं ध्वनितम्। तुशब्दोऽहमित्यस्यानन्तरो व्यतिरेकं ध्वनयति। त्वयि न किञ्चित्परिहीयते, अहन्त्वधन्य इति। मे विषाद इति। मद्दोष एव मां खेदयतीत्यर्थः। विषादः। 'प्रारब्धकार्यासिद्ध्यादेर्विषादः सत्त्वसंक्षयः। निश्वासोच्छ्वासहृत्तापसहायान्वेषणादिकृत्'। इति॥

**पदा**—भक्तिरिति ॥ ते प्रतीक्ष्येषु भक्तिः कुलोचिता । 'प्रतीक्ष्यः कथ्यते पूज्यः' इति हलायुधः । कुलेनाचिता अभ्यस्ता । 'अभ्यस्तेऽप्युचितं न्याय्यम्' । इति यादवः । पारम्पर्यक्रमागतेति यावत् । महाभाग त्वं तया पूर्वान् अतिशेषे । महान् भागो भाग्यं यस्य । 'भागो भाग्ये तुरीयांशे रूपकार्थेऽशमात्रके' इति केशवः । अतिशेषे अतिक्रम्य वर्तसे । अहं तु व्यतीतकालः अर्थिभावात् त्वाम् अभ्युपेतः इति मे विषादः । व्यतीतो विशेषेणातीतोऽतिक्रान्तः कालो येन । अर्थिना याचकस्य भावोऽर्थिभावः । अभ्युपेतः प्राप्तः । विषादः सत्त्वसंक्षयः । 'प्रारब्धकार्यासिद्ध्यादेर्विषादः सत्त्वसंक्षयः । निश्वासोच्छ्वासहृत्तापसहायान्वेषणादिकृत्' ॥ इति दशरूपके । तव तु न कश्चिद्दोषः, अनवसरयाचनादहमेव भाग्यहीन इति भावः ॥

शरीरमात्रेण नरेन्द्र तिष्ठ-
न्नाभासि तीर्थप्रतिपादितर्धिः ।
आरण्यकोपात्तफलप्रसूतिः
स्तम्बेन नीवार इवावशिष्टः ॥ १५ ॥

**प्रका**—इत्थं मोघीकृतार्थिसंकल्पोऽहमेवाधन्य इति राज्ञो निर्वेदं परिहर्तुमाह—शरीरमात्रेणेति ॥ मात्रशब्दो द्रव्यान्तरं व्यवच्छिनत्ति । उपलक्षणे च तृतीया । तीर्थे पात्रे यज्ञे वा । 'तीर्थं मन्त्र्याद्युपाध्यायशास्त्रेष्वम्भसि पावने । पात्रोपायावतारेषु स्त्रीपुष्पे योनियज्ञयोः" ॥ इति यादवः । प्रतिपादिता दत्ता । 'विश्राणनं वितरणं स्पर्शनं प्रतिपादनम्' इति सिंहः । यद्यपि, 'अरण्यान्मनुष्ये' इति मनुष्यमात्रेऽभिधेये वुञ्, तथापि अत्रारण्यका मुनयो विवक्षिताः' तीर्थप्रतिवस्तुतयोपात्तत्वात् । फलस्य प्रसूतिर्जन्म । तच्च सामीप्याज्जातं लक्षयति । मुनिजनोपात्तसंजातफल इत्यर्थः । संजातत्वेन च फलस्योपयोगविनाश्यत्वं पुनस्संपाद्यत्वं च द्योतयद्भिरपि तथात्वं द्योतयति । स्तम्बेन तृणेन । 'स्तम्बस्तु संहतौ तृणे च विटपे च' इति केशवः । नीवार इवाभासि तत्सदृश. प्रतीयसे । रेकोपि तद्वदनवज्ञेय इत्यर्थः । नन्वत्र हीनस्य नीवारतृणस्योपमानत्वाद्धीनोपममिति दोषः । न । सज्जनोपयोगवीतफलत्वेन यदनिन्द्यत्वं तन्मात्रस्यैवानुगमान्निर्दोषता । तदयं परिहारः । मुनेः प्रागुक्तप्रकारेण सर्वस्वभूते नीवारे स तादृगादरः, येन तदुक्तौ हीनोपमस्यापि गुणत्वम् । यथा कामिन उक्तौ 'कान्तामुखमिवाग्रमिन्दुः' इति ॥

 

पदा—शरीरमात्रेणेति ॥ नरेन्द्र तीर्थप्रतिपादितर्धिः शरीरमात्रेण तिष्ठन् त्वम् आभासि । तीर्थे सत्पात्रे । यज्ञे वा । 'तीर्थं मन्त्र्याद्युपाध्यायशास्त्रेष्वम्भसि पावने । पात्रोपायावतारेषु स्त्रीपुष्पे योनियज्ञयोः' ॥ इति यादवः । प्रतिपादिता दत्ता ऋद्धिः समृद्धिर्येन । 'विश्राणनं वितरणं स्पर्शनं प्रतिपादनम्' इति सिंहः । शरीरमात्रेणेत्युपलक्षणे तृतीया । मात्रशब्दो द्रव्यान्तरव्यावृत्त्यर्थः । आरण्यकोपात्तफलप्रसूतिः स्तम्बेन अवशिष्टः नीवारः इव । प्रसूतिशब्देन प्रसूतं द्रव्यं लक्ष्यते । समस्तफलोपादानप्रतीतिः फलम् । आरण्यकैर्मुनिभिः उपात्ता स्वीकृता फलप्रसूतिः प्रसूतं फलं यस्य । स्तम्बेन तृणेन । 'स्तम्बस्तु संहतौ तृणे च विटपे च' इति केशवः । मुनीनां नीवारादेरत्यन्तप्राधान्यात्तद्वचने राज्ञो नीवारतृणोपमानमत्यन्तगुणायैव । अतो नात्र हीनोपमादोषः ॥

स्थाने भवानेकनराधिपः स-
न्नकिंचनत्वं मखजं व्यनक्ति ।
पयायपीतस्य सुरैर्हिमांशोः
कलाक्षयः श्लाघ्यतरो हि वृद्धेः ॥ १६ ॥

प्रका—अथवा प्रत्युत रेक एव विभूतेरपि तव श्लाघ्य इत्याह—स्थान इति ॥ स्थान इत्यव्ययं युक्तमित्यर्थे । 'युक्ते द्वौ साम्प्रतं स्थाने' इति सिंहः । उपमानवाक्यस्थेन तरपा अत्रापि तदर्थोऽवसेयः । किं युक्तमित्याह—भवानिति । एकशब्दः प्रधानवाची । अकिंचनत्वं निःस्वत्वम् । मखजमिति युक्तत्वे हेतुः । व्यनक्ति व्यक्तं धारयति । सम्राजः सतो मृत्पात्राभिव्यक्तं मखजं निःस्वत्वमेव ऋद्धेरपि तव श्लाघ्यमित्यर्थः । पर्यायेण क्रमेण । सुरैरित्युपलक्षणं पितृनराणामपि । यदाह—"यस्मिन् सोमस्सुरपितृनरैरन्वहं पीयमानः" इति । तरपा वृद्धेरपि श्लाघ्यतामात्रमनुजानाति । प्रतिवस्तूपमा चैषा ॥

पदा—स्थान इति ॥ एकनराधिपः सन् भवान् मखजम् अकिंचनत्वं व्यनक्ति स्थाने । एकः प्रधानभूतः । अकिंचनत्वं दरिद्रत्वम् । स्थान इत्यव्ययं युक्तमित्येतस्मिन्नर्थे । 'युक्ते द्वे साम्प्रतं स्थाने इत्यमरः । सम्राजः क्रतुप्रयुक्तसमस्तद्रव्यस्य तव निर्धनत्वमेव समृद्धेरपि युक्तमित्यर्थः । सुरैः पर्यायपीतस्य हिमांशोः कलाक्षयः वृद्धेः श्लाघ्यतरः हि । सुरैरिति पितृनराणामप्युपलक्षणम् । तदुक्तम्—"यस्मिन् सोमस्सुरपितृनरैरन्वहं पीयमानः" इति ।

पर्यायेण क्रमेण पीतस्य देवादिभिरन्वहं पीतत्वात् कलामात्रशेषस्य चन्द्रस्य कलासंक्षय एव हि वृद्धेरपि श्लाघ्यतरः। स एव हि जनैः सेव्यते ॥

तदन्यतस्तावदनन्यकार्यो
गुर्वर्थमाहर्तुमहं यतिष्ये ।
स्वस्त्यस्तु ते निर्गलिताम्बुगर्भं
शरद्घनं नार्दति चातकोऽपि ॥ १७ ॥

प्रका—तदद्य तव का प्रतिपत्तिरित्याह—तदिति। तत्तस्मात्। यस्मात्त्वं वीतसर्वस्वो यस्माच्चाहं व्यतीतकाल आगतः। अन्यतोऽन्यस्मात्। तावदिति क्रमं द्योतयति। इदमत्र क्रमप्राप्तमित्यर्थः। अनन्यकार्य इत्यर्थतः क्रियाविशेषणम्। गुर्वर्थमिति गुरुसंबन्धेनावश्यकरणीयत्वमुक्तम्। यतो गुरुः प्राणैरप्यनुवर्तनीयः। तथापि दुष्करत्वे विरन्तव्यमित्याह—अन्यत इति। तत्रापि को निश्चय इत्याह—यतिष्य इति। सर्वथा यत्नः करणीयः, सिद्धिस्तु दैवस्थितेति भावः। एवमापृच्छ्य गमनसमयोचितामाशिषं प्रयुङ्क्ते—स्वस्तीति। स्वस्तीत्यव्ययं मङ्गलार्थम्। किं मामननुमान्यैव निवृत्तोऽसीत्याह— निर्गलितेति। गर्भः कुक्षिः। गर्भशब्देन चाकारमात्रेणापरिक्षीणता द्योत्यते। शरद्घनमिति रिक्तत्वस्य तदवस्थोचितत्वं ध्वन्यते। अर्दति। 'अर्द गतौ याचने च' इति धातुः। चातक इति तदेकशरणत्वं ध्वन्यते। अपिरत्र स्वोपपदविपरीतं संभावयति। सोऽपि तादृशं नार्दति। किमुत मधुकरवृत्तयो वयं भवन्तमित्यर्थः ॥

पदा—तदिति। तत् तावत् अहम् अन्यतः गुर्वर्थम् आहर्तुम् अनन्यकार्यः यतिष्ये। यस्मात्त्वं, वीतसर्वस्वः तस्मादहं प्राणैरप्यनुवर्तनीयस्य गुरोरर्थं वदान्यान्तरादाहर्तुं कार्यान्तरपराङ्मुखो यतिष्ये। यत्ने कृते सिद्धिस्तु दैवाधीनेति भावः। तावच्छब्दः क्रमप्राप्तिं द्योतयति। इदमेवादौ मया कर्तव्यमित्यर्थः। अथ गमनसमयोचितामाशिषं प्रयुङ्क्ते —ते स्वस्ति अस्तु। स्वस्तीति मङ्गलार्थवाचकमव्ययम्। चातकः अपि निर्गलिताम्बुगर्भं शरद्घनं न अर्दति। चातकोपि। किमुत मधुकरवृत्तिमाश्रिता वयं भवन्तमिति भावः। निर्गलिताम्बुः गर्भः कुक्षिर्यस्य। अर्दति याचते। 'अर्द गतौ याचने च' इति धातुः ॥

एतावदुक्त्वा प्रतियातुकामं
शिष्यं महर्षेर्नृपतिर्निषिध्य ।
किं वस्तु विद्वन् गुरवे प्रदेयं
त्वया कियद्वेति तमन्वयुङ्क्त ॥ १८ ॥

**प्रका—एतावदिति ॥** एतावत् परिमितम्। यावदर्थाक्षरमित्यर्थः। अनेन गमनत्वरापि सूचिता। निषिध्येति निषेधप्रकारविशेषस्यानुपयोगात्सामान्योक्तिः। विद्वन्निति। विदुषा हि विमृश्य कर्तव्यमिति भावः। अत्र निषेधेन देयस्वरूपपरिमाणप्रश्नेन च रघोस्तन्मनोरथसंपादनाभिप्रायो ध्वन्यते ॥

**पदा—एतावदिति ॥** नृपतिः एतावत् उक्त्वा प्रतियातुकामं महर्षेः शिष्यं निषिध्य विद्वन्, त्वया गुरवे किं वस्तु प्रदेयं कियत् वा इति तम् अन्वयुङ्क्त। एतावदेतावन्मात्रम्। मिताक्षरमित्यर्थः। गमनत्वरया वचनस्य मिताक्षरत्वमित्यवसेयम्। निषिध्य गमनान्निवार्य। रत्नसुवर्णपृथिव्यादिषु मध्ये किं देयं किंप्रमाणं च तत् इति तमन्वयुङ्क्त पृष्टवान् ॥

ततो यथावद्विहिताध्वराय
तस्मै स्मयावेशविवर्जिताय ।
वर्णाश्रमाणां गुरवे स वर्णी
विचक्षणः प्रस्तुतमाचचक्षे ॥ १९ ॥

**प्रका—तत इति ॥** ततस्तस्माद्वचनादनन्तरम्। आनन्तर्येण च तद्बुभुत्सावगमः प्रस्तुतकथने हेतुरिति प्रकाश्यते। न केवलं बुभुत्सा, अपि तु प्रतिपत्तृगुणा अप्यपेक्षणीया इत्याह—यथावदिति। अनेनाचार उक्तः। आचारवान् हि आचारपरेण स्वकृत्येष्वभ्यन्तरीकर्तव्यः। यतस्समानशीलत्वात्तस्मै रोचते। सोऽप्यभिजनादिसंपत्तिजे गर्वे सति परोक्तमवजानीयादित्याह—स्मयेति। स हि सावधानः शृणोति। सोऽपि निर्वहणे ताटस्थ्यमवलम्बेत स्वार्थाभावादित्याह—वर्णेति। वर्णाश्रमगुरोर्हि पितृवत्प्रजासु स्नेहः। स्नेहश्च कार्यदर्शने साधनम्। एकार्थतयापि नासौ ताटस्थ्यमङ्गीकुर्यात्। तदुक्तम्—"प्रजासुखे सुखं राज्ञः प्रजानां च हिते हितम्" इति। सोऽपि पूर्वोक्तगुणरहितो न श्रोतुमधिकारी। तदित्थं गुणवत्सं बुभुत्सासहकृतं प्रस्तुतकथने

हेतुरित्यवसेयम्। विचक्षणः पण्डितः। स हि पण्डितत्वान् कारणानि विमृश्य तस्मै कथितवानित्यर्थः ॥

पदा—तत इति ॥ ततः सः वर्णी तस्मै प्रस्तुतम् आचचक्षे। ततः प्रश्नानन्तरम्। वर्णी ब्रह्मचारी। 'ब्रह्मचारी व्रती वर्णी' इति यादवः। प्रस्तुतं गुरुदक्षिणाप्रसङ्गे प्रकृतम्। यथावदित्यादिना राजविशेषणत्रयेणाख्याने हेतुरुच्यते --यथावद्विहिताध्वराय सम्यग्विहितयज्ञाय। स्मयस्य गर्वस्यावेशेन प्राप्त्या विवर्जिताय वियुक्ताय। ब्राह्मणादिवर्णचतुष्टयस्य ब्रह्मचर्याद्याश्रमचतुष्टयस्य च गुरवे रक्षकाय। विचक्षणः पण्डितः। अनेन राज्ञो गुणानालोच्य वक्तुं सामर्थ्यमुक्तम् ॥

समाप्तविद्येन मया महर्षि-
र्विज्ञापितोऽभूद्गुरुदक्षिणायै।
स मे चिरायास्खलितोपचारां
तां भक्तिमेवागणयत्पुरस्तात् ॥ २० ॥

प्रका—समाप्तेति ॥ सम्यगाप्ता विद्या येन स तथा। अनेन दक्षिणावसर उक्तः। उपचारोऽनुवृत्तिः। तामिति। गुरुदक्षिणाम्। पुरस्तात्प्रथमम्। एतच्च पश्चादन्यथावचनेऽपि नास्य दोष इति द्योतयितुम्। आदौ स तथाविधां मे भक्तिमेव गुरुदक्षिणात्वेन चिरायागणयदित्यर्थः ॥

पदा—समाप्तेति ॥ समाप्तविद्येन मया महर्षिः गुरुदक्षिणायै विज्ञापितः अभूत्। सम्यगाप्ता विद्या वेदादयो येन तेन मया गुरुदक्षिणां गृहाणेति कथितोऽभूत्। सः पुरस्तात् मे अस्खलितोपचारां भक्तिम् एव चिराय ताम् अगणयत्। पुरस्तात्प्रथमम्। अस्खलितः प्रमादरहितः उपचारोऽनुवृत्तिर्यस्याः। चिराय चिरकालम्। तां गुरुदक्षिणाम्। अगणयदुक्तवान्। तव भक्तिरेव मे गुरुदक्षिणार्थमलम्, किमितः परं गुरुदक्षिणान्तरेणेति चिरकालमुक्तवानित्यर्थः ॥

निर्बन्धसञ्जातरुषार्थ[1] कार्श्य-
मचिन्तयित्वा गुरुणाहमुक्तः।
वित्तस्य विद्यापरिसंख्यया मे
कोटीश्चतस्रो दश चाहरेति ॥ २१ ॥

1. र्थं।

**प्रका — निर्बन्धेति ॥** निर्बन्धोऽर्थात्प्रकृतदक्षिणाविषयोऽभीक्ष्णवचनादिलक्षणः। तेन सञ्जातया रुषा। अनाश्रवत्वबुद्धिरत्र रुषः कारणम्, तस्याश्च निर्बन्धः इत्ययं क्रमः। अथशब्दः पुरस्ताच्छब्दापेक्षया प्रयुक्तः। कार्श्यं तनुत्वम्। तच्च धनेनात्र विवक्षितम्। यथा महाभारते 'य. कृशाश्वः कृशगवः कृशभृत्यः कृशातिथिः। स वै राजन् कृशो नाम न शरीरकृशः कृशः'॥ इति। वित्तस्येति। वित्तं धनम्। तेनोन्मानविशेषावच्छिन्नं सुवर्णं विवक्ष्यते। जातौ चैकवचनम्। अन्यथा सुवर्णानां कोटीर्दशेतिवक्तव्यम्। विद्यानां संख्या विद्यापरिसंख्या तया हेतुभूतया। विद्याश्चतुर्दश। अत्र मनुः— 'अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः। पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश'। इति। अङ्गानि च षट्—'शिक्षा कल्पो व्याकरणं निरुक्तं छन्दसां चयः। ज्योतिषामयनं चेति वेदाङ्गानि॥' इति यादवः। एकैकस्या अपि विद्याया दक्षिणा द्रव्यस्य कोटिरिति सङ्कल्प्य चतुर्दशानामपि चतुर्दश कोटयो देया इति भावः॥

**पदा—निर्बन्धेति ॥** अथ निर्बन्धसञ्जातरुषा गुरुणा कार्श्यम् अचिन्तयित्वा त्वं विद्यापरिसंख्यया वित्तस्य दश चतस्रः च कोटीः मे आहर इति अहम् उक्तः। पुरस्ताच्छब्दापेक्षया अथशब्दः। आदौ भक्तिमेव गुरुदक्षिणामगणयत्, अनन्तरं चैवमुक्तवानित्यर्थः। निर्बन्धो दक्षिणां गृहाणेति पुनः पुनर्वचनम्, तेन सञ्जातकोपेन। कार्श्यं कृशत्वम्। तच्च धनेनैव। तदुक्तं महाभारते — 'यः कृशाश्वः कृशगवः कृशभृत्यः कृशातिथिः। स वै राजन् कृशो नाम न शरीरकृशः कृशः॥' इति। विद्यापरिसंख्यया विद्यापरिगणनेन हेतुना। अत्र मनुः —'अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः। पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश॥' इति। 'शिक्षा कल्पो व्याकरणं निरुक्तं छन्दसां चयः। ज्योतिषामयनं चेति वेदाङ्गानीरितानि षट्॥' इति। वित्तं धनम्। तेन मानविशेषावच्छिन्नं सुवर्णमत्र विवक्षितम्। जातौ चैकवचनम्। मया पाठितानां विद्यानां चतुर्दशसंख्यत्वाद्धनानां चतुर्दश कोटीरानयेत्युक्तवानित्यर्थः॥

सोऽहं सपर्याविधिभाजनेन
मत्वा भवन्तं प्रभुशब्दशेषम्।
अभ्युत्सहे संप्रति नोपरोद्धु-
मल्पेतरत्वाच्छ्रुतनिष्क्रयस्य ॥ २२ ॥

**प्रका**—स इति ॥ सः य एवं विषमां दशामनुप्रपन्नः। सपर्याविधिभाजनेन मृत्पात्रेण। मत्वा अवबुध्य। प्रभुशब्दशेषं निःस्वम्। एषा चाग्राम्यतालक्षणोदारता। संप्रतीति आगमनावस्थातो व्यतिरेक उक्तः। उपरोद्धुं पीडयितुम्। प्रभुत्वस्यापरिक्षतत्वात्त्वदर्थसाधने मम का पीडेत्याह—अल्पेतरत्वादिति। दुग्धाया अपि भुवः प्रभुत्वेन पुनर्दोहेऽपि दुःसंपादमियदिति भावः। निष्क्रयस्य। दक्षिणाया इत्यर्थः। येनोपकारापराधादेर्मुच्यते स निष्क्रयः॥

**पदा**—सोऽहमिति॥ सः अहं सपर्याविधिभाजनेन भवन्तं प्रभुशब्दशेषं मत्वा श्रुतनिष्क्रयस्य अल्पेतरत्वात् संप्रति उपरोद्धुं न अभ्युत्सहे। य एवं विषमां दशामापन्नस्सोऽहं मृन्मयेन सपर्यापात्रेणैव त्वां शब्दमात्रावशेषप्रभुत्वमवधार्य संप्रति याचनया त्वां पीडयितुं न शक्नोमि। केनचित्कृतादुपकारादपकाराद्वा येन प्रतिविधानेन पुरुषो मुक्तो भवति स निष्क्रयशब्दार्थः। स ह्यत्र बहुतरः। मदर्थमिदानीं पृथिवीदोहने क्रियमाणेऽपि दुःसंपाद इत्यर्थः॥

इत्थं द्विजेन द्विजराजकान्ति-
शवेदितो वेदविदां वरेण।
एनोनिवृत्तेन्द्रियवृत्तिरेनं
जगाद भूयो जगदेकनाथः ॥ २३ ॥

**प्रका**—इत्थमिति॥ द्विजेनेति तदुक्तावार्जवं गम्यते। द्विजराजकान्तिरिति तस्यामप्यवस्थायां मुखप्रसादाविपर्यय उक्तः। आवेदितः समन्तात् ज्ञापितः। किं वा कियदिति पृष्टे वित्तस्य चतस्रो दश च कोटीरित्याकाङ्क्षया निवर्तनात्। अनेनास्मिन्नर्थे राज्ञो दृष्टपारत्वं ध्वन्यते। वेदविदां वरेणेति तद्वचसो धर्मानुसारित्वं ध्वन्यते। एनः पापं तस्मान्निवृत्ता इन्द्रियाणां वृत्तिर्यस्य। एतच्च 'गुर्वर्थम्' इत्यादिवक्ष्यमाणापवादपरिहाराभिप्रायम्। जगदेकनाथ इति दातृत्वाभिमानाभिप्रायम्॥

**पदा**—इत्थमिति॥ द्विजेन इत्थम् आवेदितः जगदेकनाथः एनं भूयः जगाद। जगतां त्रयाणामेकः प्रधानभूतो नाथः। अनेन पृथिव्या दुग्धत्वेऽपि दोहने स्थानान्तरसद्भावो ध्वन्यते। द्विजराजश्चन्द्रः तस्य कान्तिरिव कान्तिर्यस्य। अनेन मुखप्रसाद उक्तः। तेन [illegible] दास्यामीत्यभिमानो

ध्वन्यते। वेदं वेदार्थं विदन्तीति वेदविदः तेषां वरेण। एनः पापं तस्मान्निवृत्ता इन्द्रियाणां वृत्तिर्यस्य ॥

गुर्वर्थमर्थी श्रुतपारदृश्वा
रघोः सकाशादनवाप्य कामम्।
गतो वदान्यान्तरमित्ययं मे
मा भूत्परीवादनवावतारः ॥ २४ ॥

**प्रका—गुर्वर्थमिति ॥** अप्रत्याख्येयत्वे हेतुरेकः। अत्र मनुः—'सान्तानिकं यक्ष्यमाणमध्वगं सार्ववेदसम्। गुर्वर्थं पितृमात्रर्थं स्वाध्यायार्थ्युपतापिनः। नवैतान् स्नातकान् विद्याद्ब्राह्मणान् धर्मभिक्षुकान् ॥ निःस्वेभ्यो देयमेतेभ्यो देयं विद्यानुरूपतः।' इति। श्रुतपारदृश्वेत्यपरः। अत्र याज्ञवल्क्यः— 'अध्वगस्त्वतिथिर्ज्ञेयः श्रोत्रियो वेदपारगः। मान्यावेतौ गृहस्थस्य ब्रह्मलोकमभीप्सतः॥' इति। रघोरिति नात्मप्रशंसापरम् परिवादानुवादप्रविष्टत्वात्। वदान्यो बहुप्रदः। 'स्युर्वदान्यस्थूललक्षदानशौण्डा बहुप्रदे' इति सिंहः। इतिशब्दः परिवादप्रकारे। माम् इति। मत्पूर्वेषु यस्य नाम पि न श्रुतं, सोऽद्य परिवादो मां प्राप्य लोकेन संभावयितुमारभ्यत इति ध्वन्यते। मा भूदिति प्रार्थनायाम्। भवन्तं प्रार्थय इत्यर्थः। नवावतार इति तत्प्रथमताभिधायिना तत्परिहारे सदैवात्मनः सावधानत्वं द्योत्यते ॥

**पदा—गुर्वर्थमिति ॥** गुर्वर्थम् अर्थी श्रुतपारदृश्वा रघोः सकाशात् कामम् अनवाप्य वदान्यान्तरं गतः इति अयं परीवादनवावतारः मे मा भूत्। गुरोरर्थं गुर्वर्थम्। गुरुप्रदेयमर्थमित्यर्थः। इदमप्रत्याख्येयत्वे हेतुः। अत्र मनुः—'सान्तानिकं यक्ष्यमाणमध्वगं सार्ववेदसम् गुर्वर्थपितृमात्रर्थस्वाध्यायार्थ्युपतापिनः॥ नवैतान् स्नातकान् विद्याद्ब्राह्मणान् धर्मभिक्षुकान्। निःस्वेभ्यो देयमेतेभ्यो देयं विद्यानुरूपतः॥' इति। श्रुतानां शास्त्राणां पारं दृष्टवान् श्रुतपारदृश्वा। अयमप्यपरो हेतुः। अत्र याज्ञवल्क्यः—'अध्वगस्त्वतिथिर्ज्ञेयश्श्रोत्रियो वेदपारगः। मान्यावेतौ गृहस्थस्य ब्रह्मलोकमभीप्सतः॥' इति। वदान्यो बहुप्रदः। 'स्युर्वदान्यस्थूललक्षदानशौण्डा बहुप्रदे' इति सिंहः। परीवादस्यापवादस्य नवोऽभिनवोऽवतारः प्राप्तिर्मा भूदिति प्रार्थना। ... भवन्तं प्रार्थय इत्यर्थः॥

स त्वं प्रशस्ते महितो[1] मदीये
वसंश्चतुर्थोऽग्निरिवाग्न्यगारे ।
द्वित्राण्यहान्यर्हसि सोढुमर्ह-
न्यावद्यते साधयितुं त्वदर्थम् ॥ २५ ॥

प्रका—स त्वमिति ॥ सः य एवं गोचकान्तरमनुप्रविष्ट इत्यर्थः । प्रशस्त इति तद्वासयोग्यत्वमुक्तम् । महित इति । ममापि कुलं त्वत्पूजया पूतं स्यादिति भावः । चतुर्थोऽग्निरिवेति । अग्निसादृश्यमुत्प्रेक्षाया हेतुः । तत्परिचरणे कृतार्थताप्रतिपत्तिः फलम् । अग्न्यगार इति । 'अग्न्यगारगतः कार्यम्' इत्युक्तत्वात् । द्वित्राण्यहानीति । तन्मात्रकालातिपातमित्यर्थः । अर्हसीति । प्रार्थय इत्यर्थः । अर्हन्निति । वाञ्छितासंपादनेऽपि पूज्यपूजामात्रमपि कृतं स्यादिति भावः । किमर्थमित्याह—यावदिति । यावता द्वित्रदिनपरिमाणेन कालेन । यते । न तु साधये । एतच्चौद्धत्यपरिजिहीर्षया । न तु दुस्साधनबुद्धया ॥

पदा—स इति ॥ अर्हन् सः त्वं मदीये अग्न्यगारे चतुर्थः अग्निः इव वसन् द्वित्राणि अहानि सोढुम् अर्हसि । अर्हन् हे पूज्य । 'अर्हः प्रशंसायाम्' इति शतृप्रत्ययः । चतुर्थोऽग्निरिव आहवनीयादित्रयादतिरिक्तोऽग्निरिवेत्युत्प्रेक्षा । तेजस्वित्वं चोत्प्रेक्षाहेतुः । अग्न्यगारेऽग्निहोत्रगृहे । 'अग्न्यगारगतः कार्यं पश्येत्' इत्युक्तत्वात् । द्वित्राण्यहानीत्यत्यन्तसंयोगे द्वितीया । गुर्वर्थप्रार्थनार्थं मम गृहमुपगतो भवान् दिनद्वयं वा दिनत्रयं वा मम गृह एव वस्तुमर्हति, गुर्वर्थाहरणप्रवृत्तौ तत्कृतं कालक्षेपं च सोढुमर्हति इति वयं प्रार्थयाम इत्यर्थः । किमर्थमिदमित्यत्राह—यावत् अहं त्वदर्थं साधयितुं यते इति । यत इति वर्तमानसामीप्ये लट् । यत्ने कृते सिद्धिस्तु दैवाधीना । तथाप्यहं यतिष्यामीत्यर्थः । यावद्यते तावत्सोढुमर्हसीति पूर्वेणान्वयः । प्रशस्ते प्रशस्तत्वादधिवासयोग्ये इत्यर्थः । महितः पूज्यः ॥

तथेति तस्यावितथं प्रतीतः
प्रत्यग्रहीत्सङ्गरमग्रजन्मा ।
गामात्तसारां रघुरप्यवेक्ष्य
निष्क्रष्टुमर्थं चकमे कुबेरात् ॥ २६ ॥

1. ते ।

**प्रका—तथेति ।।** अवितथं सत्यत्वेन सिद्धम् । तथाशब्दोऽभ्युपगमे । प्रतीतो हृष्टः । सङ्गरं प्रतिज्ञातम् । अग्रजन्मा । ते हि श्रद्धेयेषु श्रद्दधाना भवन्तीति भावः । अपीति वाक्यार्थसमुच्चये । निष्क्रष्टुं हठेन हर्तुम् । कुबेरात् । यत्र दुर्बलहिंसापि न भवेदिति भावः ।।

**पदा—तथेति ।।** अग्रजन्मा तस्य सङ्गरं तथा इति प्रत्यग्रहीत् । अग्रजन्मा ब्राह्मणः । सङ्गरं प्रतिज्ञाम् । 'आश्रवसङ्गरसन्धाः प्रतिश्रवस्संश्रवः प्रतिज्ञा च' इति हलायुधः । प्रत्यग्रहीदङ्गीचक्रे । रघुः अपि गाम् आत्तसाराम् अवेक्ष्य कुबेरात् अर्थं निष्क्रष्टुं चकमे । आत्तसारां स्वीकृतधनाम् । कुबेराद्वैश्रवणात् । निष्क्रष्टुं हठादाहर्तुम् । अवितथं सत्यम् । प्रतीतो हृष्टः ।।

वसिष्ठमन्त्रोक्षणज[1]प्रभावा-
दुदन्वदाकाशमहीधरेषु ।
मरुत्सखस्येव बलाहकस्य
गतिर्विजघ्ने न हि तद्रथस्य ।। २७ ।।

**प्रका—**अत एव कथमसौ भूचरः कुबेरमभियुञ्जीयादित्याह—**वसिष्ठेति ।।** मन्त्रेण सहितमुक्षणं मन्त्रोक्षणम् । बलाहकस्येति । स्वतो निश्चेष्टस्य । रथस्य बलाहकसाम्येनास्य शक्रसाम्यमपि प्रतीयते । मेघोऽपि समुद्रमभिगच्छति । व्योम्ना सञ्चरते । पर्वतं चाश्रयते ।।

**पदा—**रघोः कुबेराभियोगे सामर्थ्यमाह—**वसिष्ठेति ।।** वसिष्ठमन्त्रोक्षणजप्रभावात् उदन्वदाकाशमहीधरेषु तद्रथस्य गतिः न विजघ्ने हि । वसिष्ठस्य मन्त्रसहितं यदुक्षणं प्रोक्षणं तत्संभवात्प्रभावात् गतिर्न विजघ्ने न विहताभूत् । हिशब्दः प्रसिद्धौ । मरुत्सखस्य बलाहकस्य इव । मरुत्सखशब्दो महिषीसख इत्यादिवद्द्रष्टव्यः । अथवा, अकारान्तोऽपि सखशब्दोऽस्ति । समानं खं मनो यस्य इति पदव्युत्पत्तिः । न हि वायौ बन्धुभूते सत्यचेतनस्यापि मेघस्य गतिस्समुद्रे व्योम्नि पर्वते च विहता भवति ।।

अथाधिशिश्ये प्रयतः प्रदोषे
रथं रघुः कल्पितश[2]स्त्रगर्भम् ।

1. ज्ञात । 2. शस्त्र ।

सामन्तसंभावनयैव धीरः
कैलासनाथं तरसा जिगीषुः ॥ २८ ॥

प्रका—अथेति ॥ अधिशिश्य इति। अत्र कौटल्यः— 'श्वो युद्धमिति कृतोपवासः शस्त्रवाहनं चाधिशयीत' इति। अत्राधिशयनं भट्टस्वामी विवृतवान्—'अधिशयीतेति। तत् गन्धमाल्यधूपैरभ्यर्च्य चतुर्दिक्षु भूतबलिं कृत्वा तदग्रतः स्वप्यात्' इति। प्रयतः उपवासादिशुद्धः। प्रदोष इति रथारोहणकालविधिमनुसरति। तथा कालविधाने —'मध्याह्नास्तार्धरात्रेष्वथ दिनवदने वारणस्यन्दनाश्वान्मर्त्यानारुह्य यायाद्दधितिलमधुसर्पींषि भुक्त्वा क्रमेण' इति। अतोऽत्राधिरुह्य शयनमधिशयनम्। 'तदग्रतः स्वप्यात्' इति तु गजवाजिविवक्षयोक्तमित्यवसेयम्। कल्पितं सज्जितम्। अस्त्रगर्भमिति 'शस्त्रवाहनम्' इति यद्वचनं तदनुसारि द्रष्टव्यम्। सामन्तसम्भावना सामन्तबुद्धिः। हिमवद्दक्षिणसमुद्रान्तरस्य स्वराष्ट्रत्वात्तदासन्नकैलासवासिनमेनं सामन्तं मन्यत एवेति भावः। यद्वा, सम्भावना बहुमानः सामन्ते यावान् बहुमानस्तावानेवात्रापीत्यर्थः। धीर इति। 'धैर्यं हि नायकव्यपदेशहेतुरिन्द्रियाविकारकारणं चित्तधर्मः' इति भोजराजः। तरसा बलेन जिगीषुः। न तु तपसा रिराधयिषुः॥

पदा—अथेति॥ अथ रघुः प्रदोषे रथम् अधिशिश्ये। प्रदोषे सन्ध्यायाम्। अत्र कालविधानवचनम्—'मध्याह्नास्तार्धरात्रेष्वथ दिनवदने वारणस्यन्दनाश्वान्मर्त्यानारुह्य यायाद्दधितिलमधुसर्पींषि भुक्त्वा क्रमेण' इति। अधिशिश्ये अधिरुह्य शयितवान्। प्रयतः उपवासादिभिश्शुद्धः। कल्पितं सज्जितम्। अश्वादियुक्तमित्यर्थः। अस्त्राण्यायुधानि गर्भे यस्य। उपरिविन्यस्तसमस्तायुधमित्यर्थः। सामन्तसंभावनया एव कैलासनाथं तरसा जिगीषुः। सामन्ते या संभावना बहुमानः तया। अस्य सामन्तेषु यावान् बहुमानस्तावानेवात्रापीत्यर्थः। कैलासनाथं वैश्रवणम्। तरसा बलेन। न तु तपसा। 'तरसी बलरंहसी' इति यादवः। अत एव धीरः। धैर्यं हि नायकगुणः॥

प्रातः प्रयाणाभिमुखाय तस्मै
सविस्मयाः कोशगृहे नियुक्ताः।
हिरण्मयीं कोशगृहस्य मध्ये
वृष्टिं शशंसुः पतितां नभस्तः ॥ २९ ॥

**प्रका—प्रातरिति ॥** प्रयाणाभिमुखाय कुबेरमभियास्यते। सविस्मयाः नयनविकासाद्यनुभाववन्तः। कोशगृहे नियुक्ताः कोशागाराध्यक्षादयः। कोशगृहस्य मध्य इति। कोशगृहभाण्डशालामध्य इत्यर्थः। यदुक्तम्—'भाण्डवाहिनीपरिक्षिप्तं कोशगृहं कारयेत्' इति। यद्वा, 'प्रासादोपरितलमध्ये प्रासादं वा' इति वचनात्। अन्यथा नभसः पातस्यानुपलक्षणाद्धिरण्यराशिर्दृष्ट इत्येव ब्रूयुः ॥

**पदा—प्रातरिति ॥** कोशगृहे नियुक्ताः प्रातः प्रयाणाभिमुखाय तस्मै कोशगृहस्य मध्ये हिरण्मयीं वृष्टिं नभस्तः पतितां शशंसुः। कोशगृहं भाण्डागारं तस्य मध्ये मध्याङ्कणे। नभस्तः आकाशात्। भाण्डागाररक्षणे नियुक्ताः पुरुषाः प्रभाते कुबेरमभियास्यते रघवे सुवर्णमयी वृष्टिराकाशात्पतितेति निवेदयामासुरित्यर्थः। सविस्मयाः नयनविकासादिभिरनुमेयविस्मयाः ॥

तं भूपतिर्भासुरहेमराशिं
लब्धं कुबेरादभियास्यमानात्।
दिदेश कौत्साय समस्तमेव
पादं सुमेरोरिव वज्रभिन्नम् ॥ ३० ॥

**प्रका—तमिति ॥** अभियास्यमानादिति कुबेराल्लाभमुपपादयति। वीर्यार्जितत्वाद्दानयोग्यतां च द्योतयति। दिदेश दत्तवान। समस्तमेव। न तु तदर्थितमात्रम्। मेरोः पादमिवेत्युत्प्रेक्षायां हेमराशेरुच्छ्रायो हेतुः। फलमियत्तानवगमः ॥

**पदा—तमिति ॥** भूपतिः तं भासुरहेमराशिं समस्तम् एव कौत्साय दिदेश। भासुरं भासनशीलम्। हेमराशिं सुवर्णसपूहम्। समस्तमेव। न तु तदर्थितमात्रमित्येवकारार्थः। दिदेश। 'दिश अतिसर्जने' इति धातुः। दत्तवान्। अभियास्यमानात् कुबेरात् लब्धम्। विक्रमार्जितत्वेन पावनत्वाद्दानयोग्यमित्यर्थः। अभियास्यमानादिति कर्मणि लट्। वज्रभिन्नं सुमेरोः पादम् इव। 'पादाः पर्यन्तपर्वताः' इत्यमरः। हेमराशेरुच्छ्राय उत्प्रेक्षाहेतुः ॥

जनस्य साकेतनिवासिनस्तौ
द्वावप्यभूतामभिनन्द्यसत्त्वौ

गुरुप्रदेयाधिकनिःस्पृहोऽर्थी
नृपोऽर्थिकामादधिकप्रदश्च ॥ ३१ ॥

**प्रका**—जनस्येति ॥ साकेतमयोध्या । 'साकेतं स्यादयोध्यायां कोसलानन्दिनी च सा' इति यादवः । अभिनन्द्यसत्त्वौ प्रशस्यधैर्यौ । धैर्यं च हेमराशिदर्शनेऽप्यचापलेनानुमीयते । तच्चोभयोरपि गुरुप्रदेयावशिष्टानादरणेन । तदेतदाह—गुरुप्रदेयेति । अधिकप्रद इति मुनेः स्पृहाराहित्येऽपि नायकव्यापारस्य पादप्रणामादिभिस्तत्प्रतिग्राहणपर्यन्तता प्रतीयते । परस्वत्वापादनपर्यन्तं हि दानम् ॥

**पदा**—जनस्येति ॥ साकेतनिवासिनः जनस्य तौ द्वौ अपि अभिनन्द्यसत्त्वौ अभूताम् । साकेतमयोध्या । 'साकेतं स्यादयोध्यायां कोसलानन्दिनी च सा' इति यादवः । अभिनन्द्यं प्रशस्यं सत्त्वं धैर्यं ययोः । एतादृशहेमराशिदर्शनेऽप्यचापलं कस्य सम्भाव्यते इत्यभिनन्दनप्रकारः । कौ पुनस्तावित्यत्राह—गुरुप्रदेयाधिकनिस्पृहः अर्थी अधिकप्रदः नृपः च । गुरुप्रदेयात् चतुर्दशकोटिपरिमितात् अधिकेऽर्थे निःस्पृहः । अवशिष्टेष्वर्थेषु वीतस्पृहत्वादुभयोरप्यभिनन्द्यसत्त्वतेत्यवसेयम् ॥

अथोष्ट्रवामीशतवाहितार्थं[1]
प्रजेश्वरं प्रीतमना महर्षिः ।
स्पृशन् करेणानतपूर्वकायं
संप्रस्थितो वाचमुवाच कौत्सः ॥ ३२ ॥

**प्रका**—अथास्य प्रकरणस्य फलोदयं दर्शयितुमारभते—अथेति ॥ वामी बडवा । हारितो नायितः । 'हारितार्थम्' इति पाठः । प्रीतमना इति फलातिशयहेतुः । यदाह—'प्रसन्नानां वाचः फलमपरिमेयं च सुवते' इति । प्रीतिश्चास्य न स्वमनोरथसंपत्त्यैव । अपि तु, तदौदार्यदर्शनेनापि । स्पृशन्निति प्रीतेराङ्गिकोऽनुभावः । आनतेति प्रश्रयद्योतकम् । उद्दीपनविभावः । सम्प्रस्थितः गन्तुमारब्धः । आदिकर्मणि क्तः । वाचमित्यनुपयोगबाधितं विवक्षितगुणविशिष्टं स्वार्थमाह । न तु स्वार्थमात्रम् ॥

**पदा**—अथेति ॥ अथ कौत्सः महर्षिः सम्प्रस्थितः आनतपूर्वकायं प्रजेश्वरं करेण स्पृशन् वाचम् उवाच । सम्प्रस्थितः प्रस्थातुमारब्धः । आदि-

1. हा ।

कर्मणि क्तः कर्तरि च। भक्त्या स्वयमेवानतः पूर्वकायो यस्य। करेण स्पृशन्। शिरसीत्यर्थात्। उष्ट्राणां बडवानां च शतैस्समूहैस्साधनैः हारिताः प्रापिता अर्था येन। 'अर्वती बडवा वामी' इति हलायुधः। प्रीतमना इत्यनेनाशीर्वादफलस्य लोकोत्तरता ध्वन्यते। तदुक्तम् —'प्रसन्नानां वाचः फलमपरिमेयं प्रसुवते' इति ॥

**किमत्र चित्रं यदि कामसूर्भू-**
**वृत्तस्थितस्याधिपतेः प्रजानाम्।**
**अचिन्तनीयस्तु तव प्रभावो**
**मनीषितं द्यौरपि येन दुग्धा ॥ ३३ ॥**

**प्रका—किमत्रेति ॥** अत्रेति वक्ष्यमाणे सामान्यपक्षरूपे वाक्यार्थे। तमाह—यदीति। वृत्तस्थितस्येति। अत्र कामन्दकः —'न्यायेनार्जनमर्थस्य वर्धनं पालनं तथा। सत्पात्रप्रतिपत्तिश्च राजवृत्तं चतुर्विधम्॥' इति। इदं तु चित्रमित्याह —अचिन्तनीय इति। अपरिच्छेद्यः। चित्र इत्यर्थः। प्रभावस्त्वित्यन्वयः। तुशब्दोक्तं विशेषमाचष्टे—मनीषितमिति। द्यौः स्वर्गः। येन प्रभावेन। दुग्धा। दुहेर्द्विकर्मकस्याप्रधाने कर्मणि क्तः। 'प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम्। अप्रधाने दुहादीनां ण्यन्ते कर्तुश्च कर्मणः॥' इति स्मरणात् ॥

**पदा—किमत्रेति ॥** वृत्तस्थितस्य प्रजानाम् अधिपतेः भूः कामसूः यदि अत्र किं चित्रम्। वृत्ते राजवृत्ते स्थितस्य। अत्र कामन्दकः— 'न्यायेनार्जनमर्थस्य वर्धनं पालनं तथा। सत्पात्रे प्रतिपत्तिश्च राजवृत्तं चतुर्विधम्'॥ इति। कामं प्रसूत इति कामसूः। यदिशब्देन राजवृत्तवर्तिनामपि न सर्वेषां पृथिवी कामदुघा भवति। किन्तु भाग्यवतामेवेति द्योत्यते। अत्र कामदोहने। किं चित्रम्। न किमपीत्यर्थः। तव प्रभावः तु अचिन्तनीयः। मनसा चिन्तयितुमपि न शक्यः। किं पुनर्वक्तुमिति भावः। चिन्तनं हि वचसः पूर्वरूपम्। अचिन्तनीयत्वमेवोपपादयति—येन द्यौः अपि मनीषितं दुग्धा इति। येन प्रभावेन। द्यौस्स्वर्गोऽपि। मनीषितमिष्टम्। अत्र दुहेर्द्विकर्मकस्याप्रधाने कर्मणि क्तः। 'प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम्। अप्रधाने दुहादीनां ण्यन्ते कर्तुश्च कर्मणः॥' इति स्मरणात् ॥

1. सं

आशास्यमन्यत्पुनरुक्तभूतं
श्रेयांसि सर्वाण्यधिजग्मुषस्ते।
पुत्रं लभस्वात्मगुणानुरूपं
भवन्तमीड्यं भवतः पितेव ॥ ३४ ॥

प्रका—आशास्यमिति ॥ आशास्यमाशीः। कृत्यानां भावार्थत्वात्। पुनरुक्तमित्यनुपादेयता लक्ष्यते। अन्यदिति किमपेक्ष्येत्याह—पुत्रमिति। एतदेव केवलमाशास्यत इति भावः। आत्मगुणानामनुरूपम्। अर्थाद्गुणैरेव। अयं च साधारणधर्मः। ननु ईड्यमित्यपि साधारणधर्मः। न। तत्त्वे ह्युपमेयनिकट एव प्रयोज्यम्। तथा हि—'प्रकृतस्य तद्धर्मयोगमुपपादयितुमुपमानं निर्दिश्यते। यथा—'कान्तामुखम्' इत्युक्ते किमिवेत्याकाङ्क्षायाम् इन्दुरिव इति। न चोपमाने तद्धर्मयोगो वाच्यः, प्रसिद्धत्वात्। तस्मादुपमेयनिकट एव धर्मः प्रयुज्यते। स चोपमानेऽप्यनुवादरूपेणानुषज्यते। तर्हीड्यमिति किमर्थम्। भवदर्थस्योपमानस्यात्मगुणानुरूपताप्रसिद्धिं द्योतयितुम्। गुणवत्ताफलं हीड्यत्वम्। तस्य च सामान्येनोपादानाद् गुणानामप्यविशेषेणोपस्थानम्। ननु, लाभस्यापि सामान्यत्वं किं न स्यात्। तन्मात्रस्यैवेष्टत्वे उपमया नोपयोगः। अथ तद्विशेषस्यान्यस्य, तदा कृच्छ्रप्राप्त्याद्यनुचितमपि प्रतीयेत। तस्मादात्मगुणानुरूपतया लाभ एव सामान्यम् ॥

पदा—आशास्यमिति ॥ सर्वाणि श्रेयांसि अधिजग्मुषः ते अन्यत् आशास्यं पुनरुक्तभूतम्। श्रेयांसीष्टवस्तूनि। अधिजग्मुषः प्राप्तवतः। आशास्यमाशीः। कृत्यप्रत्ययोऽत्र भावार्थमात्रपरः। पुनरुक्तशब्देनात्रानुपादेयत्वं लक्ष्यते। अन्यशब्दव्यावर्तितमर्थमेव विवृण्वन्नाशिषं प्रयुङ्क्ते—पुत्रमित्यादिना। त्वम् आत्मगुणानुरूपं पुत्रं लभस्व। आत्मनो गुणानामनुरूपं सदृशम्। भवतः पिता ईड्यं भवन्तम् इव। ईड्यं स्तुत्यम्। यथा भवतः पिता स्वगुणानुरूपं भवन्तं लेभे, तथेत्यर्थः।

इत्थं प्रयुज्याशिषमग्रजन्मा
राज्ञे प्रतीयाय गुरोः सकाशम्।
राजापि लेभे सुतमाशु तस्मा-
दालोकमर्कादिव जीवलोकः ॥ ३५ ॥

**प्रका—इत्थमिति ॥** अपिर्वाक्यार्थसमुच्चये । तस्मात् इत्थमाशीःप्रदर्शितप्रसादान्मुनेः । आशु तदनन्तरर्तावेव राज्ञी गर्भं गृहीत्वा प्रासूयतेत्यर्थः । अत्र महाप्रभावतादि मुन्यर्कयोः, अभीष्टतमत्वं सुतालोकयोः, आशु तथाविधलाभो राजजीवलोकयोश्च सामान्यम् ॥

**पदा—इत्थमिति ॥** अग्रजन्मा राज्ञे इत्थम् आशिषं प्रयुज्य गुरोः सकाशं प्रतीयाय प्रतिजगाम । राजा अपि आशु तस्मात् सुतं लेभे । आशु तदनन्तरर्तावेव गर्भग्रहणमिति भावः । तस्मात्प्रसन्नान्महर्षेः सकाशात् । जीवलोकः अर्कात् आलोकम् इव । आलोकः प्रकाशः । अत्र मुन्यर्कयोर्महाप्रभावत्वमुपमाहेतुः । सुतालोकयोरभीष्टतमत्वम् । राजजीवलोकयोस्तु तल्लाभे प्रसन्नत्वम् ॥

ब्राह्मे मुहूर्ते किल तस्य देवी
कुमारकल्पं सुषुवे कुमारम् ।
अतः पिता ब्रह्मण एव नाम्ना
तम[1]ग्रजन्मानमजं चकार ॥ ३६ ॥

**प्रका—ब्राह्म इति ॥** ब्रह्मणो विरिञ्चस्य संबन्धी ब्राह्मः । नाडीद्वयं[2] मुहूर्तः । 'द्वे तु नाड्यौ मुहूर्तोऽस्त्री, इति यादवः । स सूर्योदयादारभ्याष्टमः । यस्याभिजिदित्यपि नाम । अत्र बृहस्पतिः— 'रौद्रः सार्पस्तथा मैत्रः पैत्रो वासव एव च । आप्यो विश्वेट्तथा ब्राह्मः प्राजेशैन्द्राग्न उच्यते ॥ ऐन्द्रोऽथ निर्ऋतिश्चैव वारुणोऽर्यमणस्तथा । भाग्यश्चेवेति विज्ञेया मुहूर्ताः पञ्चदशाह्निकाः ।' इति । ननु, ब्राह्म इति रात्रेः पश्चिमयामे प्रसिद्धः । 'मध्यरात्रो महा त्र उच्चन्द्रोऽपररात्रकः । ब्राह्मोऽप्येते क्रमाद्यामाः' इति यादवः । स किमुपेक्षितः । उच्यते । ब्रह्मणः परमात्मनो ध्यानं, वेदाध्ययनं वा प्रवृत्तिनिमित्तीकृत्य तत्र ब्राह्मशब्दः प्रयुक्तः । अतस्तदाश्रयेणाज इति नाम न घटते । तथा मुहूर्तशब्दस्य यामवाचकत्वदोषश्च प्रसज्यते । किलेति वार्तायाम् । कुमारकल्पं भुवनकण्टकोद्धरणक्षमम् । ब्रह्मण एवेति ।

1 मात्म । 2 नाडिद्वयमिति च पाठः

जातस्य तावदनुरूपं किमपि व्यवहाराय नाम करणीयम् इति स्थिते कुमार-जन्ममुहूर्तस्याधिदेवतात्वेन यो व्यपदेशहेतुः तस्यैव ब्रह्मणो नामात्र, कृतवानित्यर्थः। एवशब्दः पौनर्वचनिकः। नामकरणे च ब्राह्म इत्यादिः शाब्दो हेतुः। अग्र्यजन्मानमिति च आर्थः। तत्राद्येन जन्मकालानुरूपत्वं नाम्न उपपादितम्। अन्येन स्वभावानुरूपत्वम्। अग्र्यं श्रेष्ठम् अखिललोकोपजीव्यत्वात् जन्म यस्य। ब्रह्मापि तथाभूत एवेति॥

पदा—ब्राह्म इति॥ तस्य देवी ब्राह्मे मुहूर्ते किल कुमारं सुषुवे। अतः पिता ब्रह्मणः नाम्ना एव तम् अजं चकार। ब्रह्मा विरिञ्चिः तत्संबन्धी ब्राह्मः। मुहूर्तो नाडिकाद्वयम्। 'द्वे तु नाड्यौ मुहूर्तोऽस्त्री, इति यादवः। सूर्योदयादारभ्याष्टमे मुहूर्त इत्यर्थः। अत्र बृहस्पतिः– 'रौद्रस्सार्पस्तथा मैत्रः पैत्रो वासव एव च। आप्यो विश्वेद् तथा ब्राह्मः प्राजेशैन्द्राग्न उच्यते॥ ऐन्द्रोऽथ निर्ऋतिश्चैव वारुणोऽर्यमणस्तथा। भाग्यश्चेति विज्ञेया मुहूर्ताः पञ्चदशाह्निकाः॥' इति। नात्रान्त्यो यामो ब्राह्मः। परब्रह्मोपासनं वा, वेदाध्ययनं वा, निमित्तीकृत्य हि तत्र ब्राह्मशब्दः प्रयुक्तः। न विरिञ्चिसंबन्धित्वेन। तस्मादज इति नामानुपपत्तिः प्रसज्येत। किलशब्दः पुराणप्रसिद्धिमाह। अतः विरिञ्चिदैवत्यमुहूर्तप्रसवाद्धेतोः। ब्रह्मणो मुहूर्ताधिपतेर्ब्रह्मणः नाम्नैव। कुमारकल्पं स्कन्दसदृशं भुवनकण्टकोद्धरणक्षमत्वात्। अग्र्य श्रेष्ठं लोकोपकारकत्वसूचकं जन्म यस्य॥

रूपं तदोजस्वि तदेव वीर्यं
तदेव नैसर्गिकमुन्नतत्वम्।
न कारणात्स्वाद्बिभिदे कुमारः
प्रवर्तितो दीप इव प्रदीपात् ॥ ३७ ॥

प्रका – रूपमिति॥ रूपमाकृतिः वपुर्वा। 'अथ रूपं नपुंसकम्। स्वभावाकृतिसौन्दर्यवपुःषु श्लोकशब्दोः' इति केशवः। तदिति पैतृकम्। ओजोऽपि तदेवेत्यर्थः। अत्राप्येवशब्दोऽनुषञ्जनीयः। ओजस्वि बलवत्। अत्रात्यन्तसादृश्यानैसर्गिकं न त्ववस्थाविशेषजनितम्। उन्नतत्वमुदात्तत्वम्। 'अन्याद्भेदेऽभेद इत्यतिशयोक्तिः। कारणात् जननकारणात् पितुरित्यर्थः। 'अन्याराद्' इति पञ्चमी। बिभिदे भिन्नो बभूव। कर्मकर्तरि चायं प्रयोगः।

भेदेन न गृहीत इति कर्मणि वा। दक्षिणावर्तस्तु, 'आत्मनेपदिनो वा भिदेः कर्तरि, स्वात्कारणाद्रूपादीनि न बिभिदे। पिता यथा स्वानि रूपादीनि न व्यभिचरति, तथा तानि स न व्यभिचरितवानित्यर्थः'। इत्यपि व्याचष्ट। तत्तु निरूपणीयम्। प्रवर्तितः। उत्पादितः। अत्र रूपं तदोजस्वीत्यादयः कारणादभेदस्य प्रकारः। तस्मात्प्रकारिसन्निकर्षः। इतिरध्याहर्तव्यः। विशिष्टश्चात्रोपमानत्वेन दीपो विवक्षितः। तस्यैव हि कारणादभेदः सम्भवति। दारुदहनादिप्रवर्तितस्य तु कारणादभेदो न सम्भवति प्रकाशाधिक्यात्॥

पदा—रूपमिति॥ रूपं तत् एव। यत्पितरि दृष्टं तदेवेत्यर्थः, रूपमाकृतिः वपुर्वा 'अथ रूपं नपुंसकम्। स्वभावाकृतिसौन्दर्यवपुःषु श्लोकशब्दयोः' इति केशवः। रूपं विशिनष्टि—ओजस्वीति। बलवदित्यर्थः। बलमपि तदेवेति भावः। वीर्यं तत् एव। नैसर्गिकं उन्नतत्वं तत् एव। स्वाभाविकमुदात्तत्वमपि तदेवेत्यर्थः। किं बहुनेत्याह—कुमारः स्वात् कारणात् न बिभिदे इति। कारणाज्जननकारणात् पितुः। 'अन्यारात्' इत्यादिना पञ्चमि। न बिभिदे न भिन्नोऽभूत्। कर्मकर्तरि चायं प्रयोगः। प्रदीपात् प्रवर्तितः दीपः इव। प्रवर्तित उत्पादितः। अत्र रूपमित्यादौ भेदे सत्यप्यत्यन्तसादृश्यादभेद इत्यतिशयोक्तिः। सा चोपमामनुगृह्णातीति तयोः सङ्करः॥

उपात्तविद्यं विधिवद्गुरुभ्य-
स्तं यौवनोद्भेदविशेषकान्तम्।
श्रीः साभिलाषापि गुरोरनुज्ञां
धीरेव कन्या पितुराचकाङ्क्ष ॥ ३८ ॥

प्रका—उपात्तविद्यमिति॥ विधिवदिति वृद्धसंयोगप्रकरणप्रतिपादितप्रकारेण। तं प्रति साभिलाषेति प्रतिरध्याहर्तव्यः। आचकाङ्क्षेति पाठः। यौवराज्यार्हः सञ्जात इत्यर्थः। अत्र कुमारविशेषणाभ्यां प्रक्रम्यमाणपरिणयनकरणोपयोगिन्यवस्था दर्शिता॥

पदा—उपात्तविद्यमिति॥ श्रीः तं साभिलाषा अपि गुरोः अनुज्ञाम् आचकाङ्क्ष। अत्र तं प्रतीति प्रतिशब्दोऽध्याहार्यः। राजलक्ष्मीस्तं प्रति

प्रागेव साभिलाषापि गुरोरनुज्ञामाकाङ्क्षितवती। यौवराज्यार्हः स जात इत्यर्थः। अनेन यौवराज्यप्राप्तिरप्यर्थादुक्ता। 'तस्या भवानपरधुर्यपदावलम्बी' इति वक्ष्यमाणत्वात्। धीरा कन्या पितुः इव। यथा कन्यकाजनाः 'पिता रक्षति कौमारे भर्ता रक्षति यौवने। पुत्रस्तु स्थविरीभावे न स्त्री स्वातन्त्र्यमर्हति॥' इति वचनानुसारेण पितृनियोगमाकाङ्क्षन्ते तथेत्यर्थः। श्रियः साभिलाषत्वे हेतुमाह—उपात्तविद्यमित्यादिना। गुरुभ्यः विधिवत् उपात्तविद्यम्। विधिवत् वृद्धसंयोगप्रकरणे कौटिल्योक्तप्रकारेण। यौवनस्योद्भेदेनारम्भेण विशेषतः कान्तम्। विशेषणाभ्यां विवाहयोग्यत्वमपि सूचितम्। अत्रोपमा॥

अथेश्वरेण क्रथकैशिकानां
स्वयंवरार्थं स्वसुरिन्दुमत्याः।
आप्तः कुमारानयनोत्सुकेन
भोजेन दूतो रघवे विसृष्टः ॥ ३९॥

**प्रका**—अथास्य विवाहविधेरङ्गभूतं व्यापारं वर्णयितुमुपक्रमते—अथेति॥ क्रथकैशिका विदर्भाः। इन्दुमत्या इति विधिगर्भेणानुवादेन प्रसिद्धिं द्योतयति। आप्तः प्रत्ययितः। न तु दूतमात्रम्। एवंविधदूतसन्देशश्च रघोरधिराजत्वात् कार्यगौरवाच्चेत्यवसेयम्। रघव इति कुमारस्य तत्परतन्त्रत्वात्। क्रथकैशिकानामीश्वरेणेति भोजेनेति च सम्पदभिजनाभ्यां संबधानुरूपत्वं द्योतयति। स्वसुरित्यनेन तस्यापि कुमारेण समानवयस्त्वं सविशेषप्रीतिहेतुं द्योतयति। अत एवोत्सुकेनेत्युक्तम्। स्वयंवरस्त्वाचारः क्षत्रियकन्यारत्नानां वीर्यशुल्कत्वात्। स च कार्यते तद्गुरुभिरपरागपरिहारार्थम्॥

**पदा**—अथेति॥ अथ क्रथकैशिकानाम् ईश्वरेण भोजेन रघवे दूतः विसृष्टः। क्रथकैशिका विदर्भाः तेषामीश्वरेण। अनेन सम्पदुक्ता। भोजेनेत्याभिजात्यम्। अनेन संबन्धयोग्यत्वमुक्तम्। अजस्य पितृपरतन्त्रत्वात् रघवे विसृष्ट इत्युक्तम्। इन्दुमत्याः स्वयंवरार्थं कुमारानयनोत्सुकेन। कुमारस्याजस्य आनयने उत्सुकेन। आप्तो विश्वस्तः। सार्वभौमपुरप्रवेशे तत्सम्भाषणे च दृष्टसामर्थ्य इत्यर्थः॥

तं श्लाघ्यसंबन्धमसौ विचिन्त्य
दारक्रियायोग्यदशं च पुत्रम्।

प्रस्थापयामास ससैन्यमेन-
मृद्धां विदर्भाधिपराजधानीम् ॥ ४० ॥

प्रका—तमिति ॥ दारक्रिया विवाहः तद्योग्या दशा यस्येति। ससैन्यमिति सकलपरिवर्होपलक्षणम्। यथा विदर्भनगरस्यर्धिः परिभूयेत, तथा प्रस्थापयामासेत्यर्थः। अत एवाह—ऋद्धामिति ॥

पदा—तमिति ॥ असौ तं श्लाघ्यसंबन्धं पुत्रं दारक्रियायोग्यदशं च विचिन्त्य एनं ससैन्यं विदर्भाधिपराजधानीं प्रस्थापयामास। श्लाघ्यो लोकैरभिनन्दनीयः संबन्धो यस्य। दारक्रियाया विवाहस्य योग्या दशा यस्य। ससैन्यमिति सकलोपकरणान्तराणामप्युपलक्षणम्। यथा विदर्भनगरस्य समृद्धिः परिभूयेत, तथा प्रस्थापयामासेत्यर्थः। अत एवोक्तमृद्धामिति। समृद्धामित्यर्थः॥

तस्योपकर्या[1] रचितोपचारा
वन्येतरा जानपदोपदाभिः।
मार्गेनिवासा मनुजेन्द्रसूनो-
र्बभूवुरुद्यानविहारकल्पाः ॥ ४१ ॥

प्रका—तस्येति ॥ उपकर्या राजवेश्म। 'राजवेश्मोपकर्या' इति यादवः। रचितो वितानाद्युपचारो यासाम्। वन्येतरा वन्याभ्य उपकर्याभ्योऽन्यादृश्यः। जानपदोपदाभिः जनपदादागतैरुपहारैः। मार्गेनिवासा इति। 'तत्पुरुषे कृति बहुलम्' इति सप्तम्या अलुक्। रचितोपचारा जानपदोपदाभिर्वन्येतरा उद्यानविहारकल्पा उपकर्यास्तस्य मार्गेनिवासा बभूवुः इत्यन्वयः। उपकर्यारचितोपचारा इत्येकपदत्वे वन्येतरा इति पदं मार्गेनिवासा इत्यस्य विशेषणं न भवति। तत्त्वे हि सर्वनामसंज्ञया 'वन्येतरे' इति स्यात् ॥

पदा—तस्येति ॥ तस्य मनुजेन्द्रसूनोः उपकर्याः मार्गेनिवासाः बभूवुः। उपकर्याः पटगृहाः। मार्गेनिवासा इत्यत्र 'तत्पुरुषे कृति बहुलम्' इति सप्तम्या अलुक्। निवसत्यस्मिन्निति निवासो गृहम्। रचितो वितानाद्युपचारो यासाम्। जानपदाभिर्जनपदादागताभिः उपदाभिरुपहारैः। वन्ये-

1 का।

तरा वन्याभ्य उपकर्याभ्योऽन्यादृश्यः। अत एवाह—उद्यानविहारकल्पा इति। उद्यानक्रीडास्थानतुल्याः। विहरत्यस्मिन्निति विहारः॥

स नर्मदारोधसि शीकरार्द्रै-
र्मरुद्भिरानर्तितनक्तमाले।
निवेशयामास विलङ्घिताध्वा
क्लान्तं रजोधूसरकेतु सैन्यम् ॥ ४२ ॥

प्रका—स इति॥ नक्तमालः करञ्जः। स हि तत्र प्रचुरः। शीकरार्द्रैरित्यादिना प्रच्छायत्वशीतळत्वाभ्यां रोधसः क्लमहरत्वं द्योत्यम्। विलङ्घितः अतिक्रान्तप्रायः अध्वा येन स तथा। अत एव क्लान्तम्। रजोधूसरकेतुत्वेनाध्वदैर्ध्यमुक्तम्। चिररूषितं हि रजो वातादिपरिमृष्टमपि नापैति॥

पदा—स इति॥ सः नर्मदारोधसि सैन्यं निवेशयामास। शीकरार्द्रैः मरुद्भिः आनर्तितनक्तमाले। नक्तमालः करञ्जकापरनामा वृक्षविशेषः। स च तत्र सुलभः। 'चिरबिल्वो नक्तमालः करञ्जश्च करञ्जके' इत्यमरः। अनेन तस्य देशस्य प्रच्छायत्वं शीतळत्वं चोक्तम्। विलङ्घितः अतिक्रान्तप्रायः अध्वा मार्गो येन। अत एव क्लान्तं परिश्रान्तम्। रजोभिर्धूसराः धूसरवर्णाः केतवो ध्वजपटा यस्य। अनेन मार्गस्य दैर्ध्यं सूचितम्॥

अथोपरिष्टाद्भ्रमरैर्भ्रमद्भिः
प्राक्सूचितान्तःसलिलप्रवेशः।
निर्धौतदानामलगण्डभित्ति-
र्वन्यः सरित्तो गज उन्ममज्ज ॥ ४३ ॥

प्रका—अथाकस्मिकं प्रकरणमुपक्रमते। तच्च 'गान्धर्वम्' इत्यादिना वाक्येन सबीजम्। तस्य च फलम् अग्रे 'प्रियंवदात्प्राप्तम्' इत्यादि—अथेति॥ प्रागित्युन्मज्जनात्। निर्धौतेत्यादि भाविकम्। दानप्रसङ्गेन च भ्रमरभ्रमणमुपपादितम्। वन्य इति। सेनागजोन्मज्जने का अपूर्वतेति भावः॥

पदा—अथेति। अथ वन्यः गजः सरितः उन्ममज्ज। उन्मज्जनमेव तत्र दृष्टमित्यर्थः। अत एवाह—उपरिष्टात् भ्रमद्भिः भ्रमरैः प्राक् सूचितान्तः-

सलिलप्रवेश: इति। मज्जनसमये गण्डतलादुड्डीनैर्जलस्योपरिभागे भ्रमद्भिर्मदजललोलुपैर्भ्रमरै: प्रागेव सूचितो जलान्त:प्रवेशो यस्य। निर्धौतदानामलगण्डभित्ति: जलप्रवाहेण नितरां धौतं क्षालितं दानं मदजलं यस्य। अत एवामला गण्डभित्तिर्गण्डप्रदेशो यस्य ॥

निश्शेषविक्षालितधातुनाऽपि
वप्रक्रियामृक्षवतस्तटेषु।
नीलोर्ध्वरेखाशबलेन शंसन्
दन्तद्वयेनाश्मविकुण्ठितेन ॥ ४४ ॥

प्रका--निश्शेषेति ॥ वप्रक्रियां रोधोभञ्जनलीलाम्। ऋक्षवत: पर्वतस्य। तटेषु सानुषु। 'अथ लिङ्गत्रये तटम्। प्राहुर्जलाशयप्रान्ते तीरे त्वन्येऽद्रिसानुनि, इति केशव:। नीलेत्यश्मचूर्णसङ्क्रान्त्या नीलाभिर्दन्ताग्रकाठिन्यादूर्ध्वाभिर्लेखाभिश्शबलेन। विकुण्ठितेन अपहततैक्ष्ण्येन ॥

पदा--निश्शेषेति ॥ दन्तद्वयेन ऋक्षवत: तटेषु वप्रक्रियां शंसन्। ऋक्षवत: पर्वतस्य। तटेषु सानुषु। 'अथ लिङ्गत्रये तटम्। प्राहुर्जलाशयप्रान्ते तीरे त्वन्येऽद्रिसानुनि' इति केशव:। वप्रक्रियां रोधोभञ्जनलीलाम्। शंसन् स्पष्टमवबोधयन्। ननु किं धातुरेणुरूषितं दन्तद्वयम्। नेत्याह--निश्शेषविक्षालितधातुनापीति। निश्शेषं यथा भवति तथा विक्षालिता विशेषत: क्षालिता धातवो गैरिका यत्र। तथात्वे कथं शंसनमत आह--नीलोर्ध्वरेखाशबलेनेति। नीलाभिरूर्ध्वाभिश्च रेखाभिश्शबलेन नानावर्णेन। कठिनतरशिलाकोणसङ्घट्टनया सञ्जातानां रेखाणामश्मरेणुसङ्क्रान्त्या नीलत्वं प्रहारवशादूर्ध्वदेशवर्तित्वं चेति द्रष्टव्यम्। अपि चेत्याह--अश्मविकुण्ठितेनेति। अश्मभि: शिलाभिर्विकुण्ठितेन अपहततैक्ष्ण्येन ॥

संहारविक्षेपलघुक्रियेण
हस्तेन तीराभिमुख: सशब्दम्।
बभौ स भिन्दन् बृहतस्तरङ्गान्
वार्यर्गलाभङ्ग इव प्रवृत्त: ॥ ४५ ॥

प्रका—संहारेति ॥ संहारविक्षेपयोर्लघुः शीघ्रा क्रिया यस्येति । सामान्यविशेषभावात्क्रियाया विषयविषयिभावः । वारी गजबन्धनस्थानम् । तत्र गजरोधायार्गळा दीयन्ते ॥

पदा—संहारेति ॥ तीराभिमुखः बृहतः तरङ्गान् हस्तेन सशब्दं भिन्दन् सः बभौ । अत्रोत्प्रेक्षामाह—वार्यर्गळाभङ्गे प्रवृत्तः इव इति । वारी गजबन्धनस्थानम् । 'वारी च गजबन्धनम्' इति हलायुधः । तस्यामर्गळा वार्यर्गळा । तस्यां हि गजानां बहिर्गमननिरोधार्थमर्गळा क्रियते । तस्या भङ्गे भञ्जने प्रवृत्त इव । संहारे आकुञ्चने विक्षेपे प्रसारणे च लघुः शीघ्रा क्रिया यस्य । अनेन सत्वरत्वमुक्तम् ॥

शैलोपमः शैवलमञ्जरीणां
जालानि कर्षन्नुरसा स पश्चात् ।
पूर्वं तदुत्पीडितवारिराशिः
सरित्प्रवाहस्तटमुत्ससर्प ॥ ४६ ॥

प्रका—शैलेति ॥ मञ्जरीशब्दोऽत्रोपचरितः । उत्पीडितो नुन्नः । तदुत्पीडितवारिराशिरित्यत्रान्यपदार्थत्वमवयवावयविभावात्प्रवाहस्य ॥

पदा—शैलेति ॥ तदुत्पीडितवारिराशिः सरित्प्रवाहः पूर्वं तटम् उत्ससर्प । सः पश्चात् । तेन गजेनोत्पीडितो नुन्नो वारिराशिर्जलसमूहो यस्य तादृशः सरित्प्रवाहः प्रथमं तटमुज्जगाम । स तु गजः पश्चादेव तटमुत्ससर्प । तत्र हेतुः—शैलोपम इति । शैवलमञ्जरीणां जालानि उरसा कर्षन् । शैवलानां मञ्जर्यः । मञ्जरीशब्दोऽत्रौपचारिकः ॥

तस्यैकनागस्य कपोलभित्त्यो-
र्जलावगाहक्षणमात्रशान्ता[1] ।
वन्येतरानेकपदर्शनेन
पुनर्दिदीपे मददुर्दिनश्रीः ॥ ४७ ॥

प्रका—तस्येति ॥ एकनाग एकचरः । एकशब्दोऽसहायवाची 'स हि यूथात्स्वभावत एव पृथक्चारी' इति भट्टस्वामी । अनेन यूथं बिनोपल-

1 जलावगाहक्षण

भिरुपपादिता। ह्रदावगाहादिति शिशिरोपचारे मदशमनमिति। वन्येतरे सेनागजाः। दिदीपे प्रकाशते स्म। दुर्दिनशब्देनात्रापि वर्षं लक्ष्यते। तच्च मेघजलादन्यत्रोपचरितम्। यतः, तत्रैवास्य निरुपपदः प्रयोगः। बहुळत्वं च द्योत्यम्। गजान्तरत्वमत्र मददीपकमेकचरत्वात्। न तु वन्येतरत्वम्॥

पदा—तस्येति॥ तस्य एकनागस्य कपोलभित्त्योः मददुर्दिनश्रीः वन्येतरानेकपदर्शनेन पुनः दिदीपे। एकशब्दोऽसहायवाची। एकचर इत्यर्थः। मदगर्वितत्वात्स्वभावादेव यूथमपवहाय संचरत इति भावः। मदस्य दुर्दिनं मददुर्दिनम्। दुर्दिनशब्देनात्रापि वर्षं लक्ष्यते। अनवरतप्रसृमरत्वप्रतीतिः फलम्। वन्येभ्य इतरे वन्येतरे अनेकपा द्विपाः तेषां दर्शनेन। एकचरत्वादस्य गजान्तरदर्शनासहत्वमित्यवसेयम्। पुनः पुनरपि। दिदीपे प्रकाशते स्म। ववृध इत्यर्थः। पूर्वं प्रकाशाभावे हेतुमाह—ह्रदावगाहात् क्षणमात्रशान्ता इति। शीतोपचारो हि मदं शमयतीति भावः॥

सप्तच्छदक्षीरकटुप्रवाह-
मसह्यमाघ्राय मदं तदीयम्।
विलङ्घिताधोरणतीव्रयत्नाः
सेनागजेन्द्रा विमुखीबभूवुः[1] ॥४८॥

प्रका—सप्तच्छदेति॥ कटुः सुरभिः। आधोरणा हस्त्यारोहाः। अनेनास्याप्राकृतत्वं ध्वनितम्। तच्च वक्ष्यमाणदिव्यत्वम्॥

पदा—सप्तच्छदेति॥ सेनागजेन्द्राः तदीयं मदम् आघ्राय विमुखीबभूवुः। अत्राभूततद्भाववाचिना च्विप्रत्ययेन तद्गजानां विमुखत्वं तादात्विकमेवेति ध्वन्यते। सप्तच्छदक्षीरवत् कटुः सुरभिः प्रवाहो यस्य। प्रवाहशब्दोऽत्र द्रव्यपरः। विलङ्घिता अतिक्रान्ता आधोरणानां हस्त्यारोहाणां तीव्रयत्ना यैः। 'आधोरणा हस्तिपका हस्त्यारोहा निषादिनः' इत्यमरः। अङ्कुशादिप्रहारमप्यगणयन्त इत्यर्थः॥

---

1 विमुखा।

स छिन्नबन्धद्रुतयुग्यशून्यं
भग्नाक्षपर्यस्तरथं क्षणेन ।
रामापरित्राणविहस्तयोधं
सेनानिवेशं तुमुलं चकार ॥ ४९ ॥

प्रका—स इति ॥ छिन्नबन्धैस्त्रासाद्द्रुतैश्च युग्यैः शून्यं रिक्तम् । अक्षो रथाङ्गविशेषः । 'विहस्तो व्याकुलः इति हलायुधः ॥

पदा—स इति ॥ सः क्षणेन सेनानिवेशं चपलं चकार । निवेशं स्थितिम् । चपलं चलम् । छिन्नो बन्धो बन्धनं यैः अत एव द्रुतैः पलायितैः युग्यैरश्वैः शून्यं रहितम् । भयद्रुतहयमित्यर्थः । अक्षो रथाङ्गविशेषः । भग्नाक्षत्वेन हेतुना पर्यस्तः पतितो रथो यस्मिन् । रामाणां स्त्रीणां परित्राणे विहस्ता योधा यस्मिन् । 'विहस्तो व्याकुलः प्रोक्तः' इति हलायुधः ॥

तमापतन्तं नृपतेरवध्यो
वन्यः करीति श्रुतवान् कुमारः ।
निवर्तयिष्यन्विशिखेन कुम्भे
जघान नात्यायतकृष्टशार्ङ्गः ॥ ५० ॥

प्रका—तमिति ॥ अवध्य इत्यत्र चाक्षुषः—'लक्ष्मीकामो युद्धादन्यत्र करिवधं न कुर्यात् । इयं हि श्रीर्यत्करिणः' इति । वक्ष्यति च—'नृपतेः प्रतिषिद्धम्, इत्यादि । नात्यायतकृष्टशार्ङ्गः किञ्चिदन्तराकृष्टधन्वा ॥

पदा—तमिति ॥ कुमारः आपतन्तं तं निवर्तयिष्यन् विशिखेन कुम्भे जघान । विशिखः शरः । निवर्तनमात्रपरत्वे हेतुमाह—वन्यः करी नृपतेः अवध्य इति श्रुतवान् इति । अत्र चाक्षुषः—'लक्ष्मीकामो युद्धादन्यत्र करिवधं न कुर्यात् । इयं हि श्रीर्यत्करिणः' इति । अत्यर्थमायतं दृढं न भवतीति नात्यायतम् । शार्ङ्गं धनुर्मात्रम् । 'धनुर्मात्रे च' इति केशवः । किञ्चित्कृष्टचाप इत्यर्थः ॥

स विद्धमात्रः किल नागरूप-
मुत्सृज्य तद्विस्मितसैन्यदृष्टः ।

2 तुमुलं ।

स्फुरत्प्रभामण्डलमध्यवर्ति
कान्तं वपुर्व्योमचरं प्रपेदे ॥ ५१ ॥

प्रका--स इति ॥ विद्धमात्रः सद्य एवेत्यर्थः । किलेत्यैतिह्ये । नाम प्रसिद्धौ । सैन्याः सेनायां समवेताः ॥

पदा--स इति ॥ सः विद्धमात्रः नागरूपम् उत्सृज्य कान्तं व्योमचरं वपुः प्रपेदे किल । विद्धमात्रो वेधनानन्तरक्षण एवेत्यर्थः । व्योम्नि चरतीति व्योमचरं दिव्यम् । किलशब्दः पुराणप्रसिद्धिमाह । तस्याजस्य विस्मितैः सैन्यैः सेनासमवेतैर्जनैर्दृष्टः । स्फुरतः प्रभामण्डलस्य मध्ये वर्तितुं शीलमस्येति तथा ॥

अथ प्रभावोपनतैः कुमारं
कल्पद्रुमोत्थैरवकीर्य पुष्पैः ।
उवाच वाग्मी दशनप्रभाभिः
संवर्धितोरःस्थलतारहारः ॥ ५२ ॥

प्रका--अथेति ॥ दशनेत्यादि श्लाघ्यविशेषणम् । तारः सुमौक्तिकम् । 'तारस्तु मुक्ताशुद्धौ सुमौक्तिके' इति यादवः ॥

पदा--अथेति ॥ अथ सः कल्पद्रुमोत्थैः पुष्पैः कुमारम् अवकीर्य उवाच । कल्पद्रुमादुत्तिष्ठन्तीति कल्पद्रुमोत्थानि । अवकीर्य विक्षिप्य । प्रभावोपनतैः स्मरणमात्रेण प्राप्तैरित्यर्थः । वाग्मी प्रशस्तवाक् । दशनप्रभाभिः संवर्धितोरःस्थलतारहारः । प्रसादातिशयादुद्गताभिर्दन्तप्रभाभिः सम्यग्वर्धितः उरःस्थले वर्तमानस्तार उज्वलो हारो मौक्तिकमाला येन ॥

मतङ्गशापादवलेपमूला-
दवाप्तवानस्मि मतङ्गजत्वम् ।
अवेहि गन्धर्वपतेस्तनूजं
प्रियंवदं मां प्रियदर्शनस्य ॥ ५३ ॥

प्रका--मतङ्गेति ॥ गन्धर्वपतेरिति सखे इति वक्ष्यमाणामन्त्रणाभिप्रायम् । प्रियदर्शन इति संज्ञा ॥

पदा — मतङ्गेति ॥ अहं मतङ्गशापात् मतङ्गजत्वं अवाप्तवान् अस्मि । मतङ्गो नाम महर्षिः । मतङ्गजो गजः । नायं तस्य दोष इत्याह — अवलेपमूलादिति । अवलेपोऽहङ्कारः । अवलेपप्रकारानुक्तिः प्रकरणानुपयोगात् । त्वं मां प्रियदर्शनस्य गन्धर्वपतेः प्रियंवदं तनूजम् अवेहि । प्रियदर्शन इति पितुः संज्ञा । प्रियंवद इत्यात्मनः ॥

स चानुनीतः प्रणतेन पश्चा-
न्मया महर्षिर्मृदुतामगच्छत् ।
उष्णत्वमग्न्यातपसंप्रयोगा-
च्छैत्यं हि यत्सा प्रकृतिर्जलस्य ॥ ५४ ॥

प्रका — स चेति ॥ मृदुतां शान्तिम् । नैसर्गिकीमिति शेषः । अत्र दृष्टान्तोऽलङ्कारः । 'दृष्टान्तः पुनरेतेषां सर्वेषां प्रतिबिम्बनम्' इति लक्षणम् ॥

पदा — स इति ॥ सः महर्षिः प्रणतेन मया अनुनीतः पश्चात् मृदुताम् अगच्छत् च । अनुनीत इति मृदुताप्राप्तौ हेतुः । मृदुतां शान्तिम् । स्वाभाविकीमिति शेषः । अत एवाह — उष्णत्वमित्यादिना । जलस्य उष्णत्वम् अग्न्यातपसंप्रयोगात् । शैत्यं यत् सा हि प्रकृतिः । प्रकृतिः स्वभावः । अत्र दृष्टान्तोऽलङ्कारः । 'दृष्टान्तः पुनरेतेषां सर्वेषां प्रतिबिम्बनम्' इति ॥

इक्ष्वाकुवंशप्रभवो यदा ते
भेत्स्यत्यजः कुम्भमयोमुखेन ।
संयोक्ष्यसे स्वेन पुनर्महिम्ना[1]
तदेत्यवोचत्स तपोनिधिर्माम् ॥ ५५ ॥

प्रका — इक्ष्वाकुवंशेति । महिम्नेति शापेन तस्यापि पूर्वमुपहतत्वं सूचितम् । अनेन वपुषोऽपि कैमुतिकन्यायेन संयोग उक्तः । तपोनिधिः । तस्य किं दुष्करमिति भावः ॥

1 वपुर्महिम्ना

पदा —इक्ष्वाकुवंशेति ॥ सः तपोनिधिः माम् इति अवोचत्। वचनप्रकारमाह —इक्ष्वाकुवंशप्रभवः अजः यदा अयोमुखेन ते कुम्भं भेत्स्यति तदा त्वं पुनः स्वेन महिम्ना संयोक्ष्यसे इति। अयोमुखेन शरेण। महिम्ना प्रभावेन। संयोक्ष्यसे संयुक्तो भविष्यसि। कर्मकर्तरि प्रयोगः। शापादभिभूतेन स्वेनैव प्रभावेन पुनरपि संयुक्तो भविष्यसीत्यर्थः ॥

संमोचितः सत्त्ववता त्वयाहं
शापाच्चिरप्रार्थितदर्शनेन।
प्रतिप्रियं चेद्भवतो न कुर्यां
व्यर्था[1] हि मे स्यात्स्वपदोपलब्धिः ॥ ५६ ॥

प्रका— कथितं पुरावृत्तं प्रकृत उपयोजयति— संमोचित इति। सत्त्ववता, व्यवसायः पराक्रमो वा सत्त्वम्। 'सत्त्वोऽस्त्री जन्तुषु क्ली तु व्यवसाये पराक्रमे' इति यादवः। तव सत्त्वेनाहमापद उत्तीर्ण इत्यर्थः। चिरप्रार्थितदर्शनेनेति तदवस्थस्यापि स्मृतेरप्रमाष उक्तः। ततः किमित्याह— प्रतिप्रियमिति ॥

पदा — संमोचित इति। सत्त्ववता त्वया अहं शापात् संमोचितः। सत्त्वं पराक्रमः। 'सत्त्वोऽस्त्री जन्तुषु क्ली तु व्यवसाये पराक्रमे' इति यादवः। चिरं चिरकालं प्रार्थितं दर्शनं यस्य; गजावस्थायामप्येतावन्तं कालं भवद्दर्शनमेवाहं प्रार्थितवानित्यर्थः। सत्यं संमोचितोऽस्मि, ततः किमित्याह —अहं भवतः प्रतिप्रियं न कुर्यां चेत् मे स्वपदोपलब्धिः व्यर्था स्यात् हि। मम स्वपदप्राप्तेः साफल्यं त्वया मदभ्यर्थितार्थस्वीकारेण विधेयमित्यर्थः। न चेत्किं ममानेन स्थानेनेति भावः।

संमोहनं नाम सखे ममास्त्रं
प्रयोगसंहारविभक्तमन्त्रम्।
गान्धर्वमादत्स्व यतः प्रयोक्तु-
र्न चारिहिंसा विजयश्च हस्ते ॥ ५७ ॥

1 वृथा ।

**प्रका** — तत्किं मन्यस इत्याह — **संमोहनमिति** ॥ सखे इत्यप्रत्याख्येयत्वं सूचयति । गान्धर्वं गन्धर्वदेवतत् । अत एव ममेत्यसाधारण्यम् । पितुरेवाधिगतास्त्रग्रामस्य मे किमस्त्रेणेत्याह — यत इति । यतः येन । सार्वविभक्तिको हि तसिः । हिंसात्र वधः । इस्त इति । सद्य एवेत्यर्थः । एवंविधे विषये मदस्त्रं सांपयोगमिति भावः । अत एव संमोहनमित्यन्वर्थं नाम ॥

**पदा** — किं तत्प्रतिप्रियमित्यत्राह — **संमोहनमिति** ॥ सखे त्वं संमोहनं नाम मम अस्त्रम् आदत्स्व । 'यदा सतां सन्नतगात्रि सङ्गतं मनीषिभिः साप्तपदीनमुच्यते' इति न्यायेनावयोरद्य सख्यं जातम् । तस्मादप्रत्याख्येया मे प्रार्थनेति सख इत्यनेनोक्तम् । अधिगतसकलास्त्रग्रामस्य मे किं तवास्त्रेणेति शङ्कां निवर्तयितुं ममेत्युक्तम् । अस्माकमेवासाधारणमिदमस्त्रमित्यर्थः । अत एव संमोहनमिति नाम्नोऽप्यन्वर्थत्वम् । प्रयोगे संहारे च विभक्तं कृतविभागं मन्त्रं यस्य । प्रयोगं संहारं च गृहाणेत्यर्थः ॥

अलं ह्रिया मां प्रति यन्मुहूर्तं
दयापरोऽभूः प्रहरन्नपि त्वम् ।
तस्मादुपच्छन्दयति प्रयोज्यं
मयि त्वया न प्रतिषेधरौक्ष्यम् ॥ ॥ ५८ ॥

**प्रका** — **अलमिति** ॥ ह्रिया प्रत्युपकारस्वीकारलज्जया । प्रत्याख्यानहेतुभूतयेति शेषः । अप्रत्याख्येयत्वमाह — मामिति । मुहूर्तमित्यल्पकालोपलक्षणम् । उपच्छन्दयति प्रार्थयमाने । 'छदि संवरणे' इति चौरादिको धातुः । रौक्ष्यं निःस्नेहता । अपकारिण्यपि मयि दयापरेण त्वया प्रार्थयमाने सति दयितव्यमित्यर्थः ॥

**पदा** — **अलमिति** ॥ ह्रिया अलम् । मत्प्रार्थितार्थप्रत्याख्यानहेतुभूतया प्रत्युपकारस्वीकारलज्जयालमित्यर्थः । अप्रत्याख्येयत्वमेवाह — मामित्यादिना । त्वं प्रहरन् अपि मां प्रति मुहूर्तं दयापरः अभूः यत् । तस्मात् उपच्छन्दयति मयि त्वया प्रतिषेधरौक्ष्यं न प्रयोज्यम् । मुहूर्तमित्यल्पकालोपलक्षणम् । उपच्छन्दयति प्रार्थयमाने । 'छदि संवरणे' इति चौरादिको धातुः । उपसर्ग-

वशात्प्रार्थनार्थत्वम्। प्रतिषेधः प्रत्याख्यानं तेन रौक्ष्यं रूक्षत्वम्। निःस्नेहत्वमिति यावत्। 'न प्रयोज्यं न कर्तव्यम्। अपकारोद्यतेऽपि मयि दयापरेण भवता प्रार्थ्यमाने सति दयनीयमेवेति भावः॥

तथेत्युपस्पृश्य पयः पवित्रं
सोमोद्भवायाः सरितो नृसोमः।
उदङ्मुखः सोऽस्त्रविदस्त्रमन्त्रं
जग्राह तस्मान्निगृहीतशापात् ॥ ५९ ॥

प्रका—तथेति।' उपस्पृश्य आचम्य। 'रेवा तु नर्मदा सोमोद्भवा मेखलकन्यका' इति सिंहः। उदङ्मुख इति मङ्गलम्। अस्त्रविदिति तत्प्रक्रियाविदः स्वरूपमुपदेश्यमिति भावः। निगृहीतशापादिति संबन्धकथनं ग्रहणोपपादकम्॥

पदा—तथेति॥ सः तथा इति सोमोद्भवायाः सरितः पयः उपस्पृश्य उदङ्मुखः निगृहीतशापात् तस्मात् अस्त्रमन्त्रं जग्राह। सोमोद्भवा नर्मदा। 'रेवा तु नर्मदा सोमोद्भवा मेखलकन्यका' इत्यमरः। उपस्पृश्य आचम्य। 'उपस्पर्शस्त्वाचमनम्। इति सिंहः। उदङ्मुखत्वं मङ्गलार्थम्। निगृहीतशापादिति गुरुदक्षिणां द्योतयति। नृणां सोमः सोमवदाह्लादकरः। अस्त्रमन्त्रमात्रग्रहणे हेतुरस्त्रविदिति। अस्त्रप्रयोगप्रक्रियाविदित्यर्थः।

इत्थं[1] तयोरध्वनि दैवयोगा-
दासेदुषोः सख्यमचिन्त्यहेतु।
एको ययौ चैत्ररथप्रदेशान्
सौराज्यरम्यानपरो विदर्भान् ॥ ६० ॥

प्रका—अथ प्रसङ्गागतं गन्धर्ववृत्तं यावदुपयोगमुपवर्ण्य उपसंहरन्नाधिकारिकं वृत्तमनुसन्धत्ते—इत्थमिति॥ अध्वनीत्यचिन्त्यहेतुत्वोपपादकम्। अचिन्त्यहेतु असंभावनीयैवंविधकारणकम्। तत्कथमेतदासादितमित्याह—दैवयोगादिति।

1 एवं

इत्थं चास्य प्रकरणस्याकस्मिकत्वमुन्मीलितम् ।चैत्ररथं वैश्रवणोद्यानम् । तस्य प्रदेशान् । बहूनामुद्देश्यत्वाद्बहुवचनम् । यदसौ विविधभोगासादनक्षमांस्तांस्तान् प्रदेशान् चिरोत्कण्ठितो दिदृक्षति । सौराज्यरम्यानिति प्रसिद्धरम्याच्चैत्ररथादनूनत्वं द्योतयति । अत्र गन्तव्यविशेषसामर्थ्यादेकापरशब्दौ नियतार्थौ । अनुसन्धेयत्वाच्च नायकवृत्तान्तस्य पश्चान्निर्देशः । अत एवोत्तरत्र तमिति[1] नायकस्य परामर्श उपपन्नः ॥

पदा—इत्थमिति । अध्वनि दैवयोगात् इत्थं सख्यम् आसेदुषोः तयोः एकः चैत्ररथप्रदेशान् ययौ । अपरः विदर्भान् । चैत्ररथं वैश्रवणोद्यानम् । अस्योद्यानं चैत्ररथम्' इत्यमरः । तत्र ये ये प्रदेशाः चिरकालं चिन्तिताः, तांस्तान्ययावित्यर्थः । अपरस्तु विदर्भान्ययौ । अचिन्त्यहेतु । अचिन्तनीयं हि विधिविलसितमिति भावः । सौराज्यं सुराजत्वं सम्यक्पालनमिति यावत् । तेन रम्यान् । विदर्भा अपि वैश्रवणोद्यानेन तुल्या एवेति भावः ॥

तं तस्थिवांसं नगरोपकण्ठे
तदागमारूढगुरुप्रहर्षः ।
प्रत्युज्जगाम क्रथकैशिकेन्द्र-
श्चन्द्रं प्रवृद्धोर्मिरिवोर्मिमाली ॥ ६१ ॥

प्रका—तमिति ॥ नगरोपकण्ठ इति अनिमन्त्रितस्य परपुरप्रवेशानौचित्यात् । प्रहर्षशब्देन तदनुभावसम्पदाक्षिप्ता । यत्प्रतिबिम्बतयोपमाने प्रवृद्धोर्मित्वमुक्तम् । तदागमश्च विभावः । तदाक्षिप्तश्च सम्भ्रमादि व्यभिचारि । एषां संयोगाद्धर्षोऽभिव्यज्यते । ऊर्मिमालिनि प्रत्युद्गमनं जलवृद्धिः ॥

पदा—तमिति ॥ क्रथकैशिकेन्द्रः नगरोपकण्ठे तस्थिवांसं तं प्रत्युज्जगाम । नगरस्य राजधान्याः उपकण्ठे समीपे । तस्थिवांसं निमन्त्रणपुरःसरं पुरप्रवेशं कर्तुं पुरसमीपे स्थितमित्यर्थः । तस्यागमेनागमनेनारूढः प्रवृद्धः गुरुः प्रहर्षो यस्य । ऊर्मिमाली प्रवृद्धोर्मिः चन्द्रम् इव । ऊर्मिमाली समुद्रः । अत्र गुरुप्रहर्षत्वं प्रवृद्धोर्मित्वं च परस्परं बिम्बप्रतिबिम्बभावमनुभवतः । प्रत्युद्गमनमत्र जलवृद्धिः । उपमालङ्कारः ॥

1 तमिति निर्देश उपपन्नः ॥

प्रवेश्य चैनं पुरमग्रयायी
नीचैस्तथोपाचरदर्पितश्रीः ।
मेने यथा तत्र जनः समेतो
वैदर्भमागन्तुमजं गृहेशम् ॥ ६२ ॥

प्रका—प्रवेश्येति ॥ अग्रयायी पुरस्सरो भूत्वा । नीचैरिति। भृत्यवदित्यर्थः । अर्पितश्रीर्निवेदितराज्यसम्पत् । कोशगोष्ठागारादिष्वपि तदीयानेवाधिकृत्य स्वयं तटस्थवदास्त इत्यर्थः । अत एवाह — मेन इति । इयं चातिशयोक्तिः । तथा मननस्य सम्बन्धाभावेऽपि सम्बन्धोक्तेः ॥

पदा—प्रवेश्येति ॥ अग्रयायी एनं पुरं प्रवेश्य तथा नीचैः उपाचरत् च । अग्रयायी पुरस्सरो भूत्वेत्यर्थः । तथा वक्ष्यमाणप्रकारेण । नीचैः भृत्यवदित्यर्थः । उपाचरत् सम्मानितवान् । अर्पिता श्रीः राज्यसंपद्येन । सर्वासामपि निजसम्पदां तदधीनतामापादयन्नित्यर्थः । अत एवाह— मेन इति । यथा तत्र समेतः जनः वैदर्भम् आगन्तुम् अजं गृहेशं मेने । आगन्तुरतिथिः । मेनेऽकल्पयत् । तथा नीचैरुपाचरदिति पूर्वेणान्वयः । अत्र तथा मननसम्बन्धाभावेऽपि सम्बन्धोक्तेरतिशयोक्तिः ॥

तस्याधिकारपुरुषैः प्रणतैः प्रदिष्टां
प्राग्द्वारवेदिविनिवेशितपूर्णकुम्भाम् ।
रम्यां रघुप्रतिनिधिः स नवोपकार्यां[1]
बाल्यात्परामिव दशां मदनोऽध्युवास ॥ ६३ ॥

प्रका— एवं स्वीकृतोचितसत्कारस्यास्य स्वयंवरसमागतत्वात् ससैन्यस्य नगरे वस्तुमशक्यत्वाच्च इतरराजसाधारणं पुराद्बहिरुपकार्याप्रवेशमाह —तस्येति । अधिकारपुरुषैस्तदधिकृतसचिवैः । प्रणतैः प्रदिष्टां सप्रणामं निवेदिताम् इयं हि स्वामिनोऽर्थे विरचिता, एनामलङ्करोतु स्वामीति । प्रागित्यादि सकलोचितोपचारोपलक्षणम् । रघुप्रतिनिधिरिति चक्रवर्तिपुत्रे तावानादर

1 का ॥

उपपन्न इति भावः। नवशब्दः स्वयंवरप्रस्तावनिर्मितोपकार्या, न तु पूर्वसिद्धेति द्योतयितुमुपमानापेक्षया च प्रयुक्तः। उपमानं हि बाल्यात्परा दशा। सा च नवं यौवनम्। अत्र रम्यत्वमधिवासश्च सामान्ये। अधिवासं प्रति कर्मकर्त्रोरन्योन्यानुरूपत्वं व्यङ्ग्यम्। नन्वत्र धर्मन्यूनता दोषः उपमेये विशेषणयोराधिक्यात्। न। तयोरधिवासनिर्वाहकत्वात्। तादृश्यां ह्युपकार्यायामधिवासो युज्यते। उपमा चेयमनन्तरप्रस्तूयमानाभिलाषिकशृङ्गारस्य मार्गपरिशोधिका। यतो नायकस्यापि सैव वयोऽवस्था ॥

पदा—तस्येति ॥ सः रघुप्रतिनिधिः तस्य अधिकारपुरुषैः प्रदिष्टः नवोपकार्याम् अध्युवास। रघुप्रतिनिधी रघुपुत्रः। पराक्रमादिभिस्तत्तुल्य इत्यर्थः। अनेन चक्रवर्तिपुत्रत्वात्तादृशसम्मानयोग्यत्वमुक्तम्। तस्य वैदर्भस्य। अधिकारपुरुषैरमात्यैः। प्रदिष्टां निवेदिताम्। नवां स्वयंवरार्थं तदानीमेव रचिताम्। उपकार्यां राजगृहम्। 'राजवेश्मोपकार्या' इति यादवः। मदनः बाल्यात् परां दशाम् इव। बाल्यात्परा दशा यौवनम्। प्रणतैः सप्रणामप्रदिष्टामित्यर्थः। प्राग्द्वारे पूर्वद्वारे या वेदिः तस्यां विनिवेशितः पूर्णकुम्भो यस्याम्। सकलोपकरणोपेतामित्यर्थः ॥

तत्र स्वयंवरसमाहृतराजलोकं
कन्याललाम कमनीयमजस्य लिप्सोः।
भात्रावबोधकलुषा दयितेव रात्रौ
निद्रा चिरेण नयनाभिमुखी बभूव ॥ ६४ ॥

प्रका---अथ तमेव शृङ्गारमुपक्षिपति — तत्रेति ॥ तच्छब्दपरामर्शेन च रम्यत्वविशिष्टाया उपकार्याया उद्दीपनत्वेनोपयोग उक्तः। स्वयंवरे समाहृतः सन्निपातितो राजलोको येन। अनेन दुर्लभत्वं चिन्ताया विभाव उक्तः। कन्याललामेत्यभिलाषविभावः। ललामशब्दः श्रेष्ठार्थः। तिलकार्थो वा। 'ललामोऽस्त्री ललामापि प्रभावे पुरुषे ध्वजे। श्रेष्ठे भूषापुण्ड्रशृङ्गपुच्छचिह्नाश्वलिङ्गिषु' इति यादवप्रकाशः। कमनीयं बहुधा श्रुतकामनीयकम्। अजस्येत्यनुरूप एव तथाविधेऽस्याभिलाष इति द्योतयति। लिप्सोरित्यभिलाष उक्तः। भावोऽर्थादन्यस्यामनुरागः। तदवबोधनजातकोपकालुष्या पूर्वनायिकेव निद्रा चिरान्नयनगोचरतामवापेत्यर्थः। सापि तथा कलुषा सख्याद्यनुनयेनैव तथा भवतीति। निद्रा-

क्षयश्च चिन्तानुभावः। वितर्कादयश्चाक्षिप्ता व्यभिचारिणः। इत्थं परिपुष्टा चिन्ता शृङ्गारमुतम्भयति ॥

**पदा—तत्रेति** ॥ तत्र रात्रौ अजस्य निद्रा चिरेण नयनाभिमुखी बभूव। तत्रोपकर्यायाम्। तत्र हेतुः—कन्याललाम लिप्सोरिति। ललामशब्दः श्रेष्ठवाची। 'ललामोऽस्त्री ललामापि प्रभावे पुरुषे ध्वजे। श्रेष्ठे भूषापुण्ड्रशृङ्ग-पुच्छचिह्नाश्वलिङ्गिषु' इति यादवः। इदं हि कन्यारत्नमतिदुर्लभम्, तस्मान्मया लभ्यते वा न वा इत्यादिचिन्तया निद्रा चिरेणैव प्राप्तेत्यर्थः। भावावबोधकलुषा दयितेवेत्युपमा। भावोऽभिलाषः। अर्थादन्यस्यामिति लभ्यते। तस्याव-बोधेन कलुषा कोपकषायिता। अत्र निद्रायाः पूर्वनायिकात्वप्रतीतिः। सापि हि सखीभिरनुनीता चिरेणैव नयनपथमवतरति। स्वयंवरे समाहूतः सन्निपाति-तो राजलोको येन। अनेन दुर्लभत्वमुक्तम्। तच्च चिन्ताया विभावः। निद्रा-क्षयस्त्वनुभावः। अनेन वक्ष्यमाणस्य सम्भोगशृङ्गारस्य परिपोषो दर्शितः। 'न विना विप्रलम्भेन सम्भोगः पुष्टिमश्नुते' इत्युक्तत्वात् ॥

तं कर्णभूषणनिपीडितपीवरांसं
शय्योत्तरच्छदविमर्दकृशाङ्गरागम्।
सूतात्मजाः सवयसः प्रथितप्रबोधं
प्राबोधयन्नुषसि वाग्भिरुदारवाचः ॥ ६५ ॥

प्रका—इत्थं कथञ्चिल्लब्धनिद्रस्य सत एव प्रत्यूषेण जातमित्याह—**तमिति** ॥ शय्याया उत्तरच्छदेनोत्तरवाससा यो विमर्दस्तेन कृशः कण्ठमूल-कक्षवक्षःप्रभृतिकतिपयावयवलक्ष्योऽङ्गरागो यस्य। आभ्यां च विशेषणाभ्यां कुमारस्य ब्रह्मचर्यानुवृत्तिर्द्योतिता। भाविकं चालङ्कारः॥ एतदेव केचिदर्थ-व्यक्तिमाहुः। आत्मजशब्दः सवयस्त्वमुपपादयति। तच्च प्रीतेरङ्गम्। प्रथित-प्रबोधमित्यनेन राजोपचार इति तैस्तदाचरितम्। स तु यथाकालं प्रबुद्ध एवेति द्योत्यते। उदारवाचः प्रवाचः। 'उदारो महति ख्याते दानशौण्डविदग्धयोः' इति यादवः ॥

**पदा**—इत्थं कथञ्चिल्लब्धनिद्रस्य तस्य सद्य एव प्रत्यूषोऽपि जात इत्याह **—तमिति** ॥ सूतात्मजाः उषसि वाग्भिः तं प्राबोधयन्। सूता वैतालिकाः,

तेषामात्मजाः। अनेन राजात्मजप्रबोधनयोग्यतोक्ता। कर्णभूषणाभ्यां नितरां पीडितौ पीवरौ मांसलावंसौ यस्य। शय्याया उत्तरच्छदेनोत्तरवाससा यो विमर्दस्तेन कृशः कण्ठमूलादिकतिपयप्रदेशेषूपलक्ष्योऽङ्गरागो यस्य। आभ्यां विशेषणाभ्यामजस्य ब्रह्मचर्यानुवृत्तिर्द्योत्यते। सवयसोऽजेन समानवयसः। अनेन तदुक्तिश्रवणे प्रीतिरजस्य दर्शिता। प्रथितः प्रसिद्धः प्रबोधो जागरणं यस्य। अनेन राजोपचार इत्येव तेषां स्तुतिः. स तु यथाकालं प्रबुद्ध एवेति द्योत्यते। उदारवाचः उदारा विदग्धा वाग्येषाम्। 'उदारो महति ख्याते दानशौण्डविदग्धयोः' इति यादवः॥

रात्रिर्गता मतिमतां वर मुञ्च शय्यां
धात्रा द्विधैव ननु धूर्जगतो विभक्ता।
तामेकतस्तव बिभर्ति गुरुर्विनिद्र-
स्तस्या भवानपरधुर्यपदावलम्बी ॥ ६६ ॥

प्रका—रात्रिरिति॥ मतिः शास्त्रोपस्कृता बुद्धिः। तथाविधस्य तवास्मिन् काले कः स्वाप इति भावः। अत एव शय्याम्, न तु निद्राम्। मुञ्चेति प्राप्तकाले लोट्। शय्यामोचनं तव प्राप्तकालमित्यर्थः। तदेवोपपादयति—धात्रेति अनुल्लङ्घनीयाज्ञेन। द्विधेति राजयुवराजाधिकारभेदात्। धूर्भारः। पालनमित्यर्थः। ताम् इति। द्विधा विभक्ताम्। एकतः एकस्मिन् भागे। विनिद्रोऽप्रमत्तः। धुर्यो वोढा तस्य पदं स्थानं विषयमित्यर्थः। अवलम्बितुं भर्तुं शीलमस्येति॥

पदा—रात्रिरिति॥ मतिमतां वर रात्रिः गता। शास्त्रोपस्कृता बुद्धिर्मतिः तद्वतां वर। गता अवसिता। शय्यां मुञ्च। 'प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च' इति चकारात्प्राप्तकाले लोट्। शय्यां मोक्तुं कालः प्राप्त इत्यर्थः। धात्रा जगतः धूः द्विधा एव ननु विभक्ता। धूर्भारः। 'धूः स्याद्यानमुखे भारे' इति यादवः। पालनमिति यावत्। द्विधा राजयुवराजाधिकारभेदेनेति शेषः। तव गुरुः ताम् एकतः विनिद्रः बिभर्ति। तां धुरम्। एकतः एकस्मिन् भागे। राजोचित इति शेषः। विनिद्रोऽप्रमत्तः। भवान् तस्याः अपरधुर्यपदावलम्बी। धुर्यो वोढा। रक्षितेत्यर्थः। अपरस्य धुर्यस्य युवराजस्य पदं स्थानमवलम्बितुं शीलमस्येति तथा। एतादृशस्य भवतो नायं स्वापकालः। नापि दं... इत्यभिप्रायेण शय्यां मुञ्चेत्युक्तम्। न तु निद्रामिति॥

निद्रावशेन भवताप्यनवेक्षमाणा
पर्युत्सुकत्वमबला निशि खण्डितेव ।
लक्ष्मीर्विनोदयति येन दिगन्तलम्बी
सोऽपि त्वदाननरुचिं विजहाति चन्द्रः ॥ ६७ ॥

**प्रका— निद्रेति ।** निद्रावशेनेति स्त्र्यन्तरविधेयत्वं ध्वन्यते । भवता हेतौ तृतीया । यद्वा, 'प्रसितोत्सुकेति' परिव्यवहितस्यापि योगे तृतीया । अनवेक्षमाणा अनिच्छन्ती । खण्डिता भर्तुरन्यासङ्गमसहमाना । 'ज्ञातेऽन्यासङ्गविकृते खण्डितेर्ष्याकषायिता' इति तस्या लक्षणम् । लक्ष्मीः कमला । विनोदयति विनोदं करोति । दिगन्तलम्बीति रुचिहाने हेतुः । भवता कदाचिदप्यनाशङ्कितव्यळीकेनापि निद्राविधेयत्वात् यत्पर्युत्सुकत्वं जनितम्, तदसहमाना लक्ष्मीः निशि खण्डितेवाबला येन त्वन्मुखसदृशेन चन्द्रेण विनोदं करोति, सोऽपि त्वदाननसदृशीं शोभां त्यजति । तस्माद्दिनं देनापि शून्यामेनां त्यक्तनिद्रो मानयेति भावः । निद्रायमाणो हि निरीहत्वा लक्ष्मीमुपेक्षेतेति भावः । पर्युत्सुकत्वस्यासहनस्य विनोदकरणस्य चासम्भविनामध्यवसानादतिशयोक्तिः । एष एव समाध्यलङ्कार इत्यन्ये । निद्रावशेनेति समासोक्तिः । आभ्यामुपमोत्थानम् । लक्ष्मीरिति मुखकान्तिर्विवक्षितेति केचित्; तदसत्, पर्यायप्रक्रमभेदापत्तेः । तदा चैवं वाक्यं रचनीयम् । 'त्वदाननरुचिर्येन विनोदयति, सोऽपि; तां त्यजति इति । अनवेक्ष्यमाणेति पाठे भवताप्यनवेक्ष्यमाणा पर्युत्सुकत्वं येन विनोदयति इति योजनायां णिच उपसर्गस्य च वैयर्थ्यं यत्केनचिदुक्तम् , तदसत् , चन्द्रस्य कर्तृत्वविवक्षायां लक्ष्म्याः प्रयोजकत्वस्य सुघटत्वात् । तथा च भवभूतिः—'विरहिणि जने मूर्छां लब्ध्वा विनोदयति व्यथाम्' इति ॥

**पदा— निद्रावशेनेति ॥** निद्रावशेन भवता अपि पर्युत्सुकत्वं अनवेक्षमाणा लक्ष्मीः खण्डिता अबला इव निशि येन विनोदयति सः चन्द्रः अपि त्वदाननरुचिं विजहाति । निद्रावशेनेति वनितान्तरपराधीनत्वं ध्वन्यते । भवतेति हेतौ तृतीया । पर्युत्सुकत्वमौत्सुक्यम् । अनवेक्षमाणा अनिच्छन्ती वनितान्तरपराधीनेन भवता हेतुना यदात्मन औत्सुक्यं तदसहमानेत्यर्थः । अथवा, भवतेति 'प्रसितोत्सुकाभ्याम्' इति सप्तम्यर्थे तृतीया । भवति विषये यदौत्सुक्यं तदसहमानेत्यर्थः । [illegible] । लक्ष्मीवल्लभेन त्वया-

पीत्यपिशब्दार्थः। तेन चान्यासङ्गस्य पूर्वमनुत्पन्नत्वं ध्वन्यते। तेन च विषादाधिक्यम्। लक्ष्मीः कमला। खण्डिता भर्तुरन्यासङ्गमसहमाना। 'ज्ञातेऽन्यासङ्गविकृते खण्डितेर्ष्याकषायिता' इति दशरूपके। विनोदयति विनोदं करोति। त्वदाननस्य रुचिं शोभाम्। त्यजति। उत्सुको हि जनस्तत्सदृशेनान्येन चित्रादिना विनोदयति। इदानीं तु चन्द्रे त्वन्मुखसादृश्यमपि गतप्रायम्। तदियं केन विनोदं करिष्यति। तस्मान्निद्रामपहायैनामनुगृहाणेत्यर्थः। दिगन्ते पश्चिमदिग्भागे लम्बितुं शीलमस्येति तथा। अयं च रुचिहाने हेतुः। अत्र पर्युत्सुकत्वासहनत्वविनोदकरणानामसम्भविनामध्यवसानादतिशयोक्तिरलङ्कारः। निद्रावशेनेति समासोक्तिः। आभ्यामुपमोत्थानमिति तेषां सङ्करः॥

तद्वल्गुना युगपदुन्मिषितेन तावत्
सद्यः परस्परतुलामधिरोहतां द्वे।
प्रस्पन्दमानपरुषेतरतारमन्त-
श्चक्षुस्तव प्रचलितभ्रमरं च पद्मम् ॥ ६८ ॥

प्रका—तदिति॥ यत इयमुपच्छन्दनीया तस्मादित्यर्थः। वल्गुना 'वल्गु तु त्रिषु चारौ च' इति केशवः। युगपदुन्मिषितेनैककालोन्मेषेण। तावच्छब्दः क्रमं द्योतयति। युगपदुन्मेषेण तावत्परस्परसादृश्यमधिरोहताम्, उन्मेषानन्तरं तु दूराधिकं चक्षुरिति भावः। किञ्च किञ्च कथंभूतं वेत्याह—प्रस्पन्देति। अत्र तत्कालभाविप्रस्पन्दमानपरुषेतरतारत्वं प्रचलितभ्रमरत्वं च युगपदुन्मेषस्य चारुत्वं चक्षुःपद्मयोः परस्परसादृश्यं च प्रयोजयतः॥

पदा—तदिति॥ तत् तावत् द्वे वल्गुना युगपदुन्मिषितेन सद्यः परस्परतुलाम् अधिरोहताम्। तत् यस्मात्कारणात् लक्ष्मीरवश्यमनुरञ्जनीया, तस्मादित्यर्थः। तावच्छब्दः क्रमं द्योतयति। अधिरोहतां प्राप्नुवताम्। वक्ष्यमाणं द्वयमप्यादावेककालोन्मेषेण परस्परसादृश्यं तावत्प्राप्नोतु। उन्मेषानन्तरं तु चक्षुषोः गुणाधिक्यान्न परस्परतुलेति भावः। वल्गुना चारुणा। 'वल्गु तु त्रिषु चारौ च' इति केशवः। इदमपि सादृश्ये हेतुः। किं तद्वस्तुद्वयमित्यत्राह—प्रस्पन्दमानपरुषेतरतारं तव चक्षुः अन्तः प्रचलितभ्रमरं पद्मं च स्वापावसाने स्पन्दमानस्निग्धकनीनिकं तव चक्षुः निर्गमनत्वरयान्तर्भागे प्रचलितभृङ्गं पद्मं च॥

वृन्तश्लथं[1] हरति पुष्पमनोकहानां
संसृज्यते सरसिजैररुणांशुभिन्नैः ।
स्वाभाविकं परगुणेन विभातवायुः
सौरभ्यमीप्सुरिव ते मुखमारुतस्य ॥ ६९ ॥

प्रका—वृन्तेति ॥ वृन्तं प्रसवबन्धनम् । अनोकहानां वृक्षाणाम् । संसृज्यते । श्यन्विकरणोऽयं सृजतिर्दिवादिषु द्रष्टव्यः । अरुणोऽनूरुः । भिन्नैः विदळितैः । अत्रोत्प्रेक्षते—ईप्सुरिवेति । त्वन्मुखमारुतो हि स्वभावसुरभिः । तस्य तत्सुरभित्वमात्मनि परतः सङ्क्रमितेन गन्धगुणेन लिप्सन्निव वायुरेतदेतच्च करोतीत्यर्थः । अन्यच्छायायोनिश्चायमर्थः । अन्यश्च श्रीरामायणे श्लोकः— 'पद्मकेसरसंसृष्टो वृक्षान्तरविनिःसृतः । निश्वास इव सीताया वाति वायुर्मनोरमः ॥' इति । न चात्र पुरातनकविस्पृष्टार्थत्वाच्चमत्काराभावः, ध्वनिप्रभेदान्तरेणानुगृहीतत्वात् । तदुक्तम्— अतो ह्यन्यतमेनापि प्रकारेण विभूषिता । वाणी नवत्वमायाति पूर्वार्थान्वयवत्यपि' ॥ इति ॥

पदा—वृन्तेति ॥ विभातवायुः अनोकहानां वृन्तश्लथं पुष्पं हरति । अनोकहा वृक्षाः । 'वृक्षो महीरुहः शाखी विटपी पादपस्तरुः । अनोकहः कुजः सालः' इत्यमरः । वृन्तं प्रसवबन्धनम् । अरुणांशुभिन्नैः सरसिजैः संसृज्यते । अरुणोऽनूरुः । भिन्नैर्विदळितैः । संसृज्यते संसर्गं प्राप्नोति । श्यन्विकरणोऽयं सृजतिर्दिवादिषु द्रष्टव्यः । किमर्थमिदं करोतीत्यत्रोत्प्रेक्षामाह— परगुणेन ते मुखमारुतस्य स्वाभाविकं सौरभ्यम् ईप्सुरिवेति । परेषां पुष्पादीनां गुणेन गन्धगुणेन । ईप्सुर्लिप्सन्निव । रामायणप्रसिद्धश्चायमर्थः । 'पद्मकेसरसंसृष्टो वृक्षान्तरविनिःसृतः । निश्वास इव सीताया वाति वायुर्मनोरमः' ॥ इति ॥

ताम्रोदरेषु पतितं[2] द्रुमपल्लवेषु
निर्धौतहारगुलिकाविशदं हिमाम्भः ।
आभाति लब्धपरभागतयाधरोष्ठे
लीलास्मितं सदशनार्चिरिव त्वदीयम् ॥ ७० ॥

प्रका—ताम्रेति ॥ निर्धौता हारगुलिका मुक्तावलीमणिः तद्वद्विशदं धवळम् । अत्र हारशब्देन पङ्क्तिशो निवेशः सूचितः । विशेषणद्वयं

1 वृन्ताच्छ्लथम् ॥ 2 तरु ॥

सामान्यतयोपात्तम्। 'परभागो गुणोत्कर्षः' इति यादवः। स चात्र वर्णान्तरसन्निधानात्। लीलाशब्दः श्लाघ्यविशेषणम्। अथवा, रोषादीनसौम्यताहेतून् व्यावर्तयति। नन्वत्र वदनविकासविशेषलक्षणक्रियारूपस्य स्मितस्य सदशनार्चिष्ट्वेऽपि स्वयमसम्भवद्विशदत्वयोगस्य कथमुपमानत्वम्, कुतो वा दशनार्चिष एवोपमानत्वं नाङ्गीकृतम्। उच्यते—स्मितस्य हि धावल्यं कविव्यवहारप्रसिद्धम्[1]। यथा—'स्मितम्मुखेन्दोर्ज्योत्स्ना' इति। तत्र च मूलं दशनप्रभाभेदापचारः। तत्प्रसिद्ध्यनुसारेण चात्र स्मितस्य श्रुत्योपमानत्वम्। तच्च वस्तुपर्यालोचनया दशनार्चिषि सञ्चारणीयम्। अधरोष्ठे पतितं दशनार्चिरेवेति प्रतीतेः। यथा— जुहोतिगतो विधिर्दध्यादौ करणे सञ्चार्यते। स्मितस्य रूपादानेन दशनार्चिष आविर्भाव उपपादितः। ननु वचनभेदस्य कः परिहारः। अभिप्रायपरिज्ञानमेव। यत्र यत्र किसलये हिमाम्भो दृश्यते, तत्र तत्र स्मितधवळस्याधरोष्ठस्य प्रतीतिरौपमानिकी मे जायत इति हि वक्तुरभिप्रायः॥

पदा— ताम्रेति॥ ताम्रोदरेषु द्रुमपल्लवेषु पतितं हिमाम्भः लब्धपरभागतया अधरोष्ठे त्वदीयं सदशनार्चिः लीलास्मितम् इव आभाति। ताम्रमुदरमन्तर्भागो यस्य। लब्धः परभागो गुणोत्कर्षो येन। 'परभागो गुणोत्कर्षः' इति यादवः। स चात्र वर्णान्तरसन्निधानात्। अधरोष्ठे पतितमित्यनुषज्यते। सदशनार्चिः दन्तप्रभानुमिळितम्। लीलया स्मितं लीलास्मितम्। निर्धौता नितरामुन्मृष्टा हारगुळिका मुक्तावळीमणिः तद्वद्विशदम्। पङ्क्तितः सन्निविष्टदशनप्रभासादृश्यसिद्ध्यर्थं हारपदम्। यत्र यत्र किसलये प्रभातवेळायां हिमजलकणा उपलभ्यन्ते, तत्र तत्र स्मितविशददन्तच्छदोपमितिरस्माकं मनसि परिवर्तत इत्यर्थः॥

यावत्प्रतापनिधिराक्रमते न भानु-
रह्नाय तावदरुणेन तमो निरस्तम्।
आयोधनाग्रसरतां त्वयि वीर याते
किं वा रिपूंस्तव गुरुः स्वयमुच्छिनत्ति॥ ७१॥

प्रका— यावदिति। आक्रमते 'आङ उद्गमने' इत्यात्मनेपदम्। 'यावत्पुरा' इति लट्। यावदुद्गमिष्यतीत्यर्थः। प्रभातवर्णनं प्रस्तुतत्वान्नायक-

[1] व्यवहारसिद्धम्।

वृत्तान्तं प्रतिवस्तु करोति। आयोधनेति। अत्र यद्भृत्येनारुणेनैव तादृशं तमो निश्शेषितम्, तस्य भानोरुदेष्यतो युक्तमेव प्रतापनिधित्वमिति लोकदृष्ट्यनुसारेण प्रतापनिधिरिति विशेषणम्। एतच्च शब्दार्थयोः शक्त्या प्रतिवस्तुनाप्यन्वयमुपैति प्रतापनिधिस्तव गुरुः इति। 'प्रतापौ पौरुषातपौ' [इत्यमरः]॥

पदा—यावदिति॥ यावत् भानुः न आक्रमते तावत् अरुणेन अह्नाय तमः निरस्तम्। आक्रमते। 'आङ उद्गमने' इत्यात्मनेपदम्। 'यावत्पुरानिपातयोर्लट्' इति भविष्यदर्थे लट्। अरुणेन सूर्यसूतेन। 'द्राग्-झटित्यञ्जसाह्नाय' इत्यमरः। यावदादित्यो नोदेष्यति तावत्तद्भृत्येनारुणेनैव तिमिरं निःशेषीकृतम्। किं वा तत्राद्भुतमित्याह-वीर त्वयि आयोधनाग्रसरतां याते तव गुरुः स्वयं किं वा रिपून् उच्छिनत्तीति। वीराग्रेसरे भवति युद्धेष्वग्रसरत्व-मुपगते सति तव गुरुः स्वयमेव किं वा परानुन्मूलयति। प्रतापनिधिरित्युभयत्रापि योजनीयम्। 'प्रतापौ पौरुषातपौ' इत्यमरः। अत्र प्रभातवर्णनायाः प्रकृत-त्वान्नायकवृत्तान्तस्य प्रतिवस्तुत्वेनोपादानमित्यवसेयम्॥

**शय्यां जहत्युभयपक्षविनीतनिद्राः**
**स्तम्बेरमा मुखरशृङ्खलकर्षिणस्ते।**
**येषां विभान्ति तरुणारुणरागयोगाद्**
**भिन्नाद्रिगैरिकतटा इव दन्तकोशाः ॥ ७२ ॥**

प्रका—शय्यामिति॥ उभयपक्षविनीतनिद्रा इति प्रभाते प्रत्यासीदति शयितं गजमुत्थाप्यारोहैः पुनरपि परेण पक्षेण यच्छयनं कार्यते तदपि निवृत्तमिति द्योत्यते। यथाह माघकविः– 'गजपतिमधिरोहः पक्षकव्यत्ययेन' इति। शृ-ङ्खलकर्षिण इति। शृङ्खलशब्दोऽप्यस्ति। 'अथ शृङ्खले। अन्दुक' इत्यमर-सिंहवचनात्। दन्तकोशा इत्युपमा। भिन्नाद्रिगैरिकतटत्वस्य रूपकबाधनात्। कोशाः केतक्यादिमुकुलानि। एवं नयनानन्ददायिनः श्रियो निवासा विजय-कारिणस्तावदिमे तव द्रष्टव्या इति भावः॥

पदा— शय्यामिति॥ ते स्तम्बेरमा. शय्यां जहति। स्तम्बेरमा गजाः। उभाभ्यां पक्षाभ्यां पार्श्वभागाभ्यां विनीता परित्यक्ता निद्रा यैः।

1 उपयाति [1]

आधोरणाः प्रभातकाले प्राप्ते सति हि निद्राजाड्यनिवृत्त्यर्थं गजान् परिवृत्य शाययन्ति। यथाह माघः — 'गजपतिमधिरोहः पक्षकव्यत्ययेन' इति। मुखरं शृङ्खलं शृङ्खलां कर्षितुं शीलमेषामिति तथा। 'अथ शृङ्खले। अन्दुको निगळोऽस्त्री स्यात्' इत्यमरः। येषां दन्तकोशाः तरुणारुणरागयोगात् भिन्नाद्रिगैरिकतटाः इव विभान्ति। कोशा इव दन्ता दन्तकोशाः। केतक्यादिमुकुळसंस्थाना इत्यर्थः। दन्तेषु रक्ततरबालातपसंयोगाद्विदारितगिरिधातुप्रचुरतटा इव ते विभान्तीत्यर्थः। एते त्वया सत्वरं द्रष्टव्या इति भावः॥

दीर्घेष्वमी नियमिताः पटमण्डपेषु
निद्रां विहाय वनजाक्ष वनायुदेश्याः।
वक्त्रोष्मणा मलिनयन्ति पुरोगतानि
लेह्यानि सैन्धवशिलाशकलानि वाहाः ॥ ७३ ॥

प्रका—दीर्घेष्विति॥ नियमिता बद्धाः। पटमण्डपेषु पटमयेषु गृहेषु। 'मण्डपोऽस्त्री जनाश्रयः' इति तु नैघण्टुकाः। वनं जलम्। वनजं जलजम्। वनायुदेशोऽश्वाकरविशेषः। मलिनयन्ति। यथा स्वच्छं दर्पणादि वक्त्रोष्मणा मलिनं भवति, तथेदमपि। लवणविशेषः सैन्धवमत्यच्छतया मलिनं भवतीति भावः। लेह्यानीति। प्रातः सैन्धवलेहनमश्वानां बलकरमिति वदन्ति॥

पदा—दीर्घेष्विति॥ वनजाक्ष अमी दीर्घेषु पटमण्डपेषु नियमिताः वाहाः निद्रां विहाय पुरोगतानि लेह्यानि सैन्धवशिलाशकलानि वक्त्रोष्मणा मलिनयन्ति। वनजं जलजम्। एतद्दर्शनेनाक्षिसाफल्यं क्रियतामित्यर्थः। पटमयेषु मण्डपेषु गृहेषु नियमिता बद्धाः। वाहा अश्वाः। लेह्यानि लेहनयोग्यानि। अश्वानां प्रभाते सैन्धवलेहनं बलकरमिति प्रसिद्धिः। सैन्धवो लवणविशेषः। शिलावत्कठिनानि दर्पणवदतिस्वच्छानि सैन्धवशकलानि वदनमारुतोष्मणा मलिनीकुर्वन्तीत्यर्थः। वनायुरश्वाकरस्थानविशेषः। तदुद्भूतानामश्वानामुत्कर्षाधिक्यादित्थमुक्तम्॥

भवति विरळभक्तिर्म्लानपुष्पोपहारः
स्वकिरणपरिवेषोद्भेदशून्याः प्रदीपाः।
अयमपि च गिरं नस्त्वत्प्रबोधप्रयुक्ता-
मनुवदति शुकस्ते मञ्जुवाक्पञ्जरस्थः ॥ ७४ ॥

प्रका—भवतीति ॥ भक्तिर्भागो विन्यासविच्छित्तिः। तस्या विरळत्वे म्लानत्वं हेतुः। उपहारः पूजा। स च सामीप्याद्‌द्रव्यं लक्षयति। उपहृतपुष्पाणीत्यर्थः। परिवेषः परिवेष्टनं तस्योद्भेदः आविर्भावः तेन शून्याः। तत्काले निष्प्रभत्वात्॥

पदा—भवतीति ॥ म्लानपुष्पोपहारः विरळभक्तिः भवति। म्लानपुष्पोपहार इति विशेषणसमासः। उपहृतं पुष्पं पुष्पोपहारः। विरळा भक्तिः भागेन विन्यासो यस्य। प्रभाते मङ्गलार्थमङ्कणादावुपहृतानि कुसुमानि परिम्लानतया विरळविन्यासविशेषकौशलानि भवन्तीत्यर्थः। प्रदीपाः स्वकिरण-परिवेषोद्भेदशून्याः। भवन्तीति शेषः। स्वैरेव किरणैः प्रदीपानां यः परिवेषः परितो वेष्टनं तस्योद्भेद आविर्भावः तेन शून्याः। निष्प्रभा भवन्तीत्यर्थः। पञ्जरस्थः ते अयं शुकः अपि च त्वत्प्रबोधप्रयुक्तां नः गिरम् अनुवदति। रालावनालपन् भवतः पञ्जरशुकः त्वत्प्रबोधार्थमस्माभिः प्रयुक्तां गिरं तथैवोच्चारयति। मञ्जुवागित्यनेन तद्गिरां मनोहरत्वाधिक्यमुक्तम्। अस्मदुक्तमेव वाक्यं मनो-हरतया पठन्तीत्यर्थः॥

इति विरचितवाग्भिर्वन्दिपुत्रैः कुमारः
सपदि विगतनिद्रस्तल्पमुज्झांचकार।
मदपटु निनदद्भिर्बोधितो राजहंसैः
सुरगज इव गाङ्गं सैकतं सुप्रतीकः ॥ ७५ ॥

प्रका—इतीति ॥ सपदीति कथंचिल्लब्धनिद्रोऽपि यथाकालप्रबोधि-तासहकृतेन वन्दिवचसा झटिति प्रबुद्धवानित्यर्थः। सुप्रतीकः ऐशान्यां दिशि गजः। उपमया च दुराधर्षत्वाद्यसंख्यं ध्वन्यते। मदपटुकलहंससाम्येन वन्दिवाचो दिङ्मण्डलप्रसारित्वादि च॥

पदा—इतीति ॥ इति विरचितवाग्भिः वन्दिपुत्रैः बोधितः कुमारः सपदि विगतनिद्रः तल्पम् उज्झांचकार। 'उज्झ उत्सर्गे' इति धातुः। मदपटु निनदद्भिः राजहंसैः बोधितः सुप्रतीकः सुरगजः गाङ्गं सैकतम् इव। मदेन पटु विदग्धं मनोहरं यथा भवति तथा विनदद्भिः। सुप्रतीकः ऐशान्यां दिशि गजः। गाङ्गसान्निध्यसिद्ध्यर्थं तदुपादानम्। गङ्गापुळिनोपमया धावल्यादयो ध्वन्यन्ते। राज्ञः सुरगजोपमया [illegible] ऽर्थाः॥

अथ विधिमवसाय्य शास्त्रदृष्टं
दिवसमुखोचितमञ्चिताक्षिपक्ष्मा ।
कुशलविरचितानुकूलवेषः
क्षितिपसमाजमगात्स्वयंवरस्थम् ॥ ७६ ॥

प्रका — अथेति ॥ अवसाय्य समाप्य । कुशलेति । कुशलैः प्रसाधकैः विरचितः अभिजनयौवनचक्रवर्तिविभवविनयाद्यनुरूपो वेषः आकल्पो यस्य स तथा । स्वयंवरशब्देन तत्स्थानं लक्ष्यते । उत्तरसर्गार्थोपक्षेपश्चायम् ॥

इति रघुवंशव्याख्यायां पदार्थदीपिकायां पञ्चमः सर्गः ॥

पदा — अथेति ॥ अथ सः शास्त्रदृष्टं दिवसमुखोचितं विधिम् अवसाय्य स्वयंवरस्थं क्षितिपसमाजम् अगात् । शास्त्रेषु दृष्टम् । अत्र दृष्टमित्यनेन सम्यगवगमो लक्ष्यते । मीमांसानुसारेण निर्णीतमित्यर्थः । दिवसमुखं प्रभातं तत्रोचितं योग्यम् । अवसाय्य समाप्य । स्वयंवरशब्देन तत्स्थानं लक्ष्यते । अञ्चितानि सुन्दराण्यक्षिपक्ष्माण्यक्षिरोमाणि यस्य । 'पक्ष्माक्षिरोम्णि' इत्यमरः । अत्राङ्गैकदेशसौन्दर्योक्त्या सर्वाङ्गसौन्दर्यं लभ्यते । कुशलैर्विदग्धैः प्रसाधकजनैः विरचितः विनयाभिजात्ययौवनचक्रवर्तिविभवाद्यनुरूपो वेषः आकल्पो यस्य । उत्तरसर्गार्थोपक्षेपश्चानेन श्लोकेन कृत इति इत्यवसेयम् ॥

इत्यरुणगिरिनाथविरचितायां रघुवंशप्रकाशिकायां
पञ्चमः सर्गः ।

---

# षष्ठः सर्गः ।

स तत्र मञ्चेषु मनोज्ञवेषान्
सिंहासनस्थानुपचारवत्सु ।
वैमानिकानां मरुतामपश्य-
दा[1] कुष्टलीलान्नरलोकपालान् ॥ १ ॥

**प्रका—स इति ॥** मञ्चो दारुमयः प्रासादः । उपचारो वितानबन्ध-चामरवीजनादिः । वैमानिका विमानेन चरन्तः । मरुतो देवाः । आकुष्ट-लीलान्निन्दितविलासान् । 'लीला विलासक्रिययोः' इति सिंहः । सापेक्ष-त्वेऽपि गमकत्वात्समासः । निन्दितमरुद्विलासानित्यर्थः । स हि यथार्थदर्शि-त्वादनसूयत्वाच्च तथाविधां राजसंस[2]दमभिनन्दितवानित्यर्थः ॥

**पदा—स इति ॥** सः तत्र मञ्चेषु सिंहासनस्थान् नरलोकपालान् अप-श्यत् । तत्र स्वयंवरस्थाने । मञ्चेषु दारुमयेषु प्रासादेषु । नरलोकपालान् राज्ञः । मनोज्ञो मनोहरो वेषः आकल्पो येषाम् । उपचारो वितानादिः तद्वत्सु । वैमानिकानां मरुताम् आकुष्टलीलान् । विमानेन चरन्तीति वैमानिकाः । 'चरति' इति ठक् । आकुष्टा निन्दिता लीला विलासो यैः । 'लीला विलास-क्रिययोः' इत्यमरः । अत्र मरुच्छब्दस्य मरुतामिति पृथक्कृत्य वचने विलास-शब्दोऽपि मरुतां विलासान् इति पृथक्कृत्यैव वक्तव्यः । तथाप्युक्तिमात्रेणैव तदर्थ-स्फूर्तेर्विलासशब्दस्याकुष्टशब्देन सह समासः । आकुष्टमरुद्विलासानित्यर्थः । मञ्चानां विमानसादृश्यं राज्ञां देवसादृश्यं चास्य प्रतीतमभूदित्यर्थः ॥

रतेर्गृहीतानुनयेन कामं
प्रत्यर्पितस्वाङ्गमिवेश्वरेण ।
काकुत्स्थमालोकयतां नृपाणां
मनो बभूवेन्दुमतीनिराशम् ॥ २ ॥

---

1 कु । 2 प ।

प्रका — तेषां पुनः तद्दर्शने प्रतीतिप्रकारमाह— रतेरिति ॥ रतेरनुनयं गृहीतवतेत्यर्थः । प्रत्यर्पितस्वाङ्ककामोत्प्रेक्षायां रूपसम्पन्निमित्तम् । दूराधिकत्वप्रतीतिश्च फलम् ॥

पदा— इत्थमनसूयोरजस्य प्रतीतिमुक्त्वा सासूयानां राज्ञां प्रतीतिमाह—रतेरिति ॥ काकुत्स्थम् आलोकयतां नृपाणां मनः इन्दुमतीनिराशं बभूव । इन्दुमतीप्राप्त्याशापि नष्टेत्यर्थः । तत्र हेतुमाह—रतेरित्यादिना । रतेः गृहीतानुनयेन ईश्वरेण प्रत्यर्पितस्वाङ्गं कामम् इव । अत्रापि पूर्ववत्समासः । रतेरनुनयं गृहीतवतेत्यर्थः । अत्र तादृशकामोत्प्रेक्षायां रूपसम्पन्निमित्तम् ॥

वैदर्भनिर्दिष्टमथो कुमारः
क्लृप्तेन सोपानपथेन मञ्चम् ।
शिलाविभङ्गैर्मृगराजशाव-
स्तुङ्गं नगोत्सङ्गमिवारुरोह ॥ ३ ॥

प्रका—वैदर्भेति ॥ निर्दिष्टमिति । एतमारोहतु महाभाग इति । अनेन स्वयंवरप्रवृत्तौ तदागमप्रतीक्षोऽसौ वैदर्भ इति ध्वन्यते । क्लृप्तेन कुसुमप्रकरादिमता । उपमया च न केवलं वेषेण वपुषा च शृङ्गारः, वीरोऽपि परिपुष्ट इति ध्वन्यते ॥

पदा—वैदर्भेति ॥ अथो कुमारः क्लृप्तेन सोपानपथेन वैदर्भनिर्दिष्टं मञ्चम् आरुरोह । अथो राजदर्शनानन्तरम् । क्लृप्तेन रचितेन कुसुमविकिरणादिभिरलङ्कृतेनेत्यर्थः । वैदर्भेण निर्दिष्टमुक्तम् । स्वयमेवागत्य सविनयं निवेदितमित्यर्थः । मृगराजशावः शिलाविभङ्गैः तुङ्गं नगोत्सङ्गम् इव । मृगराजशावः प्रारब्धयौवनः सिंहशिशुः । शिलाविभङ्गैः सोपानक्रमेण विभक्ताभिः शिलाभिः । उत्सङ्गमधित्यकाम् । उपमया शृङ्गारवीरयोः परिपोषो ध्वन्यते ॥

परार्ध्यवर्णास्तरणोपपन्न-
मासेदिवान् रत्नवदासनं सः ।
भूयिष्ठमासीदुपमेयकान्ति-
र्मयूरपृष्ठाश्रयिणा गुहेन ॥ ४ ॥

1 सौ ।

**प्रका—परार्ध्येति ॥** 'मुख्यं परार्ध्यम्' इति हलायुधः। वर्णास्तरणं प्रशस्तवर्णोत्तरच्छदम्। रत्नवत्पादादिप्रत्युप्तरत्नम्। भूयिष्ठमित्युपमितिक्रिया-विशेषणम्। अत्यल्पमेवान्तरमिति भावः ॥

**पदा—परार्ध्येति ॥** परार्ध्यवर्णास्तरणोपपन्नं रत्नवत् आसनम् आसेदिवान् सः मयूरपृष्ठाश्रयिणा गुहेन भूयिष्ठम् उपमेयकान्तिः आसीत्। परार्ध्यं प्रशस्तम्। 'मुख्यं परार्ध्यं प्रवरं प्रशस्तम्' इति हलायुधः। प्रशस्तवर्णोत्तरच्छदमित्यर्थः। रत्नवत्प्रत्युप्तरत्नम्। मयूरस्य पृष्ठमाश्रयितुं शील-मस्येति तथा। आभ्यां विशेषणाभ्यामासनस्य मयूरेण वर्णसाम्यमुक्तम्। भूयिष्ठमत्यर्थम्। अत्यल्पमेव तयोरन्तरमिति भावः। षण्मुखत्वमात्रमेव तत्र निवृत्तमित्यर्थः ॥

**तासु श्रिया राजपरम्परासु**
**प्रभाविशेषोदयदुर्निरीक्षः[1]।**
**सहस्रधात्मा व्यचरद्[2]विभक्तः**
**पयोमुचां पङ्क्तिषु विद्युतेव ॥ ५ ॥**

**प्रका—तास्विति ॥** श्रिया कमलया। परम्परास्विति भासां बहुत्वे विवक्षिते बहुवचनम्। प्रभेति। परिशुद्धकुलशीलानां धर्मेण प्रजाः पालयतां राज्ञामसाधारणः कोऽपि यस्तेजोविशेषोदयः, तेन दुरालोक इत्यर्थः। सहस्रधा सहस्रप्रकारम्। देशादिभिन्नवेषादिभेदात्। आत्मा स्वरूपं समृद्धिशोभा-लक्षणम्। व्यचरत् विललास। विभक्तः तत्तदधिकरणैरवच्छिन्नः। श्रिया सहस्रधा विभक्तः तस्या एवात्मा तासु राजपरम्परासु व्यचरदित्यन्वयः। प्रतिमाचन्द्रस्येवाप्सु। श्रियस्सन्निधानं तेषु तेषु पुष्कलमेवासीदित्यर्थः। प्रभाविशेषोदयदुर्निरीक्षत्वादि विद्युदात्मन्यपि योजनीयम्। सोऽपि स्फुरणभेदैः सहस्रधा विभज्यते ॥

**पदा—तास्विति ॥** श्रिया सहस्रधा विभक्तः आत्मा तासु राजपर-म्परासु व्यचरत्। श्रिया कमलया। सहस्रधा बहुप्रकारम्। तत्तद्देशोचित-

1 क्षयः। 2 रूप।

वेषभूषणादिभेदेन बहुप्रकारं कृतविभाग इत्यर्थः । आत्मा स्वरूपम् । तस्या एवेत्यर्थादायाति । श्रीरेकैव तेषु राजसु तत्तदधिकरणभेदेन बहुधा दृष्टाभूदित्यर्थः । यथा घटसहस्रसञ्चितजलप्रतिबिम्बितश्चन्द्रमास्तेषु तेषु जलेषु पुष्कलो जलधर्मचलनाद्युपेतश्च दृश्यते, तथा श्रियः स्वरूपमपीति भावः । विद्युता पयोमुचां पङ्क्तिषु इव । विद्युता दीर्घह्रस्वादिभेदेन विभक्तो विद्युत एवात्मा जलधराणां पङ्क्तिष्विवेत्यर्थः । प्रभाविशेषोदयदुर्निरीक्ष इत्युभयविशेषणम् । धर्मेणैव प्रजापरिपालनं कुर्वतां परिशुद्धकुलाचाराणां राज्ञां यः प्रभाविशेषोदयः विशिष्टानां तेजसामाविर्भावः, तेन दुरालोकः । विद्युति तु स्पष्टोऽर्थः । तस्या अपि कपिलादिवर्णविशेषः संभवति । अत्रोपमा ॥

तेषां महार्हासनसंस्थिताना-
मुदारनेपथ्यभृतां स मध्ये ।
रराज भूम्ना रघुसूनुरेव
कल्पद्रुमाणामिव पारिजातः ॥ ६ ॥

प्रका—तेषामिति ॥ उदारं विदग्धम् । नेपथ्यमलङ्कारः । भूम्ना अतिशयेन । 'प्रकृत्यादिभ्य उपसंख्यानम्' इति तृतीया । यद्यपि सुरतरुषु पञ्चस्वेकः कल्पतरुनामा, तथापि ते कल्पद्रुमाणामिति । यथा 'छत्रिणो गच्छन्ति' इति । अवयवेन सर्वे तेन व्यपदिश्यन्ते । समुदायलक्षणा चैषा । फलं च सङ्कल्पपूरकत्वम् ॥

पदा—तेषामिति ॥ तेषां मध्ये सः रघुसूनुः एव भूम्ना रराज । कल्पद्रुमाणां भूम्ना अतिशयेन । 'प्रकृत्यादिभ्य उपसंख्यानम्' इति तृतीया । कल्पद्रुमाणां मध्ये पारिजातः इव । यद्यपि कल्पवृक्षः पञ्चसु देवतरुष्वेकः, 'पञ्चैते देवतरवो मन्दारः पारिजातकः । सन्तानः कल्पवृक्षश्च पुंसि वा हरिचन्दनम्' ॥ इत्यमरसिंहवचनात्, तथापि 'छत्रिणो गच्छन्ति' इति न्यायेन ते सर्वेऽपि कल्पवृक्षा इति व्यपदिश्यन्ते इति युक्तमत्र कल्पद्रुमाणामिति सामान्यवचनम् । कल्पवृक्षाणां मध्ये पारिजातस्य प्राधान्यं प्रसिद्धम् । अत एव

1 धाम्ना ॥ 

भगवता श्रीकृष्णेन तदाहरणम् । महार्हेषूत्कृष्टेष्वासनेषु संस्थितानाम् । उदारं विदग्धं नेपथ्यमलङ्कारं बिभ्रतीति तथा । अत्रासनानां वेदिबन्धसाम्यम्, अलङ्काराणां स्तबफलसाम्यं च प्रतीयते ॥

नेत्रव्रजाः पौरजनस्य तस्मि-
न्विहाय सर्वान्नृपतीन्निपेतुः ।
मदोत्कटे रेचितपुष्पवृक्षा
गन्धद्विपे वन्य इव द्विरेफाः ॥ ७ ॥

प्रका—अत एवाह—नेत्रेति ॥ रेचितं त्यक्तम् । 'रिच वियोजन-संपर्चनयोः' इति चुरादिषु द्रष्टव्यः । तथा च माघकाव्ये—'रेचितं परिजनेन महीयः, इति । वन्य इति । तत्सन्निधौ पुष्पवृक्षत्यागः प्रायो भवति ॥

पदा—उक्तमर्थं लोकप्रतीतिमुखेन दर्शयति—नेत्रेति ॥ पौरजनस्य नेत्रव्रजाः सर्वान् नृपतीन् विहाय तस्मिन् निपेतुः । नेत्रव्रजा नेत्रसमूहाः द्विरेफाः रेचितपुष्पवृक्षाः वन्ये मदोत्कटे गन्धद्विपे इव । रेचिताः परित्यक्ताः पुष्पसहिता वृक्षा यैः । 'रिच वियोजनसंपर्चनयोः' इति चौरादिको धातुर्द्रष्टव्यः । सामीप्यात्पुष्पवृक्षपरित्यागार्थं वन्यपदोपादानम् । मदादुत्कटे उद्भिन्नगण्डप्रदेशे । गन्धद्विपे मत्तहस्तिनि । न हि स्रुतमदजले करिणि प्रत्यासन्ने सति भ्रमराणां कुसुमोपेक्षा । अत्रोपमा ॥

अथ स्तुते वन्दिभिरन्वयज्ञैः
सोमार्कवंश्ये नरदेवलोके ।
संचारिते चागरुसारयोनौ
धूपे समुत्सर्पति वैजयन्तीम् ॥ ८ ॥

पुरोपकण्ठोपवनाश्रयाणां
कलापिनामुद्धतनृत्यहेतौ ।
प्रध्मातशङ्खे परितो दिगन्तां-
स्तूर्यस्वने मूर्छति मङ्गलार्थे ॥ ९ ॥



1 न्तीः ।

मनुष्यवाह्यं चतुरन्तयान-
मध्यास्य कन्या परिवारशोभि ।
विवेश मञ्चान्तरराजमार्गं
पतिंवरा क्लृप्तविवाहवेषा ॥ १० ॥

प्रका — अथ विशेषकेण स्वयंवरं प्रस्तौति— अथेति ॥ स्तुत इति । तेजःसंवर्धनाय तदानीं स्तुतिः । अन्वयज्ञैः तत्तदन्वयपूर्वपुरुषापदानपरम्पराणां लिखितपाठकैरित्यर्थः । सोमार्कवंश्य इति । नित्यापरोक्षनिरवधिप्रभावतेजोराशिद्वयप्रसूतत्वेन लोकोत्तरजन्मता ध्वन्यते । अत एवाह— नरदेवलोक इति। नराश्चामी देवाश्चेति । लोको जनसमूहः । ननु लोको जनपर्यायः। बाढम् । किन्तु, जनशब्दो जने जनतायां च वर्तते । सञ्चारिते प्रवर्तिते । अगरोः सारो योनिर्यस्य । धूम एव संस्कृतो धूपः । वैजयन्तीं पताकाम् । सृपेर्गत्यर्थत्वात्कर्मत्वम् । प्रध्मातो मुखमरुत्पूरितः शङ्खो यस्य । शङ्खध्वनिसहित इत्यर्थः । दिगन्तानिति । 'अभितः परितः' इत्यादिना द्वितीया । चतुरन्तयानं शिबिकाम् । परिवारेण परिजनेन शोभितुं शीलमस्येति। मञ्चेति । मञ्चाङ्क्तयोर्मध्यगतं राजमार्गम् । क्लृप्तविवाहवेषेति विभावतापोष उक्तः॥

पदा — अथ त्रिभिः श्लोकैर्विशेषकेण स्वयंवरं प्रस्तौति— अथेति ॥ अथ अन्वयज्ञैः वन्दिभिः सोमार्कवंश्ये नरदेवलोके स्तुते अगरुसारयोनौ सञ्चारिते धूपे वैजयन्तीं समुत्सर्पति मङ्गलार्थे तूर्यस्वने दिगन्तान् परितः मूर्छति च कन्या मनुष्यवाह्यं चतुरन्तयानम् अध्यास्य मञ्चान्तरराजमार्गं विवेश । अन्वयं वंशपरम्परां जानन्तीत्यन्वयज्ञाः । तत्तद्वंशजातपूर्वपुरुषापदानवेदिभिरित्यर्थः। वन्दिनो हि कविभिर्गद्यपद्यादिरूपेण विरचितं पूर्वराजचरितं पठित्वा तत्तदवसरेषु स्तुवन्ति । सोमार्कवंश्य इत्यनेन स्तुतेरपि सोमादर्काच्चारभ्य तत्तद्राजपर्यन्तं प्रवृत्तिः सूचिता । तत्तद्राजसमीपस्थैर्वन्दिभिः तत्तद्राजसमूहचरितेषु तादात्विकमुखप्रसादसिद्ध्यर्थं कन्याप्रलोभनार्थं च स्तुतेष्विरत्यर्थः । अगरोः सारः स्थिरांशो योनिर्यस्य । 'सारो बले स्थिरांशे च' इत्यमरः । सञ्चारिते प्रवर्तिते । धूम एव संस्कृतो धूप इत्युच्यते । वैजयन्ती ध्वजपटः तम् । समुत्सर्पति उद्ग-

1 श्र । 2 जनशब्दः 'लोकेषु भुवने जने' इत्यादिकोशगतजनशब्दः ।

च्छति। सृपेर्गत्यर्थत्वात्सकर्मकत्वम्। दिगन्तान् परितः। 'अभितः परितः' इत्यादिना द्वितीया। दिगन्तानां समन्तादित्यर्थः। मूर्छति वर्धमाने। 'मूर्छा मोहसमुच्छ्राययोः' इति धातुः। मनुष्यैर्वाह्यं वहनयोग्यम्। चतुरन्तयानं शिबिकाम्। मञ्चपङ्क्त्योर्मध्यगतं राजमार्गं विवेश। तूर्यस्वनं विशिनष्टि—पुरेति। पुरस्योपकण्ठे समीपे यदुपवनं तदाश्रितानां कलापिनां मयूराणां उद्धतस्य हर्षवशादुत्ताळस्य नृत्तस्य हेतौ। मेघध्वनिबुद्ध्या क्रीडामयूराणामपि नृत्तं तदा प्रवृत्तमित्यर्थः। प्रध्माता मुखमारुतापूरिताः शङ्खा यत्र। शङ्खनिनादमिळिते इत्यर्थः। चतुरन्तयानं विशिनष्टि—परिवारशोभीति। परिवारैः परिजनैः शोभितुं शीलमस्येति तथा। सकलपरिजनसहितमित्यर्थः। पतिंवरा पतिं वरितुमुद्युक्ता। क्लृप्तो विरचितो विवाहोचितो वेषो यस्याः॥

तस्मिन्विधानातिशये विधातुः
कन्यामये नेत्रशतैकलक्ष्ये[1]।
निपेतुरन्तःकरणैर्नरेन्द्रा
देहैः स्थिताः केवलमासनेषु ॥ ११ ॥

प्रक्रा—तस्मिन्निति॥ विधानातिशये सृष्टिकौशलपरकाष्ठायाम्। कन्यामये कन्यात्मनि। निपेतुरिति विभावतयोपयोग उक्तः। देहैरित्यादिना सकलस्य चैतन्यस्य तद्दर्शनोपक्षीणत्वं द्योत्यते॥

पदा—तस्मिन्निति॥ नरेन्द्राः विधातुः कन्यामये तस्मिन् विधानातिशये अन्तःकरणैः निपेतुः। कन्यामये कन्यास्वरूपे। विधानातिशये सृष्टिकौशले। अन्तःकरणैर्मनोभिः। निपेतुः परवशतया प्रापुः। नेत्रशतस्य नेत्रसमूहस्य एकलक्ष्ये एकस्मिन् केवले लक्ष्ये प्राप्यभूमौ। केवलं देहैः आसनेषु स्थिताः देहमात्रेणैव स्थिताः। सकलमपि चैतन्यं तद्दर्शनोपक्षीणमिति भावः॥

तां प्रत्यभिव्यक्तमनोरथानां
महीपतीनां प्रणयाग्रदूत्यः।
प्रवाळशोभा इव पादपानां
शृङ्गारचेष्टा विविधा बभूवुः ॥ १२ ॥

1 क्ष्ये।

प्रका—तामिति ॥ अभिव्यक्तमनोरथानामिति । स्वयंवरार्थागमननेपथ्यविरचनादिभिः स्फुटतद्विषयसङ्कल्पानाम्। प्रणयाग्रदूत्योऽभ्यर्थनाप्रथमदूत्यः । शृङ्गारचेष्टा इति । 'शृङ्गारो नाम विषयेषु यथास्वमिन्द्रियाणां प्रवृत्तावात्मनः सुखानुभवाभिमानः' इति भोजराजः । तत्कार्यरूपाश्चेष्टा इत्यर्थः । तत्कार्यत्वं च, तद्व्यभिचारिभूतचपलताकार्यत्वम् । 'मात्सर्यद्वेषरागाद्यैश्चापलं त्वनवस्थितिः' इति । 'आत्मप्रकाशनपरा चेष्टा चपलतोच्यते' इति[1] तु भोजः । दर्शनान्तरे तु, रतिरेव शृङ्गारशब्देन व्यपदिष्टा । उपमया च वसन्ततुल्यत्वं शृङ्गारस्य ध्वन्यते ॥

पदा—तामिति ॥ तां प्रति अभिव्यक्तमनोरथानां महीपतीनां विविधाः शृङ्गारचेष्टाः बभूवुः । अभिव्यक्तो मनोरथः सङ्कल्पो येषाम् । आगमननेपथ्यविधानसस्पृहावलोकनादिभिरतिस्फुटतद्विषयसङ्कल्पानामित्यर्थः । शृङ्गारस्य चेष्टाः शृङ्गारचेष्टाः । शृङ्गारकार्यभूताश्चेष्टा इत्यर्थः । शृङ्गारलक्षणे भोजराजः, 'शृङ्गारो नाम विषयेषु यथास्वमिन्द्रियाणां प्रवृत्तावात्मनः सुखानुभवाभिमानः' इति । शृङ्गारात्मकस्य सुखानुभवाभिमानस्य व्यभिचारिभूतायाश्चपलतायाः कार्यत्वाच्चेष्टायाः शृङ्गारचेष्टेति व्यपदेशः । धीरललितादिभेदेन नायकानां बहुविधत्वाच्चेष्टानां बहुविधत्वमित्यवसेयम् । अत्रोपमामाह — पादपानां प्रवाळशोभाः इव इति । यथा सहकारादिभेदेन बहुविधानां पादपानां बहुविधाः प्रवाळशोभा भवन्ति, तथेत्यर्थः । प्रवाळैः शोभाः प्रवाळशोभाः । प्रणयो याच्ञा । प्रार्थनेत्यर्थः । 'प्रणयास्त्वमी । विस्रम्भयाच्ञाप्रेमाणः' इत्यमरः । तस्याग्रदूत्यः प्रथमदूत्यः । याचनया आगमनं निवेदयन्त्य इत्यर्थः । अत्र वसन्ततुल्यत्वं शृङ्गारस्य द्योत्यते ॥

कश्चित्कराभ्यामुपगूढनाळ-
मालोलपत्राभिहतद्विरेफम् ।
रजोभिरन्तःपरिवेषबन्धि
लीलारविन्दं भ्रमयांचकार ॥ १३ ॥



1 इति भोजराजः ।

प्रका—ता एव चेष्टा दर्शयति—कश्चिदिति ॥ अन्तःपरिवेषबन्धीति। पत्रपुटरुद्धनिर्गमत्वात्परागैरन्तरेव बध्यमानमण्डलमित्यर्थः। अत्र प्रकरणे स्वभावोक्तिरलङ्कारः ॥

पदा—ता एवाह-कश्चिदित्यादिना ॥ कश्चित् कराभ्यां लीलारविन्दं भ्रमयांचकार। उपगूढनालमावृतनालप्रदेशम्। कराभ्यामित्यर्थात्। आलोलैर्भ्रमणवशाच्चञ्चलैः पत्रैर्दलैः अभिहतास्ताडिता द्विरेफा यस्मिन्। रजोभिः कुसुमपरागैः साधनैः। अन्तर्भागे परिवेषं बद्धुं शीलमस्येति तथा। पत्रपुटरुद्धनिर्गमत्वात्तदन्तर्भाग एव परितो वर्तमानत्वाच्च परिवेषबन्धनम्। अत्र प्रकरणे सर्वत्र स्वभावोक्तिरलङ्कारः ॥

विस्रस्तमंसादपरो विलासी
रत्नानुविद्धाङ्गदकोटिलग्नम्।
प्रालम्बमुत्कृष्य यथावकाशं
निनाय साचीकृतचारुवक्त्रः ॥ १४ ॥

प्रका—विस्रस्तमिति॥ प्रालम्बं कण्ठादृजुलम्बिनीं स्रजम्। 'प्रालम्बमृजुलम्बि स्यात्कण्ठात्' इति सिंहः। उत्कृष्य अङ्गदकोटेर्मोचयित्वा। यथावकाशं यथास्थानम्। साचीकृतं पार्श्वापवृत्तम् ॥

पदा—विस्रस्तमिति॥ अपरः विलासी अंसात् विस्रस्तं प्रालम्बम् उत्कृष्य यथावकाशं निनाय। प्रालम्बं कण्ठादृजुलम्बिनीं स्रजम्। 'प्रालम्बमृजुलम्बि स्यात्कण्ठात्' इति सिंहः। उत्कृष्याङ्गदकोटेर्मोचयित्वा। यथावकाशं यथास्थानम्। रत्नैरनुविद्धस्य सहितस्याङ्गदस्य कोटौ लग्नम्। साचीकृतचारुवक्त्रः पार्श्वापवर्तितललितवदनः ॥

आकुञ्चिताग्राङ्गुलिना ततोऽन्यः
किञ्चित्समावर्जितनेत्रशोभि।
तिर्यग्विसंसर्पिनखप्रभेण
पादेन हैमं विलिलेख पीठम् ॥ १५ ॥

1 भः।

प्रका---आकुञ्चितेति ॥ किञ्चिदिति । ईषदवाङ्मुखीकृतेन नेत्रेण शोभितुं शीलमस्येति क्रियाविशेषणम् ॥

पदा—आकुञ्चितेति ॥ ततः अन्यः हैमं पीठं पादेन विलिलेख । ततः इन्दुमतीदर्शनानन्तरम् । किञ्चित्समावर्जितनेत्रशोभीति क्रियाविशेषणम् । ईषदवाङ्मुखीकृतेन नेत्रेण शोभितुं शीलमस्येति तथा । आकुञ्चिता वक्रीकृता अग्राङ्गुलिरङ्गुल्यग्रम् अर्थादङ्गुष्ठाग्रं यस्य । लेखनसौकर्यार्थं चेदं विशेषणम् । तिर्यग्विसंसर्पिणी नखप्रभा नखकान्तिर्यस्य । यथास्थानावस्थाने हि नखप्रभाया ऊर्ध्वविसर्पणं भवति । आकुञ्चिताग्रत्वे तु तिर्यग्विसर्पणमिति भावः ॥

निवेश्य वामं भुजमासनार्धे
तत्संनिवेशादधिकोन्नतांसः ।
कश्चिद्विवृत्तत्रिकभिन्नहारः
सुहृत्समाभाषणतत्परोऽभूत् ॥ १६ ॥

प्रका—निवेश्येति ॥ वाममिति । दक्षिणस्य ताम्बूलग्रहणादिष्वधिकाराद्वामस्यैव देहावष्टम्भार्थं निवेशनं सम्भवि । विवृतात्त्रिकाद्भिन्नः स्रस्तो हारो यस्य स तथा । त्रिकं कण्ठबहिर्भाग इति चोपदेशः । प्रमाणं तु मृग्यम् । 'पृष्ठवंशाधरे त्रिकम्' इति सिंहः । अश्वावयवेषु च त्रिकशब्दः पृष्ठवंशाधोभागे प्रसिद्धः । तद्विवृत्तावपि हारस्य स्वस्थानच्युतत्वं भवति ॥

पदा—निवेश्येति ॥ कश्चित् वामं भुजम् आसनार्धे निवेश्य सुहृत्समाभाषणतत्परः अभूत् । वामं भुजमासनैकदेशे देहावष्टम्भार्थं निवेश्य दक्षिणहस्तेन सुहृदमाहूय किमपि वक्तुमारब्धवानित्यर्थः । दक्षिणहस्तस्य ताम्बूलग्रहणादिष्वधिकृतत्वाद्वामं भुजमित्युक्तम् । तस्य वामभुजस्य संनिवेशात्पीठदेशनिवेशनादधिकोन्नतः पूर्वावस्थातः किञ्चिदधिकमुन्नतोऽसो वामांसो यस्य । पुंसामंसस्य हि स्वत एवौन्नत्यम् । सुहृत्संभाषणार्थं मुखविवर्तनवशाद्विवृतात्त्रिकात्कण्ठबहिर्भागाद्भिन्नः स्रस्तो हारो यस्य । 'त्रिकं कण्ठबहिर्भाग इत्युपदेशः' इत्यरुणाचलनाथः ॥

विलासिनीविभ्रमदन्तपत्र-
मापाण्डरं[1] केतकबर्हमन्यः ।
प्रियानितम्बोचितसंनिवेशै-
र्विपाटयामास युवा नखाग्रैः ॥ १७ ॥

प्रका—विलासिनीति ॥ विभ्रमदन्तपत्रं तद्योग्यमित्यर्थः । उचितो योग्यः संनिवेशः संस्थानम् । तथा संकल्पितसंस्थानैरित्यर्थः । युवा युवत्वाभिमानी ॥[2]

पदा—विलासिनीति ॥ अन्वयः युवा नखाग्रैः केतकबर्हं विपाटयामास । युवा युवत्वाभिमानी । केतकस्य बर्हं दळम् । 'दळेऽपि बर्हम्' इत्यमरः । अलङ्कारार्थं हस्ते धृतं केतकदळं नखाग्रैः पाटितवानित्यर्थः । विलासिनीनां विभ्रमेण क्रियमाणं यद्दन्तपत्रं तद्विधानयोग्यम् । कर्णालङ्कारार्हमित्यर्थः । आपाण्डरमीषत्पाण्डरवर्णम् । प्रियाया नितम्बे उचितो योग्यः संनिवेशः संस्थानविशेषो येषाम् । तथा कल्पितसंनिवेशैरित्यर्थः ॥

कुशेशयाताम्रतलेन कश्चि-
त्करेण रेखाध्वजलाञ्छनेन ।
रत्नाङ्गुलीयप्रभयानुविद्धा-
नुदीरयामास सलीलमक्षान् ॥ १८ ॥

प्रका—कुशेशयेति ॥ अक्षान् द्यूतशलाकाः । अत्र श्लाघ्यविशेषणयोग उदात्तम् ॥

पदा—कुशेशयेति ॥ कश्चित् करेण अक्षान् सलीलम् उदीरयामास । अक्षान् द्यूताङ्गानि द्यूतशलाका इत्यर्थः । 'अथाक्षमिन्द्रिये ना द्यूताङ्गे' इत्यमरः । सलीलमिति क्रियाविशेषणं सविलासम् । उदीरयामास चिक्षेप । कुशेशयं रक्तपङ्केरुहमित्यर्थात् । तद्वदाताम्रं तलं यस्य । रेखाध्वजलाञ्छनेन रेखारूपध्वजचिह्नेन । करविशेषणाभ्यां विशिष्टपुरुषत्वमुक्तम् । रत्नमयानामङ्गुलीयानां प्रभया अनुविद्धान् सहितान् । अत्र श्लाघ्यविशेषणयोगादुदात्तमलङ्कारः ॥

---

1 पण्डु । 2 इतःपरं 'बर्हं दलम् । 'दलेपि बर्हम्' इति सिंहः' इति क्वचिदधिकः पाठः ।

कश्चिद्यथाभागमवस्थितेऽपि
स्वसंनिवेशाद्व्यतिलङ्घिनीव ।
वज्रांशुगर्भाङ्गुलिरन्ध्रमेकं
व्यापारयामास करं किरीटे ॥ १९ ॥

प्रका—कश्चिदिति ॥ स्वसंनिवेशात् स्वस्थानात् । व्यतिलङ्घिनीव व्यतिलङ्घनाद्धेतोरिवेत्यर्थः ॥

पदा—कश्चिदिति ॥ कश्चित् एकं करं किरीटे व्यापारयामास । यथाभागम् अवस्थिते अपि स्थानमनतिक्रम्यावस्थितेऽपि । स्वस्य संनिवेशात् स्थानात् व्यतिलङ्घितुमतिक्रमितुं शीलमस्येति तथा । व्यतिलङ्घनाद्धेतोरिवेत्यर्थः । रत्नांशवो रत्नप्रभा गर्भेऽन्तर्भागे येषां तथाविधान्यङ्गुलिरन्ध्राणि यस्य । अङ्गुलिरन्ध्रप्रसृमररत्नकिरणमित्यर्थः ॥

ततो नृपाणां श्रुतवृत्तवंशा
पुंवत्प्रगल्भा प्रतिहाररक्षी ।
प्राक्संनिकर्षं मगधेश्वरस्य
नीत्वा कुमारीमवदत्सुनन्दा ॥ २० ॥

प्रका—तत इति ॥ नृपाणां श्रुतवृत्तवंशेति पुंवत्प्रगल्भेति च वक्ष्यमाणप्रकरणघटनार्थम् । प्रतिहाररक्षीति च तद्भावे हेतुः । स हि तथाविधो ह्यधिकारः । प्रतिहारो द्वारम् । 'स्त्रीद्वार्द्वारं प्रतीहारः' इति सिंहः । तं रक्षतीति प्रतिहाररक्षी । 'कर्मण्यण्' इत्याणि ङीप् । प्रागिति मञ्चक्रमेण ॥

पदा—तत इति ॥ ततः सुनन्दा प्रतिहाररक्षी कुमारीं प्राक् मगधेश्वरस्य संनिकर्षं नीत्वा अवदत् । सुनन्देति नाम । प्रतिहारो द्वारम् । 'स्त्रीद्वार्द्वारं प्रतीहारः' इत्यमरः । तं रक्षतीति प्रतिहाररक्षी । 'कर्मण्यण्' । 'टिड्ढाणञ्' इत्यादिना ङीप् । प्राक् प्रथमम् । मञ्चक्रमेणेत्यर्थः । मगधेश्वरो मगधाधिपः । नृपाणां श्रुतवृत्तवंशा श्रुतानि वृत्तानि चरित्राणि वंशाश्च यया । 'वृत्तं पद्ये चरित्रे च' इत्यमरः । पुंवत् प्रगल्भा पुरुषवत् प्रागल्भ्यवती । अत्र नृपवंशःवृत्तश्रवणे प्रागल्भ्ये च राज्ञः प्रतिहाररक्षणं हेतुः । तत्र हि सर्वे राजानस्समापतन्ति तत्सम्भाषणं च जायते ॥

असौ शरण्यः शरणोन्मुखाना-
मगाधसत्त्वो मगधप्रतिष्ठः ।
राजा प्रजारञ्जनलब्धवर्णः
परंतपो नाम यथार्थनामा ॥ २१ ॥

प्रका—असाविति ॥ शरण्यः शरणं भवितुमर्हः । अनेन रक्षाशक्तत्वं दयापरत्वं चाक्षिप्यते। शरणोन्मुखानामित्यनेनापकारिणः प्रत्यपि शरण्यत्वमुक्तम्। अगाधसत्त्वो गम्भीरस्वभावः । सोऽपि त्वदनुरागादीदृशीं दशामुपनीत इति व्यज्यते । मगधाः प्रतिष्ठा आस्पदं यस्य स तथा । लब्धवर्णो विचक्षणः । अत एवास्यान्वर्थो राजशब्द इति भावः । परंतपः 'द्विषत्परयोस्तापेः' इति खच् । 'अरुर्द्विषदजन्तस्य मुम्' इति मुमागमः । 'खचि ह्रस्वः'। इति ह्रस्वः। 'णेरनिटि' इति णिलोपः । नाम प्रकाशे । यथार्थनामा पित्रा कृतस्य रूढस्यास्य नाम्नो यौगिकत्वमप्येष सम्पादितवानित्यर्थः । अत्र दयाधर्मयुद्धवीराणां परिपोषो दर्शितः ॥

पदा —असाविति ॥ असौ परंतपः नाम राजा । परंतप इति प्रसिद्धः । शरणोन्मुखानां शरण्यः । शरणं रक्षितारं प्रति उन्मुखानामभिमुखानाम् । त्वमेव शरणमित्यभिमुखागतानामित्यर्थः । शरण्यः शरणं भवितुमर्हः । अपकारिणामपि शरणागतानां रक्षितेत्यर्थः । अगाधसत्त्वः गम्भीरस्वभावः । मगधा मगधविषयाः प्रतिष्ठा आस्पदं यस्य । 'प्रतिष्ठा कृत्यमास्पदम्' इत्यमरः । प्रजानां रञ्जने लब्धवर्णः । 'लब्धवर्णो विचक्षणः' इत्यमरः । अस्यैव राजशब्दो यथार्थ इत्यर्थः । यथार्थनामा यथार्थमन्वर्थं नाम यस्य। परांस्तापयतीति परंतपः । 'द्विषत्परयोस्तापेः' इति खच् । 'अरुर्द्विषत्' इत्यादिना मुम् । 'खचि ह्रस्वः' इति ह्रस्वः । 'णेरनिटि' इति णिलोपः । पित्रा कृतस्य रूढिप्रधानस्य नाम्नः स्वशक्त्यैवान्वर्थत्वमप्ययं संपादितवानित्यर्थः ॥

कामं नृपाः सन्तु सहस्रशोऽन्ये
राजन्वतीमाहुरनेन भूमिम् ।
नक्षत्रताराग्रहसंकुलापि
ज्योतिष्मती चन्द्रमसैव रात्रिः ॥ २२ ॥

प्रका—काममिति ॥ कामंशब्दोऽनुमतौ। राजन्वतीं शोभनराजिकाम्। नक्षत्राण्यश्विन्यादयः, तारा इतराः, ग्रहा भौमादयः। ज्योतिष्मती प्रशस्तबहुतरसातिशयतेजोयुक्ता। अनेन सकलाभिकामिकगुणयोगो दर्शितः ॥

पदा—काममिति ॥ अन्ये सहस्रशः नृपाः सन्तु कामम्। कामशब्दोऽनुमतौ। अन्ये नृपाः सन्तु का हानिरित्यर्थः। अनेन भूमिं राजन्वतीम् आहुः। शोभनराजयुक्तामाहुः। 'राजन्वान् सौराज्ये' इति निपातः। 'सुराज्ञि देशे राजन्वान्' इत्यमरः। रात्रिः नक्षत्रताराग्रहसंकुला अपि चन्द्रमसा एव ज्योतिष्मती। भवतीति शेषः। नक्षत्राण्यश्विन्यादीनि, तारा इतरनक्षत्राणि, ग्रहा भौमादयः, तैः संकुला व्याप्तापि। 'संकीर्णं संकुलाकीर्णम्' इत्यमरः। ज्योतिष्मती प्रशस्तबहुतरसातिशयतेजोयुक्ता। अनेनाभिगम्यगुणयोगो दर्शितः। अत्र प्रतिवस्तूपमा ॥

क्रियाप्रबन्धादयमध्वराणा-
मजस्रमाहूतसहस्रनेत्रः।
शच्याश्चिरं पाण्डुकपोललम्बा—
न्मन्दारशून्यानलकांश्चकार ॥ २३ ॥

प्रका—क्रियेति ॥ क्रियाप्रबन्धोऽनुष्ठानपरम्परा। अत्र कपोलपाण्डिम्ना, लम्बालकत्वेन, माल्यवर्जनेन चानुभावैरभिव्यक्तः प्रवासविप्रलम्भः प्रकृते धर्मवीरेऽङ्गतामुपैतीति रसवदलङ्कारता। यथाह ध्वनिकारः—'प्रधानेऽन्यत्र वाक्यार्थे यत्राङ्गं तु रसादयः। काव्ये तस्मिन्नलङ्कारो रसादिरिति मे मतिः ॥' इति ॥

पदा—क्रियेति ॥ अयं शच्याः अलकान् चिरं पाण्डुकपोललम्बान् मन्दारशून्यान् चकार। पाण्डौ कपोले लम्बन्त इति पाण्डुकपोललम्बाः तान्। प्रसाधनार्थं निधातव्यैर्मन्दारैः कल्पवृक्षपुष्पैः शून्यान्। इन्द्रविरहादलङ्काररहितानित्यर्थः। तत्र हेतुः—क्रियेत्यादि। अध्वराणां क्रियाप्रबन्धात् क्रियाणां प्रबन्धादनुबन्धात्। अजस्रं नियमेन। आहूतः सहस्रनेत्रो येन। अत्र कपोलपाण्डिमादिभिरनुभावैरभिव्यक्तः प्रवासविप्रलम्भः प्रकृतस्य धर्मवीरस्याङ्गत्वमुप-

यातीति रसवदलङ्कारता। अत्र ध्वनिकारः—'प्रधानेऽन्यत्र वाक्यार्थे यत्राङ्गं तु रसादयः। काव्ये तस्मिन्नलङ्कारो रसादिरिति मे मतिः,।' इति॥

अनेन चेदिच्छसि गृह्यमाणं
पाणिं वरेण्येन कुरु प्रवेशे।
प्रासादवातायनसंश्रितानां
नेत्रोत्सवं पुष्पपुराङ्गनानाम् ॥ २४ ॥

**प्रका—अनेनेति**॥ प्रवेशे पुरप्रवेशसमये। पुष्पपुरं पाटलिपुत्रम्। ननु नेत्रोत्सवमिच्छसि चेदनेनात्मनः पाणिं ग्राहयेति कार्यक्रमेण वक्तव्यम्। सत्यम्। किं तु, प्रकृताया वचनव्यक्तेरयमभिप्रायः—केवलं पाणिग्रहणमेवेष्टव्यमन्यत्तु तन्नान्तरीयकतया सिद्ध्यतीति॥

**पदा—अनेनेति**॥ त्वम् अनेन पाणिं गृह्यमाणम् इच्छसि चेत् प्रवेशे पुष्पपुराङ्गनानां नेत्रोत्सवं कुरु। प्रवेशे पुरप्रवेशसमये। पुष्पपुरं पाटलिपुत्रपुरम्। वरेण्येन श्रेष्ठेन। प्रासादे यानि वातायनानि तानि संश्रितानाम्॥

एवं तयोक्ते तमवेक्ष्य किञ्चि-
द्विस्रंसिदूर्वाङ्कमधूकमाला।
ऋजुप्रणामक्रिययैव तन्वी
प्रत्यादिदेशैनमभाषमाणा ॥ २५ ॥

**प्रका—एवमिति**॥ एवंशब्देन गुणप्रशंसाप्रकार उक्तः। अवेक्ष्य सबहुमानमालोक्य। किंचिदित्यादि प्रणामक्रियास्वभावोक्तिः। मधूकधारणं सौभाग्याय। अथवा प्रतिसरवच्छास्त्रीयम्। तथा शाम्बलयगृह्ये—'मधुमतीरोषधीः' इति, 'मधूकानि बध्नाति' इति। ऋजुशब्दो वरबुद्ध्यभावाद्विलासप्रणामनिवृत्त्यर्थः। तथा च प्रयोगान्तरम्—'उमां स पश्यन्नृजुनैव चक्षुषा' इति। अभाषमाणेति ग्राम्यत्वं परिहृतम्। अत्र प्रणामः कुलकन्यकाचारः। प्रत्यादेशस्य तु भिन्नरुचित्वं भवितव्यता चोत्तरत्र वक्ष्यमाणावुभावपि हेतू अनुसन्धेयौ॥

**पदा**--**एवमिति** ॥ तन्वी तया एवम् उक्ते तम् अवेक्ष्य अभाषमाणा ऋजुप्रणामक्रियया एव एनं प्रत्यादिदेश। सुनन्दया तस्य समस्तेषु गुणगणेषु वर्णितेषु सा बाला तं सगौरवमवलोक्य किंचिदप्यनालपन्ती ऋज्वा विलासशून्यया प्रणामक्रिययैव प्रत्यादिष्टवती। नायमस्माकं वर इति ख्यापितवतीत्यर्थः। मनसि वरबुद्धौ जातायां हि सविलासानि चेष्टितानि भवन्ति। उक्तं च कुमारसम्भवे— 'उमां सपश्यन्नृजुनैव चक्षुषा' इति। प्रणामार्थमवनते शिरसि किञ्चिद्विस्रंसिनी लम्बनशीला दूर्वाङ्का मधूकमाला यस्याः। अत्र प्रणामस्वभावोक्तिः। मधूकधारणं शास्त्रीयम्। 'मधूकानि बध्नाति' इति शाम्बल्यगृह्यवचनात् ॥

तां सैव वेत्रग्रहणे नियुक्ता
राजान्तरं राजसुतां निनाय।
समीरणोत्थेव तरङ्गरेखा
पद्मान्तरं मानसराजहंसीम् ॥ २६ ॥

**प्रका**—**तामिति** ॥ सैवेति सुनन्दाया इन्दुमतीबुध्यनुसारं द्योतयति। अत्र समीरणोत्थत्वं स्वामिनियोगस्य मानसं राज्ञश्च प्रतिबिम्बतयोपात्तम्। अत्रोपमेयवाक्यार्थे पदार्थानां परस्परानुरूपता तथाभूतपदार्थकेनोपमानवाक्यार्थेन द्योत्यते। एवं सर्वत्र वाक्यार्थोपमायां किञ्चिदर्थगतं प्रतीयमानं सामान्यं द्रष्टव्यम् ॥

**पदा**—**तामिति** ॥ वेत्रग्रहणे नियुक्ता सा एव तां राजसुतां राजान्तरं निनाय। या पूर्वं मगधराजगुणप्रशंसापरा सैव तां तस्मिन्ननुरक्तामवलोक्य राजान्तरं प्रापयामास। तन्मनोनुकूला हि सेत्यर्थः। समीरणोत्था तरङ्गरेखा मानसराजहंसीं पद्मान्तरम् इव। अत्र समीरणोत्थत्वं स्वामिनियोगस्य प्रतिबिम्बत्वेनोक्तम्। मानसं तु राज्ञो वैदर्भस्य। यथा राजहंसीपद्मयोः परस्परानुगुण्यं तथेन्दुमतीराज्ञोरपीत्युपमया ध्वन्यते ॥

जगाद चैनामयमङ्गनाथः
सुराङ्गनाप्रार्थितयौवनश्रीः।
विनीतनागः किल सूत्रकारै-
रैन्द्रं पदं भूमिगतोऽनुभुङ्क्ते[1] ॥ २७ ॥

1 पि ॥

प्रका—जगादेति ॥ सुराङ्गनेति । 'अङ्गराजस्त्विन्द्रसहायकार्थं दिवगतः । तत्र तमकामयन्ताप्सरसः' इति हस्तिनते श्रूयते । विनीतनागः शिक्षितगजः । किलेत्यैतिह्ये । सूत्रकाराः पालकाप्यराजपुत्रमृगशर्मादयो गजशास्त्रप्रवक्तारो महर्षयः । अत्र पालकाप्ये श्रुता कथा लिख्यते—'अङ्गराजः प्रथममङ्गदेशे कुतोऽपि शापाद्दिवोवतीर्णमृषिणा पालकाप्येन पालितं दिग्गजानां कुलमालोक्य विस्मितस्तद्ग्रहणोत्सुकः स्वयमशक्तः सन्निन्द्रमुपेत्य तदनुज्ञातैर्मृगशर्मादिभिर्महर्षिभिः प्रतिनिवृत्य तैस्तद्गजकुलं ग्राहयित्वा शास्त्राणि कारयित्वा च शिक्षयामास । ततःप्रभृति पृथिव्यां गजसन्तानः प्रवर्तते' इति । सुराङ्गनाप्रार्थितयौवनत्वमृषिसेव्यत्वं च ऐन्द्रं पदं विवक्षितम् ॥

पदा—जगादेति ॥ एनां जगाद च । किमित्यत्राह—अयमित्यादिना । अयम् अङ्गनाथः अङ्गविषयाणामधिपतिः । सुराङ्गनाभिः प्रार्थिता यौवनश्रीर्यौवनशोभा यस्य । 'अङ्गराजं बलारातिसहायार्थं दिवं गतम् । अकामयन्ताप्सरसो महावीर्यं महाद्युतिम् ॥' इति हस्तिशास्त्रप्रसिद्धा कथानेनोक्ता । सूत्रकारैः विनीतनागः किल । सूत्रकाराः पालकाप्यादयो गजशास्त्रप्रवक्तारो महर्षयः तैः कर्तृभिः विनीता शिक्षिता गजा यस्य । किलेत्यैतिह्ये । अत्र पालकाप्ये श्रुता कथा लिख्यते—'भुवं केनापि शापेन संप्राप्ताः किल दिग्गजाः । अङ्गराजस्तु तान् दृष्ट्वा बभूव ग्रहणोत्सुकः । तत्राशक्तो दिवं प्राप्य देवराजमभाषत । पालकाप्यादयः सर्वे मुनयः शक्रशासनात् । गृहीत्वा तद्गजकुलं शिक्षयामासुरञ्जसा । तैः सर्वैश्च प्रणीतानि हस्तिशास्त्राणि सर्वशः । तदाप्रभृति सञ्जाता भुवि हस्तिपरम्परा ।' इति । भूमिगतः ऐन्द्रं पदम् अनुभुङ्क्ते । सुराङ्गनाप्रार्थितयौवनत्वं पालकाप्यादिमहर्षिसेव्यत्वं चात्र ऐन्द्रं पदं विवक्षितम् ॥

अनेन पर्यासयता स्रबिन्दू-
न्मुक्ताफलस्थूलतमांस्तनेषु ।
प्रत्यर्पिताः शत्रुविलासिनीना-
मुन्मुच्य सूत्रेण विनैव हाराः ॥ २८ ॥

प्रका—अनेनेति ॥ पर्यासयता तामिः प्रकिरणं कारयता । उन्मुच्याक्षिप्य मुक्ताफलस्थूलतमानित्युपमा हाराः प्रत्यर्पिता इत्यतिशयोक्तेरङ्गभूता ।

1 श्रु । 2 नैव ।

'विनैव' इति तु पाठः उत्प्रेक्षायाः। न तु निदर्शनात्वं शङ्क्यम्। उपमायाः शाब्दत्वात्। अयं च सङ्करः सङ्कीर्यते भूयोऽप्रस्तुतप्रशंसया। यतः कारणभूते शत्रुवधे प्रस्तुते तत्कार्यभूतं तद्विलासिनीनां वृत्तमुपनिबद्धम्। सूत्रेण विना हाराः प्रत्यर्पिता इत्यनेनेदृशमस्यान्यदपि कलाकौशलमिति वस्तु ध्वन्यते। जातानुशय इव प्रत्यर्पितवानित्युत्प्रेक्षाध्वनिः। अत्र शृङ्गाराभासः करुणस्य च वीरस्य चाङ्गम्॥

पदा—अनेनेति। अनेन शत्रुविलासिनीनां स्तनेषु हाराः उन्मुच्य सूत्रेण विना एव प्रत्यर्पिताः। उन्मुच्य स्तनेभ्यः समाक्षिप्य। मुक्ताफलस्थूलतमान् अस्रबिन्दून् पर्यासयता। मुक्ताफलवत् स्थूलतमान् अतिस्थूलान् पर्यासयता शत्रुविलासिनीभिः प्रकिरणं कारयता। हेतौ शता। शत्रुवधे कृते तद्विलासिनीनां स्तनान्तरान्मौक्तिकस्रज उन्मुच्याश्रुसन्तानैस्ता एव सूत्रेण विनैवानेन प्रत्यर्पिताः। अहो महदस्य कलाकौशलमिति भावः। अत्र शत्रुवधे वक्तव्ये तत्कार्यभूतस्य शत्रुविलासिनीवृत्तान्तस्य वचनादप्रस्तुतप्रशंसा। 'अप्रस्तुतप्रशंसा या सा सैव प्रस्तुताश्रया। कार्ये निमित्ते सामान्ये विशेषे प्रस्तुते सति। तदन्यस्य वचस्तुल्ये तुल्यस्येति च पञ्चधा इति॥

निसर्गभिन्नास्पदमेकसंस्थ-
मस्मिन्द्वयं श्रीश्च सरस्वती च।
कान्त्या गिरा सूनृतया च योग्या
त्वमेव कल्याणि! तयोस्तृतीया ॥ २९ ॥

प्रका—निसर्गेति॥ निसर्गभिन्नास्पदं सहानवस्थानलक्षणविरोधवदित्यर्थः। एकसंस्थमेकाधिकरणम्। त्यक्तविरोधमित्यर्थः। किं च किं चेत्याह—श्रीश्च सरस्वती चेति। सूनृतया प्रियसत्यात्मिकया। योग्यानुरूपा। उभयगुणयोगादेकैकस्या व्यतिरेको ध्वन्यते। त्वमेव तृतीया भवितुं योग्येत्यर्थः।

पदा—निसर्गेति॥ निसर्गभिन्नास्पदं द्वयम् अस्मिन् एकसंस्थम्। निसर्गतः स्वत एव भिन्नमास्पदं स्थानं यस्य। सहावस्थानरहितमित्यर्थः। एकसंस्थमेकाधिकरणम्। परस्परविरुद्धं वस्तुद्वयमस्मिन्विरोधमपहाय स्थितमित्यर्थः। किं तद्द्वयमित्यत्राह—श्रीश्च सरस्वती चेति। ततः किमित्यत्राह—

कल्याणि, कान्त्या सूनृतया गिरा च त्वम् एव तयोः तृतीया योग्या। सूनृतया प्रियसत्यात्मिकया। त्वमेव तयोस्तृतीया भवितुं योग्येत्यर्थः। अत्रोभयगुणयोगादिन्दुमत्यास्ताभ्यां व्यतिरेको ध्वन्यते॥

अथाङ्गराजादवतार्य चक्षु-
र्या[1] तेति जन्या[2]नवदत्कुमारी।
नासौ न काम्यो न च वेद सम्य-
ग्द्रष्टुं न सा भिन्नरुचिर्हि लोकः ॥ ३० ॥

प्रका—अथेति॥ यात गच्छत। जन्यानिति जनीं वधूं वहन्तीति जन्या वोढारः। संज्ञायां 'भव्यगेये'त्यादिना जन्यशब्दो निपातितः। 'जन्योपवादे नात्रार्थेऽमरदत्तोऽब्रवीन्नवि। जनवादे तु पुंस्येनं सिंहः क्लीबेऽजयोऽपठीत्। क्ली युद्धे जनितव्ये च त्रिपूत्पादयितव्यके। जनितर्यपि जामातुः स्निग्धेषु ज्ञातयस्तु ये। भृत्याश्चापि नवोढायाः' इति केशवः। किं नासौ काम्य इत्याह—नासौ न काम्य इति। काम्य एवेत्यर्थः। सा किं द्रष्टुं न जानातीत्याह—न च वेद सम्यक् द्रष्टुं न सेति। सापि सम्यग्द्रष्टुं वेदैवेत्यर्थः। तत्कथं विमुखेत्याह—भिन्नरुचिरिति। अर्थान्तरन्यासश्चायम्॥

पदा—अथेति॥ अथ कुमारी अङ्गराजात् चक्षुः अवतार्य यात इति जन्यान् अवदत्। जनीं वधूं वहन्तीति जन्या वोढारः। 'संज्ञायां जन्या' इति निपातः। 'जन्योपवादे नात्रार्थेऽमरदत्तोऽब्रवीन्नवि। जनवादे तु पुंस्येन सिंहः क्लीबेऽजयोऽपठीत्। क्ली युद्धे भवितव्ये च त्रिपूत्पादयितव्यके। जनितर्यपि जामातुः स्निग्धेषु ज्ञातयस्तु ये। भृत्याश्चापि नवोढायाः' इति केशवः। अङ्गराजान्नेत्रावतारणमात्रेणैव वाहकान् गच्छतेति स्पष्टमवदत्। 'वदव्यक्तायां वाचि' इति धातुः। नास्मिन्नसावनुरक्तेति नेत्रावतारणदर्शनादेव ते ज्ञातवन्त इति भावः। 'पथि पथिकवधूभिस्सादरं पृच्छयमाना कुवलयदळनीलः कोयमार्ये तवेति। स्मितविकसितगण्डं प्रेमगर्भाभिरामं मुखमवनमयन्ती स्पष्टमाचष्ट कान्तम्' इतिवत्। किमसौ न काम्य इत्यत्राह—असौ न न काम्यः इति। काम्य एवेत्यर्थः। अत्र नेत्रावतारणादर्थप्राप्तमकाम्यत्वं प्रतिषिध्यते

1 ही। 2 न्याम।

इति द्वौ नञौ प्रयुक्तौ। सा किं न द्रष्टुं जानातीत्यत्राह—सा सम्यक् द्रष्टुं न त वेद च इति। सापि सम्यग्द्रष्टुं वेदैवेत्यर्थः[1]। तर्हि कथं वैमुख्यमत आह—लोकः भिन्नरुचिः हि इति। अत्रार्थान्तरन्यासः॥

ततः परं दुष्प्रसहं द्विषद्भि-
र्नृपं नियुक्ता प्रतिहारभूमौ।
निदर्शयामास विशेषदृश्य-
मिन्दुं नवोत्थानमिवेन्दुमत्यै ॥ ३१ ॥

प्रका—तत इति॥ परमन्यम्। विशेषदृश्यमतिशयेन दर्शनीयम्। विशेषणद्वयेन वीरशृङ्गारसर्वस्वता द्योत्यते। नवोत्थानमचिरोदितम्। स हि कौतुकहेतुः॥

पदा—तत इति॥ ततः प्रतिहारभूमौ नियुक्ता इन्दुमत्यै परं नृपं दर्शयामास। अन्यं नृपं सहस्तनिर्देशं दर्शितवती। द्विषद्भिः दुष्प्रसहं दुःखेन सोढुं शक्यम्। विशेषदृश्यं अतिशयेन दर्शनीयम्। वीररस-शृङ्गाररसयोः परमकाष्ठाधिष्ठितमित्यर्थः। नवोत्थानं इन्दुम् इव अचिरोदितं चन्द्रमिव। स हि सर्वेषां कौतुकहेतुः। अत्रोत्प्रेक्षा॥

अवन्तिनाथोऽयमुदग्रबाहु-
र्विशालवक्षास्तनुवृत्तमध्यः।
आरोप्य चक्रभ्रममुष्णतेजा-
स्त्वष्ट्रेव यत्नोल्लिखितो विभाति ॥ ३२ ॥

प्रका—अवन्तीति॥ चक्रभ्रमं चक्राकारं शस्त्रमार्जनयन्त्रम्। 'भ्रमस्तु विचिकित्सने। मिथ्याज्ञाने गृहादेश्च निर्गमद्वारि वारिणः। शस्त्र-मार्जनयन्त्रे च तथा भ्रमणकर्मणि॥' इति केशवः। त्वष्ट्रा विश्वकर्मणा। उल्लिखितो मार्जितः। पुरा किल, 'त्वष्टा संज्ञाख्यायाः स्वदुहितुरादित्यपत्न्या-स्तत्तेजःस्पर्शमसहमानायाः कृते तमादित्यं चक्रभ्रमोल्लेखनेन सन्नतेजसं चकार' इतीतिहासः॥

---

1 अत्रापि पूर्ववन्नञ्द्वयप्रयोगः ... ॥

**पदा**—अवन्तीति ॥ अयम् अवन्तिनाथः । अवन्तिविषयाधिपतिः । उदग्रबाहुरुत्कृष्टबाहुवीर्यः । विशालं विस्तृतं वक्षो यस्य । तनुः कृशो वृत्तो वर्तुलश्च मध्यो यस्य । त्वष्ट्रा चक्रभ्रमम् आरोप्य यत्नोल्लिखितः उष्णतेजाः इव विभाति । त्वष्ट्रा विश्वकर्मणा । चक्राकारं भ्रमं शस्त्रमार्जनयन्त्रम् । 'भ्रमस्तु विचिकित्सने । मिथ्याज्ञाने गृहादेश्च निर्गमद्वारि वारिणः ॥ शस्त्रमार्जनयन्त्रे च तथा भ्रमणकर्मणि' । इति केशवः । यत्नोल्लिखितो यत्नेनोल्लिखितः मार्जितः । 'त्वष्टा संज्ञाभिधानां तां सूर्यपत्नीं निजात्मजाम् । विलोक्य सततं भर्तुस्तेजसा पीडितां भृशम् ॥ चक्रे चक्रभ्रमोल्लेखादादित्यं सह्यतेजसम्' । इतीतिहाससिद्धेयं कथात्रानेन दर्शिता ॥

अस्य प्रयाणेषु समग्रशक्ते-
रग्रेसरैर्वाजिभिरुद्धतानि ।
कुर्वन्ति सामन्तशिखामणीनां
प्रभाप्ररोहास्तमयं रजांसि ॥ ३३ ॥

**प्रका**---अस्येति ॥ समग्रशक्तेः शक्तित्रयसम्पन्नस्य । सामन्ताः समन्ताद्भवा राजानः । नासीरप्रचलिततुरगखुररजसैवाभियास्यमानक्षितिपालचूडामणिप्रभाप्ररोहास्तमयो जात इति समग्रायाः प्रभुशक्तेरेवैतदीयाया न कश्चित्पर्याप्तो विषयः । किमुत मन्त्रोत्साहशक्त्योरपीति भावः ॥

**पदा**—अस्येति ॥ अस्य प्रयाणेषु अग्रेसरैः वाजिभिः उद्धतानि रजांसि सामन्तशिखामणीनां प्रभाप्ररोहास्तमयं कुर्वन्ति । अस्मिन्राजनि युद्धोद्युक्ते सति नासीरप्रचलितानां तुरङ्गाणां रजसैव समन्ताद्भवानां राज्ञां चूडामणिप्रभाप्ररोहास्तमयो जायत इति नास्य युद्धोद्यमं केचिदपि सोढुं प्रभवन्ति । छत्रशून्यत्वाद्रजसां मौलिमणौ पतनम् । अनेन प्रभुशक्तेरेकदेशेनैव राज्ञां पराजयो दर्शितः । समग्राः सम्पूर्णाः शक्तयः प्रभावोत्साहमन्त्रजा यस्य । अस्य तादृशीनां शक्तीनां लोकत्रयेऽपि न केचिदपि विषया इति भावः ॥



१ स्थि ।

असौ महाकालनिकेतनस्य
वसन्नदूरे किल चन्द्रमौलेः।
तामिस्रपक्षेऽपि[1] सह प्रियाभि-
र्ज्योत्स्नावतो निर्विशति प्रदोषान् ॥ ३४ ॥

प्रका — असाविति ॥ महाकालः स्थानविशेषः। चन्द्रमौलेरिति वाक्यार्थोपपादकम्। तामिस्रं तमिस्रसम्बन्धि। निर्विशत्यनुभवति। प्रदोषान् रात्रेः प्रथमयामान्। तत्रैव पानगोष्ठ्यादीनां प्रायशः प्रवृत्तेः ॥

पदा — असाविति ॥ असौ महाकालनिकेतनस्य चन्द्रमौलेः अदूरे वसन् तामिस्रपक्षे अपि प्रियाभिः सह प्रदोषान् ज्योत्स्नावतः निर्विशति किल। महाकालः क्षेत्रविशेषः। तामिस्रपक्षेऽपि कृष्णपक्षेऽपि। प्रदोषान् रात्रेः प्रथमयामान। निर्विशत्यनुभवति। रात्रेः प्रथमयाम एव हि पानगोष्ठ्यादीनां प्रायशः प्रवृत्तिः। असौ शशिप्रतिमाभरणं मधु कृष्णपक्षेऽप्यनुभवतीत्यर्थः। अत्र चन्द्रमौलेरिति पदं वाक्यार्थोपपादकमिति काव्यलिङ्गमलङ्कारः ॥

अनेन यूना सह पार्थिवेन
रम्भोरु कच्चिन्मनसो रुचिस्ते।
सूप्रातरङ्गानिलकम्पितासु[2]
विहर्तुमुद्यानपरम्परासु ॥ ३५ ॥

प्रका — अनेनेति ॥ यूनेत्यालम्बनविभावत्वम्। सूप्रेत्यादिना चोद्दीपनसम्पदुक्ता। मनस इति। मनो हि स्वतन्त्रमिति। मनस्तन्त्रो हि मन्मथ इति च ॥

पदा — अनेनेति ॥ रम्भोरु अनेन पार्थिवेन सह उद्यानपरम्परासु विहर्तुं ते मनसः रुचिः कच्चित्। उद्यानानां परम्परासु समूहेषु। रुचिः श्रद्धा। भवतीति शेषः। कच्चिदिति प्रश्ने। यूना यौवनयुक्तेन। अनेनालम्बनविभाव उक्तः। सूप्रा नामावन्तिदेशे काचन नदी। तस्यास्तरङ्गेषु योऽनिलस्तेन कम्पितासु। अनेनोद्दीपनविभाव उक्तः ॥

1 त। 2 सि।

तस्मिन्नभिद्योतितबन्धुपद्मे
प्रतापसंशोषितशत्रुपङ्के ।
बबन्ध सा नोत्तमसौकुमार्या
कुमुद्वती भानुमतीव भावम् ॥ ३६ ॥

**प्रका—तस्मिन्निति ॥** अत्र अभिद्यातितेत्याभिगामिकगुणयोगं द्योतयति । प्रतापेत्यधृष्यगुणयोगम् । भावमभिप्रायम् । कुमुद्वत्यां तु भाव उपचरितः । उत्तमसौकुमार्यत्वं तु भावबन्धाभावे हेतुतयोत्प्रेक्ष्यत इति द्योतकशून्येयमुत्प्रेक्षा । वास्तववस्तु हेतुरुपमानसामर्थ्यात्प्रतीयते । स्वभावनिबन्धनो रुचिभेदः ॥

**पदा—तस्मिन्निति ॥** सा तस्मिन् भावं न बबन्ध । भावोऽभिलाषः । कुमुद्वती भानुमति इव । भानुमानादित्यः । अभिद्योतितानि बन्धव एव पद्मानि येन । अनेनाभिगम्यगुणयोगो दर्शितः । प्रतापैः संशोषिताः शत्रव एव पङ्का येन । अनेनाधृष्यगुणयोग उक्तः । उत्तमं सौकुमार्यं सुकुमारत्वं यस्याः ॥

तामग्रतस्तामरसान्तराभा-
मनूपराजस्य गुणैरनूनाम् ।
विधाय सृष्टिं ललितां विधातु-
र्जगाद भूयः सुदतीं सुनन्दा ॥ ३७ ॥

**प्रका—तामिति ।** तामरसान्तराभां कनकवर्णामित्यर्थः । अनूपो देशविशेषः । अनुगता आपोऽस्मिन्निति बहुव्रीहिः । 'ऋक्पूरि'त्यादिनाकारः समासान्तः । 'ऊदनोर्देशे' इत्यनोरुत्तरस्याप्छब्दस्याकारस्योकारादेशः । सुदतीम् । 'वयसि दन्तस्य दतृ' इति दत्रादेशः । 'उगितश्च' इति ङीप् । शोभनदशनां युवतीं चेत्यर्थः । अनूपराजस्याग्रत इत्यन्वयः । चत्वारि तु नायिकाविशेषणानि विभावतां पौनःपुन्येन परिपोषयन्ति । परिकरश्चात्रालङ्कारः ॥

**पदा—तामिति ॥** सुनन्दा ताम् अनूपराजस्य अग्रतः विधाय भूयो जगाद । अनूपो देशविशेषः । अनुगता आपो यस्मिन्निति बहुव्रीहिः । 'ऋक्पूरि'त्यादिना समासान्तोऽच्प्रत्ययः । 'ऊदनोर्देशे' इत्यूकारादेशः ॥ तामरसस्य पद्मस्यान्तरं मध्यं किञ्जल्कादिसहितः प्रदेशः तद्वदाभा यस्याः । सुवर्णवर्णामित्यर्थः । गुणैः सौशील्यादिभिः । अनूनां सम्पूर्णाम् । अत एव

विधातुः ललितां सृष्टिम्। सुदतीम्। 'वयसि दन्तस्य दतृ' इति दत्रादेशः। 'उगितश्च' इति ङीप्। शोभनदन्तयुक्तां प्रारब्धयौवनां चेत्यर्थः। अत्र, चतुर्भिर्नायिकाविशेषणैस्तस्या विभावत्वपरिपोष उक्तः। अत एव परिकरोऽलङ्कारः॥

सङ्ग्रामनिर्विष्टसहस्रबाहु-
रष्टादशद्वीपनिखातयूपः।
अनन्यसाधारणराजशब्दो
बभूव योगी किल कार्तवीर्यः ॥ ३८ ॥

प्रका—सङ्ग्रामेति॥ सङ्ग्रामे निर्विष्टा उपभुक्ता न केवलं भृताः सहस्रं बाहवो येन स तथा। पुरा किल, भगवतो दत्तात्रेयात्कृतवीर्यसूनुना वरा लब्धाः, त इह क्रमाद्दर्शिताः। तत्र सङ्ग्रामेत्यत्र महाभारतवचनम्-'श्रीमान्मनस्वी बलवान् सत्यवागनसूयकः। सहस्रबाहुर्भूयासमेष मे प्रथमो वरः॥' अष्टादशेत्यत्र यथा—'पितॄन्देवानृषीन्विप्रान्यजेयं विविधैर्मखैः। अमित्रान्निशितैर्बाणैस्तृतीयो वर एष मे॥' इति। अनन्यसाधारणराजशब्द इति जरायुजादिसर्वभूतरञ्जनात्। अत्र यथा—'जरायुजाण्डजं सर्वं सर्वं चैव चराचरम्। प्रशास्तुमिच्छे धर्मेण द्वितीयोऽस्त्वेष मे वरः॥' इति। योगी योगबलोपेतः। एतच्चोत्तरश्लोकार्थोपपादकं साभिप्रायम्। किलेतिह्ये॥

पदा—सङ्ग्रामेति॥ कार्तवीर्यः बभूव किल। किलेतिह्ये। सङ्ग्रामे निर्विष्टा उपभुक्ताः सहस्रं बाहवो येन। न केवलं भृता एव, उपभुक्ताश्चेति भावः। पुरा किल, कार्तवीर्यार्जुनेन दत्तात्रेयाद्वरत्रयं लब्धम्। तत्राद्यो वरोऽयम्। यथाह महाभारते—'श्रीमान्मनस्वी बलवान् सत्यवागनसूयकः। सहस्रबाहुर्भूयासमेष मे प्रथमो वरः॥' इति। अस्य फलमाह—अष्टादशेति। अष्टादशसु द्वीपेषु निखाता यूपा यज्ञस्तम्भा येन। सर्वानप्यमित्राञ्जित्वा तत्र सर्वत्र जयस्तम्भस्थाने यज्ञस्तम्भं निचखानेत्यर्थः। तृतीयोऽयं वरः। यथा तत्रैव—'पितॄन्देवानृषीन्विप्रान्यजेयं विविधैर्मखैः। अमित्रान्निशितैर्बाणैस्तृतीयो वर एष मे॥' इति। जरायुजाण्डजादिसर्वभूतरञ्जनादनन्यसाधारणो राजशब्दो यस्य। अयं तु द्वितीयो वरः। यथा—'जरायुजाण्डजं सर्वं सर्वं चैव चराचरम्। प्रशास्तुमिच्छे धर्मेण द्वितीयोऽस्त्वेष मे वरः॥' इति।

अत्र द्वितीयस्य वरस्य वरद्वयफलभूतत्वात्कविना चरमनिर्देशः कृतः। योगी योगाभ्यासनिरतः। एतच्चानन्तरश्लोकार्थमुपपादयति ॥

अकार्यचिन्तासमकालमेव
प्रादुर्भवंश्चापधरः पुरस्तात्।
अन्तःशरीरेष्वपि यः प्रजानां
प्रत्यादिदेशाविनयं विनेता ॥ ३९ ॥

**प्रका—अकार्येति ॥** अकार्यचिन्तासमकालमिति क्रियाविशेषणेन धर्मरक्षणे सावधानता द्योत्यते। अन्तःशरीरेषु मनस्सु। अपिरद्भुतविभावतां द्योतयति। न हि कश्चिद्राजा प्रजानां मनोगतं प्रत्याख्यातुं शक्नोति। अविनयमनात्मसंस्कारम्। लोभादिमित्यर्थः ॥

**पदा—अकार्येति।** यः अकार्यचिन्तासमकालम् एव चापधरः पुरस्तात् प्रादुर्भवन् प्रजानां अन्तःशरीरेषु अपि अविनयं प्रत्यादिदेश। अकार्यस्याकर्तव्यस्य चिन्तया समकालं तुल्यकालमेव। क्रियाविशेषणमिदम्। अन्तःशरीरेषु मनस्सु। अपिशब्दोऽयमसंभावनां वदन्नद्भुतं द्योतयति। अन्यः क एवं कुर्यादिति भावः। विनेता धर्मरक्षणजागरूक इत्यर्थः ॥

ज्याबन्धनिष्पन्दभुजेन यस्य
विनिःश्वसद्वक्त्रपरम्परेण।
कारागृहे निर्जितवासवेन
लङ्केश्वरेणोषितमा प्रसादात् ॥ ४० ॥

**प्रका—ज्याबन्धेति ॥** ज्याबन्धनिष्पन्दभुजेनेति करुणस्य तद्व्यभिचारिणो निर्वेदस्य च विभावः। विनिःश्वसदित्यनुभावः। कारागृह इत्युद्दीपनविभावः। निर्जितवासवेनेति लज्जाया विभावः। आ प्रसादादिति कारागृहवासस्य निष्प्रतिक्रियत्वचिरकालत्वे द्योतयत् चिन्तादैन्ययोर्विभावः। स चैव निष्पन्नः करुणो वीरस्याङ्गम् ॥

**पदा—ज्याबन्धेति ॥** लङ्केश्वरेण यस्य प्रसादात् आ कारागृहे उषितम्। कार्तवीर्यार्जुनो रावणं जित्वा मौर्व्या बध्वा बन्धनागारे क्षिप्तवान्।

स तु कार्तवीर्यप्रसादपर्यन्तं तत्रैवोषितवांश्चेति कथानेनोक्ता। ज्यया मौर्व्या यो बन्धो बन्धनं तेन निष्पन्दा निश्चला भुजा यस्य। अत एव विनिःश्वसन्ती विशेषेण दीर्घश्वासवती वक्त्रपरम्परा वदनसमूहो यस्य। निर्जितो वासवो देवेन्द्रो येन। तादृशपराक्रमेणापीत्यर्थः॥

तस्यान्वये भूपतिरेष जातः
प्रतीप इत्यागमवृद्धसेवी।
येन श्रियः संश्रयदोषरूढं
स्वभावलोलेत्ययशः प्रमृष्टम् ॥ ४१ ॥

प्रका — तस्येति॥ आगमवृद्धसेवित्वं फलेनोपपादयति — येनेति। संश्रय आश्रयः तद्दोषेण रूढं परमार्थत औपाधिकम्। निर्दोषतया गुणवत्तया चास्मिन्ननपायिनी श्रीरिति प्रतीतेः पर्यायोक्तमिदम्॥

पदा — कार्तवीर्यवर्णनं प्रकृते योजयति — तस्येति॥ एषः तस्य अन्वये जातः प्रतीपः इति भूपतिः। दृश्यमानोऽयं कार्तवीर्यान्वयोद्भवः प्रतीप इति नाम्ना प्रसिद्धो राजेत्यर्थः। आगमवृद्धान् विद्यावृद्धान् सेवितुं शीलमस्येति तथा। तस्य फलमाह — येनेति। येन श्रियः स्वभावलोला इति अयशः प्रमृष्टम्। स्वभावतश्चञ्चलैव श्रीरिति सर्वलोकविख्यातं देव्या दुर्यशोऽनेन सम्यक् परास्तम्। संश्रयस्याश्रयस्य दोषेण रूढं प्रसिद्धम्। पूर्वमाश्रयदोषेणैवैतादृशी प्रसिद्धिर्जाता। इदानीमाश्रयदोषाभावाद चाञ्चल्यमपि जातमित्यन्वयव्यतिरेकाभ्यां दुर्यशोनिवृत्तिरिति भावः॥

आयोधने कृष्णगतिं सहाय-
मवाप्य यः क्षत्रियकाळरात्रिम्।
धारां शितां रामपरश्वधस्य
संभावयत्युत्पलपत्रसाराम् ॥ ४२ ॥

प्रका — आयोधन इति॥ कृष्णगतिरग्निः। काळरात्रिः संहारकाळरात्रिः। अत्र प्रमाणं महाभारते सहदेवदिग्विजये द्रष्टव्यम्॥

**पदा—आयोधन इति ॥** यः आयोधने कृष्णगतिं सहायम् अवाप्य रामपरश्वधस्य शितां धाराम् उत्पलपत्रसारां संभावयति। कृष्णगतिं कृष्णवर्त्मानमग्निमित्यर्थः। उपत्लपत्लवत्सारां स्थिराम्। अत्र सहदेवदिग्विजये महाभारतवचनम्—'तत्र माहिष्मतीवासी भगवान् हव्यवाहनः।' इत्यादि। क्षत्रियाणां काळरात्रिं संहाररात्रिम्॥

अस्याङ्कलक्ष्मीर्भव दीर्घबाहो-
माहिष्मतीवप्रनितम्बकाञ्चीम्।
प्रासादजालैर्जलवेणिरम्यां
रेवां यदि प्रेक्षितुमस्ति कामः ॥ ४३ ॥

**प्रका—अस्येति॥** अङ्कस्योत्सङ्गस्य लक्ष्मीरिव लक्ष्मीः। एतदुत्सङ्गवर्तिनी भवेत्यर्थः। वप्रः प्राकारः स एव नितम्बस्तस्य काञ्चीव काञ्ची। सा हि माहिष्मतीं परिवेष्ट्य प्रवहतीति प्रसिद्धिः। वेणी प्रवाहः। 'ओघाः प्रवाहो वेणी च' इति हलायुधः॥

**पदा—अस्येति॥** प्रासादजालैः रेवां प्रेक्षितुं कामः अस्ति यदि त्वम् अस्य अङ्कलक्ष्मीः भव। प्रासादजालैः प्रासादवातायनैः रेवां नर्मदां माहिष्मतीं परिवेष्ट्य प्रवहन्तीं नदीम्। अत एव, काञ्चीत्वरूपणम्। अङ्कलक्ष्मीरिति च रूपकम्। अङ्कवर्तनी लक्ष्मीरिव भव। उत्सङ्गवर्तिनी भवेत्यर्थ। दीर्घबाहोः सर्वावयवसुन्दरस्येत्यर्थः। माहिष्मत्या वप्रः प्राकारो नितम्बत्वेन रूप्यते, तत्र काञ्ची रशनामिव स्थिताम्। जलवेणिरम्यां जलप्रवाहरम्याम्। 'ओघः प्रवाहो वेणी च' इति हलायुधः॥

तस्याः प्रकामं प्रियदर्शनोऽपि
न स क्षितीशो रुचये बभूव।
शरत्प्रमृष्टाम्बुधरोपरोधः
शशीव पर्याप्तकलो नलिन्याः ॥ ४४ ॥

**प्रका—तस्या इति॥** अत्र शरत्प्रमृष्टाम्बुधरोपरोधत्वेन पर्याप्तकलत्वेन चोपमानेऽपि प्रकामदर्शनीयत्वमेवोपपादितमिति धर्माधिक्यं नाशङ्कनीयम्। अत्रापि स्वभावनिबन्धनो रुचिभेदः प्रत्याख्यानहेतुतयोपमानबलादवगम्यते॥

पद्मा — तस्या इति ॥ सः क्षितीशः तस्याः रुचये न बभूव। किं गुणाभावस्तत्र हेतुः, नेत्याह — प्रकामं प्रियदर्शनः अपीति। अत्यन्तं प्रियं दर्शनं यस्य। शरत्प्रमृष्टाम्बुधरोपरोधः पर्याप्तकलः शशी नलिन्याः इव। शरदा प्रमृष्टोऽपनीतोऽम्बुधरोपरोधो जलधरनिरोधो यस्य तथा। पर्याप्ताः सम्पूर्णाः कला यस्य। अत्रोपमानगतेन विशेषणद्वयेन प्रियदर्शनत्वमेवोपपादितमिति न धर्माधिक्यमाशङ्कनीयम्। स्वाभाविको रुचिभेद एव प्रत्याख्यानहेतुरित्युपमया ध्वन्यते ॥

सा शूरसेनाधिपतिं सुषेण-
मुद्दिश्य लोकान्तरगीतकीर्तिम्।
आचारशुद्धोभयवंशदीपं
शुद्धान्तरक्ष्या जगदे कुमारी ॥ ४५ ॥

प्रका — सेति ॥ शूरसेनो जनपदविशेषः। लोकान्तरेति। अवदानैः स्वर्गेऽपि प्रथितयशसम्। आचारेति। आचारेण शुद्धयोः मातृपितृवंशयोः प्रदीपं प्रकाशकमित्यर्थः। शुद्धान्तरक्ष्या अन्तःपुरपालिन्या। जगदे। कर्मणि लिट् ॥

पद्मा — सेति ॥ सा कुमारी शुद्धान्तरक्ष्या शूरसेनाधिपतिं सुषेणम् उद्दिश्य जगदे। शुद्धान्तमन्तःपुरं रक्षतीति शुद्धान्तरक्षी। शूरसेना जनपदविशेषाः, तेषामधिपतिम्। सुषेण इति नाम। उद्दिश्य निर्दिश्य। जगद इति कर्मणि लिट्। लोकान्तरे स्वर्गे विगीता कीर्तिर्यस्य। आचारेण शुद्धयोरुभयोर्मातृपितृवंशयोः दीपं तद्वत्प्रकाशकमित्यर्थः। उभावपि वंशावनेन प्रथितौ जातावित्यर्थः ॥

नीपान्वये[1] पार्थिव एष यज्वा
गुणैर्यमाश्रित्य परस्परेण।
सिद्धाश्रमं शान्तमिवैत्य सत्त्वै-
र्नैसर्गिकोऽप्युत्ससृजे विरोधः ॥ ४६ ॥

1 यो ।

**प्रका—नीपेति ॥** नीपो नामेतिहासप्रसिद्धो राजा। तस्यान्वये। जात इति शेषः। अत्र कुलशीलयोः संपत्तिर्दर्शिता। ते हि गुणेषु प्रधाने। गुणैरिति। सम्भवद्भिरोधैर्ज्ञानादिभिर्मौनादिभिश्च। सिद्धाश्रमं विश्वामित्राश्रमम्। तपःसिद्धानामाश्रमं वा। सत्त्वैर्मृगपक्ष्यादिभिः ॥

**पदा--नीपेति ॥** एषः नीपान्वयः पार्थिवः। नीपो नामेतिहासप्रसिद्धो राजा, तस्यान्वयो यस्य। 'यज्वा तु विधिनेष्टवान्' इत्यमरः। गुणैः यम् आश्रित्य परस्परेण विरोधः उत्ससृजे। गुणैर्ज्ञानादिभिर्मौनादिभिश्च। उत्ससृज इति कर्मणि लिट्। नैसर्गिकः स्वाभाविकोऽपि। सत्त्वैः शान्तं सिद्धाश्रमम् एत्य इव। सत्त्वैर्गजसिंहादिभिः। सिद्धाश्रमं विश्वामित्राश्रमम्। तपःसिद्धानामाश्रमं वा ॥

यस्यात्मदे[1]हे नयनाभिरामा
कान्तिर्हिमांशोरिव संनिविष्टा।
हर्म्याग्रसंरूढतृणाङ्कुरेषु
तेजोऽविषह्यं रिपुमन्दिरेषु ॥ ४७ ॥

**प्रका—यस्येति ॥** आत्मदेह इत्यात्मशब्दो रिपुमन्दिराण्यपेक्ष्य प्रयुक्तः। यथा—'यान्ति स्वदेहेषु जरामसम्प्राप्तोपभोक्तृकाः। फलपुष्पर्धिभाजोऽपि दुर्गदेशवनश्रियः'॥ इत्यत्र भोक्त्रपेक्षया स्वशब्दः। हर्म्येत्यादिना रिपूणामत्यन्तास्तमितत्वं ध्वनितम्। तेजः प्रतापः। संनिविष्टमित्यनुषज्यत इति तुल्ययोगिता। 'नियतानां सकृद्धर्मस्सा पुनस्तुल्ययोगिता'। अत्र च प्राकरणिकावेव कान्तिप्रतापौ ॥

**पदा—यस्येति ॥** यस्य आत्मदेहे नयनाभिरामा कान्तिः संनिविष्टा। आत्मदेह इत्यात्मपदस्य देहपदेनैव गतार्थत्वेऽपि रिपुमन्दिराण्यपेक्ष्य प्रयोगः। 'यान्ति स्वदेहेषु जरामसम्प्राप्तोपभोक्तृकाः। फलपुष्पर्धिभाजोऽपि दुर्गदेशवनश्रियः' ॥ इत्यत्र यथा भोक्त्रपेक्षया स्वशब्दप्रयोगः। हिमांशोश्चन्द्रस्येव। रिपुमन्दिरेषु अविषह्यं तेजः। रिपुमन्दिरेषु शत्रुगृहेषु। अविषह्यमसह्यम्।



1 गे

तेजः प्रतापः। संनिविष्टमित्यनुषज्यते। हर्म्याग्रेषु प्रासादशिखरेषु संरूढाः प्ररूढाः तृणाङ्कुरा येषाम्। **अनेन** शत्रूणामत्यन्तोच्छेदो दर्शितः। अत्र प्राकरणिकावेव कान्तिप्रतापाविति तुल्ययोगिता। 'नियतानां सकृद्धर्मः सा पुनस्तुल्ययोगिता' इति॥

यस्यावरोधस्तनचन्दनानां
प्रक्षाळनाद्वारिविहारकाले।
कळिन्दकन्या मधुरां गतापि
गङ्गोर्मिसंपृक्तजलेव भाति ॥ ४८ ॥

प्रका—यस्येति॥ अवरोधशब्दः प्रागेव व्याख्यातः प्राभूत्यर्थः। मधुरां गतापीति गङ्गाया विदूरत्वमुक्तम्॥

पदा—यस्येति॥ यस्य वारिविहारकाले अवरोधस्तनचन्दनानां प्रक्षाळनात् कळिन्दकन्या मधुरां गता अपि गङ्गोर्मिसंपृक्तजला इव भाति। काळिन्द्या गङ्गोर्मिसंपर्को हि समुद्रसमीप एव दृष्टः। अत्र तु विदूरतरमधुरापुरपरिसरवर्तिन्या अपि बहुतरान्तःपुरसुन्दरीकुचकलशघटितचन्दनरसधावळ्यारसोऽपि सञ्जात इवेत्यर्थः॥

[2]संभाव्य भर्तारममुं युवानं
मृदुप्रवाळोत्तरपुष्पशय्ये।
वृन्दावने चैत्ररथादनूने
निर्विश्यतां सुन्दरि यौवनश्रीः ॥ ४९ ॥

प्रका—सम्भाव्येति॥ सम्भावनात्र परिग्रहः। अत्रालम्बनोद्दीपनसम्पद्वर्ण्यते॥

पदा—सम्भाव्येति॥ सुन्दरि, त्वया अमुं भर्तारं सम्भाव्य वृन्दावने यौवनश्रीः निर्विश्यताम्। सम्भाव्य भर्तृत्वेन परिगृह्य। निर्विश्यतामुपभुज्य-

---

1 स। 2 संभाव्येत्यस्माच्छ्लोकात् पूर्वं 'त्रस्तेन तार्क्ष्यात् किल कालियेन मणिं विसृष्टं यमुनौकसा यः। वक्षःस्थलव्यापिरुचिं दधानः सकौस्तुभं ह्रेपयतीव कृष्णम्॥' इत्येकोऽपि श्लोको दृश्यते मुद्रितपुस्तके॥

ताम्। मृदुप्रवालोत्तरः मृदुभिः प्रवालैः सहिताः पुष्पशय्या यस्मिन्। चैत्ररथाद्वैश्रवणोद्यानात्। अनूने उत्कृष्टे ॥

अध्यास्य चाम्भःपृषितोक्षितानि
शैलेयगन्धीनि शिलातलानि।
कलापिनां प्रावृषि पश्य नृत्तं[2]
कान्तासु गोवर्धनकन्दरासु ॥ ५० ॥

**प्रका—अध्यास्येति ॥** शैलेयं शिलाकुसुमम्। 'कालानुसार्यवृद्धाश्मपुष्पशीतशिवानि तु। शैलेयम्' इति सिंहः। शिलाजतु वा। 'शिलाजतु च शैलेयम्' इति यादवः। वृन्दावनगोवर्धनौ भगवल्लीलासु प्रसिद्धौ। एवंविधानां च वाक्यानामत्र प्रकरणे कन्यकाप्ररोचनार्थत्वमनुसन्धेयम् ॥

**पदा—अध्यास्येति ॥** त्वं प्रावृषि गोवर्धनकन्दरासु शिलातलानि अध्यास्य कलापिनां नृत्तं पश्य च। गोवर्धनो भगवल्लीलासु प्रसिद्धः, तस्य कन्दरासु गुहासु। अध्यास्याधिष्ठाय। अम्भसां पृषितैर्बिन्दुभिरुक्षितानि सिक्तानि। शैलेयानां शिलाकुसुमानां गन्धोऽस्त्यत्रेति तथा। 'कालानुसार्यवृद्धाश्मपुष्पशीतशिवानि तु। शैलेयम्' इति सिंहः ॥

नृपं तमावर्तमनोज्ञनाभिः
सा व्यत्यगादन्यवधूर्भवित्री।
महीधरं मार्गवशादुपेतं
स्रोतोवहा सागरगामिनीव ॥ ५१ ॥

**प्रका—नृपमिति ॥** आवर्तमनोज्ञनाभिरित्युपमानेनापि संबध्यते। तत्र तु समासान्तरं द्रष्टव्यम्। अन्यवधूर्भवित्रीति। भवितव्यतैवात्र हेतुर्न गुणवैकल्यमिति भावः। मार्गवशादुपेतमिति प्रभवमहीधरनिवृत्त्यर्थम् ॥

**पदा—नृपमिति ॥** सा तं नृपं व्यत्यगात्। अतिक्रम्य जगाम। तत्र हेतुः—अन्यवधूः भवित्री इति। अन्यस्य भार्या भविष्यन्ती। तस्य

---

1 च ॥ 2 त्यं।

गुणाभावो नात्र हेतुरिति भावः। सागरगामिनी स्रोतोवहा मार्गवशात् उपेतं महीधरम् इव। स्रोतोवहा नदी। न हि सागरगामिनी नदी मार्गवशात्प्राप्तं महीधरमारोहति। आवर्तवन्मनोज्ञा नाभिर्यस्याः॥

अथाङ्गदाश्लिष्टभुजं भुजिष्या
हेमाङ्गदं नाम कलिङ्गनाथम्।
आसेदुषीं सादितशत्रुपक्षं
बालामबालेन्दुमुखीं बभाषे ॥ ५२ ॥

प्रका—अथेति॥ अङ्गदेति सकलप्रसाधनोपलक्षणम्। भुजिष्या किङ्करी। 'भुजिष्यः किङ्करो मतः' इति हलायुधः। आसेदुषीं प्राप्ताम्॥

पदा—अथेति॥ अथ भुजिष्या हेमाङ्गदं नाम कलिङ्गनाथम् आसेदुषीं बालां बभाषे। भुजिष्या किङ्करी। 'भुजिष्यः किङ्करो मतः' इति हलायुध.। कलिङ्गा जनपदाः। आसेदुषीं मञ्चक्रमेण प्राप्ताम्। अङ्गदैराश्लिष्टौ भुजौ यस्य। सकलाभरणोपेतमित्यर्थः। सादितो नाशितः शत्रुपक्षो येन। अबालेन्दुः पूर्णचन्द्र इव मुखं यस्याः॥

असौ महेन्द्राद्रिसमानसारः
पतिर्महेन्द्रस्य महोदधेश्च।
यस्य क्षरत्सैन्यगजच्छलेन
यात्रासु यातीव पुरो महेन्द्रः ॥ ५३ ॥

प्रका—असाविति॥ पतिरित्यादिना नानाविधसमृद्धिमत्त्वमुभयविध-दुर्गवत्त्वं च ध्वनितम्। उत्प्रेक्षया च गजवर्ष्मोक्तिम्॥

पदा—असाविति॥ असौ महेन्द्रस्य महोदधेः च पतिः। अनेन पर्वतवर्तिनीनां समुद्रवर्तिनीनां च समृद्धीनां प्राप्तिरुक्ता, पर्वतदुर्गवत्त्वं जलदुर्गवत्त्वं च। महेन्द्राद्रिणा महेन्द्रपर्वतेन समानः सारो बलं यस्य। अनेनैव भूमिर्ध्रियत इति भावः। यस्य यात्रासु क्षरत्सैन्यगजच्छलेन महेन्द्रः पुरः यातीव। यात्रासु युद्धप्रयाणेषु। क्षरन्तो निर्गच्छन्तो ये सैन्यगजास्तद्व्याजेन। क्षरन्तः

क्षरन्मदजला वा। पुरोऽग्रे। गजानां महत्त्वमुत्प्रेक्षया ध्वन्यते। मदनिष्यन्दानां निर्झरसाम्यं च प्रतीयते ॥

ज्याघातरेखे सुभुजो भुजाभ्यां
विभर्ति यश्चापभृतां पुरोगः।
रिपुश्रियां साञ्जनबाष्पसेके
बन्दीकृतानामिव पद्धती द्वे ॥ ५४ ॥

**प्रका—ज्याघातेति**॥ भुजाभ्यामिति सव्यसाचित्वमुक्तम्। अत एवाह—चापभृतां पुरोग इति। बन्दीकृतानां बन्दित्वं नीतानाम्। बन्दिर्हठहृतयोषित्। पद्धती मार्गौ। अत्रोत्प्रेक्षायां तथाविधपद्धतिसादृश्यं हेतुः। फलमत्र रिपुश्रियां सान्निध्यं, भुजयोरेव तदाहरणसाधनत्वं च प्रतीयते ॥

**पदा—ज्याघातेति**॥ यः भुजाभ्यां ज्याघातरेखे बिभर्ति। ज्याया मौर्व्या आघातेनाहननेन ये रेखे ते। भुजाभ्यां बिभर्ति। अनेन सव्यसाचित्वमुक्तम्। बन्दीकृतानां बन्दीत्वं नीतानाम्। बन्दिर्हठहृतमहिळा। बन्दीकृतानां रिपुश्रियां साञ्जनबाष्पसेके द्वे पद्धती इव। अञ्जनमिश्रैर्बाष्पैर्यः सेकः सेचनं तेन सहिते। पद्धती मार्गौ। उत्प्रेक्षया रिपुश्रियामेतदधीनत्वं ध्वन्यते। सुभुजः। अनेन सौन्दर्यगुण उक्तः। चापभृतां धनुर्भृतां पुरोगः। सव्यसाचित्वादिति भावः ॥

यमात्मनः सद्मनि संनिकृष्टो
मन्द्रध्वनित्याजितयामतूर्यः।
प्रासादवातायनदृश्यवीचिः
प्रबोधयत्यर्णव एव सुप्तम् ॥ ५५ ॥

**प्रका—यमिति**॥ आत्मनः सद्मनि। न तु वेलावनभुवि विहारविनिर्गतम्। अत्र हेतुः-संनिकृष्टः। संनिविष्टमिति वा पाठः। मन्द्रेण गम्भीरेण ध्वनिना त्याजितोऽधःकृतो यामतूर्यो यामावसानवाद्यध्वनिर्येन स तथा। 'तूर्योऽस्त्री वाद्यनिर्घोषे' इति केशवः। प्रासादेत्यनेन संनिकर्षस्येयत्ता दर्शिता। पाठान्तरे तु, संनिकर्ष एव ॥

पदा—यमिति ॥ आत्मनः सद्मनि संनिविष्टं सुप्तं यम् अर्णवः एव प्रबोधयति । आत्मनः सद्मनि, न तु वेलातटभुवि विहारार्थं संनिविष्टम् । मन्द्रेण गम्भीरेण ध्वनिना त्याजितोऽधःकृतो यामतूर्यो यामावसानवाद्यध्वनिर्येन । 'मन्द्रस्तु गम्भीरे' इत्यमरः । 'तूर्योऽस्त्री वाद्यनिर्घोषे' इति केशवः । प्रासादे यद्वातायनं तेन दृश्यो वीचिर्यस्य । अनेन संनिकर्षो दर्शितः । तेन प्रबोधनसौकर्यं विनोदनसाधनत्वं चार्णवस्य दर्शितम् ॥

अनेन सार्धं विहराम्बुराशे-
स्तीरेषु तालीवनमर्मरेषु ।
द्वीपान्तरानीतलवङ्गपुष्पै-
रपाकृतस्वेदलवा मरुद्भिः ॥ ५६ ॥

प्रका—अनेनेति ॥ मर्मरेषु मर्मरध्वनिमत्स्वित्यर्थः । अत्रातिशयोक्तिसंस्पर्शाभावान्न सहोक्तिरिति कश्चित्सुधीः । द्वीपान्तरेत्यादिना परिवृत्तिः । द्वीपान्तरानीतेन केनचिद्वस्तुना किञ्चित्क्रीणतो वणिजः प्रतीतेश्च समासोक्तिः । परिवृत्त्या च सोत्थाप्यत इति सङ्करः ॥

पदा—अनेनेति ॥ त्वम् अनेन सार्धम् अम्बुराशेः तीरेषु विहर । तालीवनेन मर्मरेषु मर्मरध्वनिमत्सु । अनेन मणितादिप्रयोगाणां निरशङ्कप्रवृत्तिर्द्योत्यते । मरुद्भिर्वातैरपाकृता आहृताः स्वेदलवाः सुरतश्रमजनिताः स्वेदबिन्दवो यस्याः । द्वीपान्तरादानीतानि लवङ्गपुष्पाणि यैः । 'लवङ्गं देवकुसुमम्' इत्यमरः । अत्र लवङ्गपुष्पैः स्वेदाम्भसां विनिमयात्परिवृत्तिरलङ्कारः । द्वीपान्तरादानीतेन केनचिद्वस्तुना किञ्चित्क्रीणतो वणिजः प्रतीतेः समासोक्तिश्च । सा च परिवृत्त्या समुत्थाप्यत इति तयोः सङ्करः ॥

प्रलोभिताप्याकृतिलोभनीया
विदर्भराजावरजा तयैवम् ।
तस्मादपावर्तत दूरकृष्टा
नीत्येव लक्ष्मीः प्रतिकूलदैवात् ॥ ५७ ॥

1 ङ्क ।

**प्रका**---**प्रलोभितेति**।। प्रलोभनमिच्छाप्रेरणम्। आकृत्या लोभनीया स्पृहणीया। अपावर्तत अपजगाम। दूरकृष्टा भृशमाकृष्टापीत्यर्थः। प्रतिकूलदैवादित्युभयविशेषणम् ।।

**पदा**—**प्रलोभितेति**।। विदर्भराजावरजा तया एवं प्रलोभिता अपि तस्मात् अपावर्तत। प्रलोभनमिच्छाप्रवर्तनं तत्कारितापि। अपावर्तत अपजगाम। नीत्या दूरकृष्टा लक्ष्मीः प्रतिकूलदैवात् इव। नीत्या नयशास्त्रानुगुणया प्रवृत्त्या। दूरकृष्टा भृशमाकृष्टा। अपिशब्दोऽत्राप्यनुषज्यते। प्रतिकूलं दैवं यस्य। पुरुषादिति शेषः। प्रतिकूलदैवत्वं प्रकृतेऽपि द्रष्टव्यम्। आकृत्या लोभनीया स्पृहणीया ।।

अथोरगाख्यस्य पुरस्य नाथं
दौवारिकी देवसरूपमेत्य।
इतश्चकोराक्षि विलोकयेति
पूर्वानुशिष्टां निजगाद भोज्याम् ।। ५८ ।।

**प्रका**—**अथेति**।। पाण्ड्येषु कायकुटी नाम नदी। तत्तीरे नागपुरम्। तदुरगपुरमित्युच्यते। दौवारिकी द्वारे नियुक्ता। देवसमानमित्यद्भुतत्वमुक्तम्। इतो विलोकयेति। अद्भुतं ते दर्शयामीति भावः। एतद्द्योतयितुम् इति पूर्वानुशिष्टामिति। अनेनानन्तरवाक्यात्पृथक्त्वं कविर्निदर्शितवान्। भोज्यामित्याभिजनं नाम ।।

**पदा**—**अथेति**।। अथ दौवारिकी उरगाख्यस्य पुरस्य नाथम् एत्य भोज्यां निजगाद। दौवारिकी द्वारे नियुक्ता उरगाख्यं पुरं नागपुरम्। उरगस्याख्या नाम यस्येति विग्रहः। पाण्ड्यदेशे कायकुटी नाम नदी प्रवहति। तस्यास्तीरे नागपुरम्। तदुरगपुरमित्युच्यते। भोज्यां विशिनष्टि—चकोराक्षि त्वम् इतः विलोकय इति। पूर्वानुशिष्टाम् इति। चकोरस्याक्षिणी इवाक्षिणी यस्याः। अक्ष्णोश्चकोराक्षिसाम्यं रागविशेषप्रयुक्तं कविसमयसिद्धम्। वक्ष्यति च—'चकार सा मत्तचकोरनेत्रा' इति। इतः एतस्मिन् प्रदेशे। पूर्वानुशिष्टां प्रथममेव अनुशिष्टां नियुक्ताम् दर्शनीयं त्वया द्रष्टव्यतामिति प्रथममुक्त्वा

पश्चान्निजगादेत्यर्थः। दर्शनीयत्वमेवोपपादयति — देवसरूपमिति। देवेन देवेन्द्रेण समानं रूपं यस्य॥

पाण्ड्योऽयमंसार्पितलम्बहारः
क्लृप्ताङ्गरागो हरिचन्दनेन।
आभाति बालातपरक्तसानुः
सनिर्झरोद्गार इवाद्रिराजः ॥ ५९ ॥

प्रका—पाण्ड्य इति॥ हरिचन्दनेन गोशीर्षाख्येन चन्दनेन। 'तैलपर्णीकगोशीर्षे हरिचन्दनमस्त्रियाम्' इति सिंहः। तच्च ताम्रसारम् इति केशवः। उद्गारो निर्गमं लक्षयति। गौणत्वाच्च न घृणावत्त्वम्। वाक्यार्थयोरेवोपमानोपमेयत्वात्पदार्थगतः रूपभेदो नात्यन्तदोषाय॥

पदा—पाण्ड्य इति॥ अयं पाण्ड्यः पाण्ड्यदेशाधिपतिः। लम्बन्त इति लम्बाः। अंसयोरर्पिता लम्बाश्च हारा यस्य। हरिचन्दनं रक्तचन्दनम्। 'तैलपर्णीकगोशीर्षे हरिचन्दनमस्त्रियाम्' इत्यमरः। तच्च ताम्रसारम् इति केशवः। तेन क्लृप्तो विरचितोऽङ्गरागो यस्य। अत एवोपमिनोति—बालातपरक्तसानुः सनिर्झरोद्गारः अद्रिराजः इव आभाति इति। बालातपैः रक्ताः सानवो यस्य। 'वारिप्रवाहो निर्झरो झरः' इत्यमरः। तस्योद्गारो निर्गमस्तेन सहितः। उद्गारशब्दस्यात्र लाक्षणिकत्वान्न घृणावहत्वदोषः॥

विन्ध्यस्य संस्तम्भयिता महाद्रे-
र्निःशेषपीतोज्झितसिन्धुराजः।
प्रीत्याश्वमेधावभृथार्द्रमूर्तेः
सौस्नातिको यस्य भवत्यगस्त्यः ॥ ६० ॥

प्रका — विन्ध्यस्येति॥ निःशेषेति। तथापान तथोज्झनमद्भुतमिति भावः। प्रीत्या गुणानुरागेण। सुस्नातं पृच्छतीति सौस्नातिकः। 'पृच्छतौ सुस्नातादिभ्य उपसंख्यानम्' इति ठक्। अगस्त्य इति। कोऽस्मादन्यो धन्य इति भावः॥

**पदा—विन्ध्यस्येति** ॥ अगस्त्यः प्रीत्या यस्य सौस्नातिकः भवति। प्रीत्या गुणानुरागेण हेतुना। शोभनं स्नातं सुस्नातं, तत्पृच्छतीति सौस्नातिकः। 'पृच्छतौ सुस्नातादिभ्य उपसंख्यानम्' इति ठक्। तव स्नानं किं शोभनं प्रवृत्तमासीदिति प्रश्नकारीत्यर्थः। अस्मादन्यः को धन्यतम इति भावः। विन्ध्यस्य महाद्रेः संस्तम्भयिता सम्यक्स्तम्भनकारी। पूर्वं निःशेषपीतः पश्चादुज्झितश्च सिन्धुराजः समुद्रो येन। अश्वमेधे यदवभृथस्नानं तेनार्द्रा मूर्तिः शरीरं यस्य। नित्यप्रवृत्ताश्वमेधस्येत्यर्थः ॥

अस्त्रं हरादाप्तवता दुरापं
येनेन्द्रलोकावजयाय सृष्टः।
पुरा जनस्थानविमर्दशङ्की
संधाय लङ्काधिपतिः प्रतस्थे ॥ ६१ ॥

**प्रका—अस्त्रमिति** ॥ पुरा किल निकटवर्तिनो रावणाद्भीतः पाण्ड्यः परमेश्वरमाराध्य दुर्जयं ब्रह्मशिरो नामास्त्रमवापेति प्रशस्तिमालायां श्रूयते। अवजयो हरणम्। यथाह गौतमः— 'चोरहृतमवजित्य यथास्थानं गमयेत्' इति। सृष्टोऽध्यवसितः। जनस्थानं नाम खरदूषणादीनामावासः। इन्द्रमभियास्यन् रावणः पार्ष्णिग्राहमेनममन्यतेत्यर्थः ॥

**पदा—अस्त्रमिति** ॥ पुरा इन्द्रलोकावजयाय सृष्टः लङ्काधिपतिः येन संधाय प्रतस्थे। अवजयो हरणम्। यथा गौतमः —'चोरहृतमवजित्य यथास्थानं गमयेत्' इति। सृष्टोऽध्यवसितः। 'सृष्टश्चेद्ब्राह्मणवधः' इत्यादि गौतमः। इन्द्रलोकमपहर्तुमुद्युक्तो रावणो यं पार्ष्णिग्राहं कृत्वा प्रस्थितवानित्यर्थः। तत्र हेतुः— जनस्थानविमर्दशङ्कीति। जनस्थानं खरदूषणादिनिवासस्थानं, तस्य विमर्दं विनाशं शङ्कितुं शीलमस्येति तथा। हरात् दुरापम् अस्त्रम् आप्तवता। परमेश्वरात्सकाशादन्यदुष्प्रापं ब्रह्मशिरो नामास्त्रं प्राप्तवता। पाण्ड्येष्वेकः पर्यन्तवर्तिनो रावणाद्भीतः परमेश्वरमाराध्य तत्सकाशादन्यदुर्लभं ब्रह्मशिरो नामास्त्रं लब्ध्वा दुर्जयोऽभूदिति प्रशस्तिमालायां श्रूयते ॥

अनेन पाणौ विधिवद्गृहीते
महाकुलीनेन महीव गुर्वी।
रत्नानुविद्धार्णवमेखलाया
दिशः सपत्नी भव दक्षिणस्याः ॥ ६२ ॥

प्रका—अनेनेति॥ गुर्वीति। नायिकानां माननीयत्वं गुरुत्वम्। महीवेति। मह्याः प्रथममेव सपत्नीभूतत्वात्। सपत्नी भवेति। तयोस्तृतीया भवेत्यर्थः। दक्षिणस्या दिश इति। दक्षिणापथनृपाणां तद्विधेयत्वात्। स एव तस्या दिशः पतिरिति भावः। अर्णवस्य मेखलात्वेन नायिकायाश्च सपत्नीत्वेन रूपणाद्दिशः प्रतिनायिकात्वेन रूपणमार्थमित्येकदेशविवर्ति रूपकम्॥

पदा—अनेनेति॥ त्वम् अनेन विधिवत् पाणौ गृहीते दक्षिणस्याः दिशः सपत्नी भव। दक्षिणापथवर्तिनां राज्ञामेतदधीनत्वाद्दक्षिणस्या इत्युक्तम्। महीव। भूमेर्दक्षिणस्या दिशः सपत्नीत्वं प्रागेव जातम्। त्वं तयोस्तृतीया भवेत्यर्थः। महाकुलीनेन महाकुलोत्पन्नेन। गुर्वीत्युभयविशेषणम्। नायिकापक्षे गुरुत्वं माननीयत्वम्। महीपक्षे महत्त्वम्। रत्नैरनुविद्धस्सहितोऽर्णव एव मेखला यस्याः। अत्रार्णवस्य मेखलात्वेन नायिकायाः सपत्नीत्वेन च रूपणात् दिशः प्रतिनायिकात्वेन रूपणमार्थमित्येकदेशविवर्ति रूपकमिदम्॥

ताम्बूलवल्लीपरिणद्धपूगा-
स्वेलालतालिङ्गितचन्दनासु।
तमालपत्रास्तरणासु रन्तुं
प्रसीद शश्वन्मलयस्थलीषु ॥ ६३ ॥

प्रका—ताम्बूलेति॥ आस्तरणं शय्या। शश्वदसकृत्। आद्याभ्यां विशेषणाभ्यां स्थावरमिथुनान्यपि तत्रानुरूपसङ्घटनानीति द्योत्यते॥

पदा—ताम्बूलेति॥ त्वं मलयस्थलीषु शश्वत् रन्तुं प्रसीद। रन्तुं रुचिं विधेहीत्यर्थः। ताम्बूलवल्लीभिः परिणद्धा बद्धाः पूगा यस्याम्। एलालताभिरालिङ्गिताश्चन्दनवृक्षा यस्याम्। विशेषणाभ्यां तत्र स्थावरमिथुनानामपि परस्परानुगुणसङ्घटनपरत्वं द्योत्यते। तद्देशसुलभं तमालपत्रमेवास्तरणं शय्या यस्याम्। अनेनोद्दीपनत्वमुक्तम्।

इन्दीवरश्यामतनुर्नृपोऽसौ
त्वं रोचनागौरशरीरयष्टिः ।
अन्योन्यशोभापरिवृद्धये वां
योगस्तटित्तोयदयोरिवास्तु ॥ ६४ ॥

**प्रका** — इन्दीवरेति ॥ अन्योन्येति । परभागाच्छोभेत्यर्थः । वामित्येकशेषेण क्रमस्य तिरोभूतत्वान्न क्रमलङ्घनम् ॥

**पदा** — इन्दीवरेति ॥ असौ नृपः इन्दीवरश्यामतनुः कुवलयदळश्यामळशरीरः । त्वं रोचनागौरशरीरयष्टिः । गोरोचनेव गौरा पीता शरीरयष्टिः प्रशस्तं शरीरं यस्याः । 'पीतो गौरो हरिद्राभः' इत्यमरः । अत एव — वां योगः अन्योन्यशोभापरिवृद्धये अस्तु । परभागलाभात्परस्परशोभापरिवर्धनायास्तु । तत्रोपमा — तटित्तोयदयोरिवेति ॥

स्वसुर्विदर्भाधिपतेस्तदीयो
लेभेऽन्तरं चेतसि नोपदेशः ।
दिवाकरादर्शनबद्धकोशे
नक्षत्रनाथांशुरिवारविन्दे ॥ ६५ ॥

**प्रका** —स्वसुरिति ॥ अन्तरमवकाशम् । प्रवेश एव नाभवदित्यर्थः । दिवाकरादर्शनबद्धकोश इति । प्रसिद्धः तत्स्वभाव इत्यर्थः । अस्य च प्रकृतेऽपि निसर्गस्य हेतुत्वं द्योतयितुमुपात्तत्वान्न धर्माधिक्यदोषः । अत्र तनो गतेत्यर्थादायातम् ॥

**पदा** —स्वसुरिति ॥ तदीयः उपदेशः विदर्भाधिपतेः स्वसुः चेतसि अन्तरं न लेभे । सुनन्दाया उपदेशरूपं वचनम् इन्दुमत्याश्चेतसि अन्तरमवकाशं न लेभे । प्रवेश एव नाभवत्, कुतः पुनर्विचारदशेति भावः । दिवाकरादर्शनबद्धकोशे अरविन्दे नक्षत्रनाथांशुः इव । दिवाकरस्य सूर्यस्य अदर्शनेन बद्धो विकासशून्यः कोशो यस्य । अजदर्शनेनैवास्याश्चित्तविकार इत्युपमया ध्वन्यते ॥

सञ्चारिणी दीपशिखेव रात्रौ
यं यं व्यतीयाय पतिंवरा सा ।
नरेन्द्रमार्गाट्ट इव प्रपेदे
विवर्णभावं स स भूमिपालः ॥ ६६ ॥

प्रका—अत एवाह—सञ्चारिणीति ॥ नरेन्द्रमार्गो नरेन्द्रो येन मार्गेण गतः । अट्टः क्षौमसंज्ञो गृहविशेषः ॥ 'अट्टो नातिशये घाते क्षौम-संज्ञगृहान्तरे । शुष्कस्फुटितभूभागे त्रिषु पक्वौदने न ना ॥' इति केशवः । 'स्यादट्टः क्षौममस्त्रियाम्' इति सिंहः । तस्य क्षीरस्वामिना व्याख्या कृता—'अटन्त्यट्टन्त्यत्र वाट्टोऽट्टालकः । 'अट्टातिक्रमहिंसयोः' इति धातुः । 'प्राकाराग्रे रणगृहम्' इति कौटल्यः । क्षुवन्ति शब्दायन्ते अत्र योधाः क्षौमः । प्राकार-धारणार्थोऽभ्यन्तरो वा क्षौमाख्य इत्येके' इति । अत्रापि विशिष्टस्योपमानत्वात्स-ञ्चारिणीति न धर्माधिक्यम् । अत्र महाप्रकरणे' प्रतिराजवर्णनानि कानिचिद्वा-क्यानि निन्दागर्भत्वेन कन्याव्यावर्तनपराणि । अत्र आद्ये वर्णने, क्रियाप्रबन्धा-दित्यादिना तस्मिन् भोगस्य का कथेति द्योत्यते । द्वितीये तु, अनेन पर्यास-यतेत्यादिना निर्दयत्वम् । तृतीये, आरोप्य चक्रभ्रममित्यादिना प्रति-पादितोष्णांशुसाम्येन दुष्प्रेक्षत्वम् । चतुर्थेऽपि, आयोधन इत्यादिना महाभारतादि-प्रसिद्धविदूषितदारत्वादकुलीनत्वम् । पञ्चमे, अस्यावरोधस्तनचन्दनानामित्या-दिना बहुवल्लभत्वम् । षष्ठे तु, अनेन सार्धमित्यादिना मर्मरध्वनिमत्त्वादिना विहारसौख्याभावः । सप्तमे तु, अनेन पाणावित्यादिना विदूरदेशत्वम् इति व्यावर्तनकारणानि । तथा च दण्डिनोक्तम्—'लेशमेके विदुर्निन्दां स्तुतिं वा लेशतः कृताम्' इति । उदाहृतं च—'युवैव गुणवान् राजा योग्यस्ते पतिरूर्जितः । रणोत्सवे मनस्सक्तं यस्य कामोत्सवादपि ॥' इति । योजितं च—'वीर्योत्कर्ष-स्तुतिर्निन्दैवास्मिन् भावनिवृत्तये । कन्यायाः कल्पते भोगान्निर्विवक्षोर्निरन्तरान् ॥' इति । तस्माल्लेशच्छायानुसर्तव्येति केचिदाहुः । तदनालोचनविलसितं मन्तव्यम् । तथा हि— किं केनचिल्लक्षणकारेणोक्तं स्वयंवरविधावेवं विधेयमिति । यस्तु दण्डिनो लेशः, सोऽस्मन्मते व्याजस्तुतिः । न च तस्याः स्वयंवरविषयत्वमुक्तम् । तदुदाहरणदृशा त्वत्र तत्परिकल्पनमन्याय्यं नोदाहरणीयमिति प्रसिद्धो मार्गः । योजनापि तदनुसारिणी नादरणीया । किञ्च, निन्दाया विधेयत्वे तावान्

स्तुतिप्रबन्धः सुनन्दाया गजस्नानकल्पः स्यात्। स हि राज्ञां प्रकोपं परिहर्तुमिति चेत् तर्हि कवेः 'स तत्र मञ्चेषु' इत्यादिकैः सामान्येन 'निदर्शयामास' इत्यादिकैर्वाक्यैर्विशेषेण यल्लोकोत्तरतया वर्णनं तत्कोपयोगि। 'प्रलोभिता' इत्यादि प्रलोभवचनं चासङ्गतम्। कश्चायमर्थः, यदन्यथानुपपत्त्यैवं कल्प्यते। कन्याव्यावृत्तेस्तु कविनैव भवितव्यताबलोपनतो रुचिभेदो नवीकृतत्वदोषपरिहाराय भङ्गिभेदेन हेतुतया तत्र तत्र वर्णितः। न चैतानि व्यावृत्तिं प्रयोजयितुमलम्। तथा हि—तत्र भोगस्य दुर्लभत्वं यदुक्तं, तद्यत्किञ्चिदेव। न हि तादृश्योऽभिजनादिसंपन्ना उत्तमनायिकाः पुरुषार्थपराङ्मुख्यो भोगैकप्रवणा वा स्युः। तासां हि धीरोदात्तप्रकृतित्वाद्विलासगृहादपि यज्ञशालायां प्रीतिः सम्भवति। तदुक्तं विच्छिन्नाभिषेकप्रस्तावे सीतया—'दीक्षितं व्रतसम्पन्नं वराजिनधरं शुचिम्। कुरङ्गशृङ्गपाणिं च पश्यन्ती त्वां भजाम्यहम्॥' इति। तथा शत्रुवधे निर्दयत्वं यदुच्यते दोषः, तर्हि वीतराग एवात्राधिकारी स्यात्। प्रभाशालित्वं तु गुण एव। यथा—'सुन्दरी सा न वेत्त्येष विवेकः केन जायते। प्रभामात्रं हि तरळं दृश्यते नात्र संशयः॥' इति। दूषितदारत्वमसिद्धम्। महाभारते हि—'तत्र माहिष्मतीवासी भगवान् हव्यवाहनः। श्रूयते निगृहीतो वै पुरस्तात्पारदारिकः। नीलस्य राज्ञः पूर्वेषामुपनीतश्च सोऽभवत्॥ तदा ब्राह्मणरूपेण चरमाणो यदृच्छया। तं तु राजा यथाशास्त्रमशासद्धार्मिकस्तदा॥' इत्यादिषु कुलदूषणं किमुपलभ्यते। प्रजानामपचारश्च सर्वत्र सम्भवी। तदाह—'कः कदा किं कुतः कुर्यादिति को ज्ञातुमर्हति'॥ इति। बहुवल्लभत्वं तु, स्नेहबहुमानपदम्। यदाहुः—'स्त्रियः कामितकामिन्यो मुर्खाः पूजितपूजकाः।' इति। अन्यथा षोडशसहस्रान्तःपुरे भगवति न कस्याश्चिदप्यनुरागो जायेत। मर्मरशब्दवत्त्वं तु, प्रत्युतानुरागहेतुतयोपन्यस्तं विदग्धया प्रतिहार्या। यतोऽभिनवोपदिष्टमणितादिप्रयोगप्रतिबन्धभूतायास्त्रपायाः प्रतीकारस्तत्र ते सुलभ इति द्योत्यते। विदूरत्वं तु, विदर्भाणां पाण्ड्यानां च कियत्। उभयेषामपि दक्षिणापथान्तर्भूतत्वात्। एतानि च व्यावर्तनकारणानि प्रायशो नायकवर्णनेऽपि सुयोजानि। किं च, कविनैव कण्ठोक्त्या दर्शितं प्रबलतरं कारणमनादृत्य कारणान्तरं मृग्यत इत्यहो विजिगीषुत्वम्। तथा च भोजराजः—'इयं महेन्द्रप्रभृतीनधिश्रियः' इत्युदाहृत्य नैसर्गिकीं प्रीतिमलङ्घ्यां दर्शितवान्। कारणान्तराभावश्च 'नासौ न काम्यः' इत्यादिभिर्वाक्यैः कवेर्विवक्षितः प्रतीयते। तदेवंस्थितेऽपि यदि गतानुगतिकतैवाङ्गीक्रियते तत्कामम् अङ्गीक्रियताम्। किं नः छिन्नम्॥

पदा—सञ्चारिणीति ॥ पतिंवरा सा रात्रौ सञ्चारिणी दीपशिखा इव यं यं व्यतीयाय, स सः भूमिपालः नरेन्द्रमार्गाट्टः इव विवर्णभावं प्रपेदे। अट्टः क्षौमसंज्ञो गृहविशेषः। 'स्यादट्टः क्षौममस्त्रियाम्' इत्यमरः। नरेन्द्र-मार्गो राजमार्गः। तत्र पार्श्वद्वये योधानां निवासार्थं[1] पङ्क्तिशः समुन्नताः क्षौमगृहाश्च विधीयन्ते। यथा तन्मध्ये प्रदीपधारिणीभिः परिवृते राजनि निर्गते सति पृष्ठवर्तिनामट्टानां तमसा कार्ष्ण्यं तथात्वापीत्यर्थः ॥

तस्यां रघोः सूनुरुपस्थितायां
वृणीत वा[2] नेति समाकुलोऽभूत्।
वामेतरस्संशयमस्य बाहुः
केयूरबन्धोच्छ्वसितैर्नुनोद ॥ ६७ ॥

प्रका—तस्यामिति ॥ उपस्थितायामित्यनुवादेनोपस्थितेति गम्यते। वृणीतेत्यादिना वितर्क उक्तः। 'तर्को विचारः सन्देहाद्भ्रूशिरोङ्गुलिनर्तकः' इति। केयूरमत्र बध्यते इति केयूरस्थानं केयूरबन्धः तस्योच्छ्वसितैः स्फुरितैः। नुनोद। अर्थसिद्धिसूचकत्वात्। यथा शाकुन्तले—'शान्तमिदमाश्रमपदं स्फुरति च बाहुः' इत्यादि ॥

पदा—तस्यामिति ॥ रघोः सूनुः तस्याम् उपस्थितायां वृणीत वा न वा इति समाकुलः अभूत। किमियं पूर्ववन्मामतिक्रामति वृणीत वा इति सन्देहाद्व्याकुलोऽभूत्। अस्य वामेतरः बाहुः केयूरबन्धोच्छ्वसितैः संशयं नुनोद। वामेतरो दक्षिणः। केयूरं बध्यतेऽत्रेति व्युत्पत्त्या केयूरबन्धः केयूर-बन्धनस्थानम्। 'केयूरमङ्गदं तुल्ये' इत्यमरः। उच्छ्वसितं स्फुरणम्। नुनोद तत्याज। दक्षिणभुजस्पन्दस्याभीष्टार्थसिद्धिसूचकत्वादिति भावः। उक्तं च शाकुन्तले—'शान्तमिदमाश्रमपदं स्फुरति च बाहुः' इत्यादि ॥

तं प्राप्य सर्वावयवानवद्यं
व्यावर्ततान्योपगमात्कुमारी।
न हि प्रफुल्लं[3] सहकारमेत्य
वृक्षान्तरं काङ्क्षति षट्पदाली ॥ ६८ ॥

1 निवेशार्थं। 2 मां। 3 ल्लं।

प्रका — तमिति ॥ सर्वेभ्योऽन्येभ्यो रूपसम्पदस्सविशेषतां द्योतयति। व्यावर्तत निवृत्तेच्छाभूदित्यर्थः। प्रफुल्लं विकसितकुसुममित्यर्थः। प्रतिवस्तूपमा ॥

पदा—तमिति ॥ कुमारी तं प्राप्य अन्योपगमात् व्यावर्तत निवृत्तेच्छाभूत्। अत्र हेतुः — सर्वावयवानवद्यमिति। सर्वेष्ववयवेष्वनवद्यं निर्दोषम्। अनेन रूपसम्पदा पूर्वराजेभ्यो व्यतिरेक उक्तः। षट्पदाळी प्रफुल्लं सहकारम् एत्य वृक्षान्तरं न काङ्क्षति हि। प्रफुल्लं विकसितकुसुमम्। अत्र प्रतिवस्तूपमालङ्कारः ॥

तस्मिन् समावेशितचित्तवृत्ति-
मिन्दुप्रभामिन्दुमतीमवेक्ष्य।
प्रचक्रमे वक्तुमनुक्रमज्ञा
सविस्तरं वाक्यमिदं सुनन्दा ॥ ६९ ॥

प्रका—तस्मिन्निति ॥ समावेशितचित्तवृत्तिमिति झटित्येव मनस्सङ्गाख्यद्वितीयदशाधिरूढिः कामस्योक्ता। इन्दुप्रभामिति लावण्यमपेक्ष्योक्तम्। अन्यथा रोचनागौरत्वविरोधात्। अवेक्ष्येति सविस्तरवाक्योपक्रमहेतुः। प्रचक्रम इत्युपसंहारस्य दूरस्थतां द्योतयति। अत एवाह — सविस्तरमिति। तच्चादरविशेषद्योतकम्। अनुक्रमज्ञा अपेक्षितानुरूपक्रमवेदिनी। इदमिति वक्ष्यमाणम् ॥

पदा—तस्मिन्निति ॥ सुनन्दा इन्दुमतीं तस्मिन् समावेशितचित्तवृत्तिम् अवेक्ष्य सविस्तरम् इदं वाक्यं वक्तुं प्रचक्रमे। समावेशिता सम्यगावेशिता चित्तवृत्तिर्मनोव्यापारो यस्याः। अनेन चित्तासङ्गाख्यद्वितीयकामिदशाप्राप्तिस्तदानीमेव जातेत्युक्तम्। 'नयनप्रीतिः प्रथमं चित्तासङ्गस्ततोऽथ सङ्कल्पः। निद्राच्छेदस्तनुता विषयनिवृत्तिस्त्रपानाशः ॥ उन्मादो मूर्छा मृतिरित्येता स्मरदशा दशैव स्युः ॥' इति हि वदन्ति। सविस्तरमिति क्रियाविशेषणम्। इदं वक्ष्यमाणम्। प्रचक्रमे आरेभे। इन्दोः प्रभेव प्रभा यस्याः। इदं लावण्यप्रभापेक्षयोक्तम्। अन्यथा रोचनागौरशरीरयष्टित्वविरोधात्। अनुक्रममनुरूपं क्रमं जानातीत्यनुक्रमज्ञा ॥

1 कामिनां दशा इति पाठान्तरम् ॥

इक्ष्वाकुवंश्यः ककुदं नृपाणां
ककुत्स्थ इत्याहितलक्षणोऽभूत् ।
काकुत्स्थशब्दं यत उन्नतेच्छाः
श्लाघ्यं दधत्युत्तरकोसलेन्द्राः ॥ ७० ॥

प्रका—इक्ष्वाकुवंश्य इति ॥ ककुदं प्रधानम् । ककुदि तिष्ठतीति ककुत्स्थः । 'गुणैः प्रतीते तु कृतलक्षणाहितलक्षणौ' इति सिंहः । यतो यस्मादारभ्य । उन्नतेच्छा महेच्छाः । 'महेच्छस्तु महाशयः' इति सिंहः ॥

पदा—इक्ष्वाकुवंश्य इति ॥ इक्ष्वाकुवंश्यः ककुत्स्थः इति अभूत् । इक्ष्वाकुवंशजातः ककुत्स्थ इति प्रसिद्धः कश्चिदभूत् । नृपाणां ककुदं प्रधानम् । 'ककुदं शृङ्गे विदुः प्रधाने च' इति हलायुधः । आहितलक्षणो गुणैः प्रसिद्धः । 'गुणैः प्रतीते तु कृतलक्षणाहितलक्षणौ' इत्यमरः । यतः उत्तरकोसलेन्द्राः काकुत्स्थशब्दं दधति । यस्मादारभ्योत्तरकोसलाधिपतयः काकुत्स्थशब्दवाच्या बभूवुः । उन्नतेच्छा महेच्छाः । 'महेच्छस्तु महाशयः' इति सिंहः । श्लाघ्यं पूज्यम् ॥

महेन्द्रमास्थाय महोक्षरूपं
यस्संयति प्राप्तपिनाकिलीलः ।
चकार बाणैरसुराङ्गनानां
गण्डस्थलीः प्रोषितपत्रलेखाः ॥ ७१ ॥

प्रका—ककुत्स्थशब्दस्य निरुक्तिं द्योतयन्नितिहासप्रसिद्धमर्थमनुसंधत्ते—महेन्द्रमिति ॥ आस्थायारुह्य । अत एव प्राप्तपिनाकिलीलः । अत्र प्रस्तुतस्य कारणभूतस्य तद्भर्तृविनाशस्य प्रतीतेरप्रस्तुतप्रशंसा । अस्मिन्वचने[1] श्रीविष्णुपुराणवचनं द्रष्टव्यम् ॥

पदा—अथ ककुदि तिष्ठतीति ककुत्स्थ इति शब्दस्यान्वर्थतां द्योतयन् विष्णुपुराणप्रसिद्धां कथामनुवदति—महेन्द्रमिति ॥ यः संयति महोक्षरूपं

1 अस्मिन्नर्थे श्रीविष्णुपुराणं द्रष्टव्यम् ॥

महेन्द्रम् आस्थाय बाणैः असुराङ्गनानां गण्डस्थलीः प्रोषितपत्रलेखाः चकार। 'पुरा किल सुराधीशैरसुरेभ्यः पराजितैः। अर्थितो भगवान्विष्णुः सूर्यवंश्यं पुरंजयम् ॥ तेजसानुप्रविष्टोऽभूत् सोऽधिष्ठाय शतक्रतोः। वृषरूपस्य ककुदं जघानासुरयूथपान् ॥ ततः ककुत्स्थ इत्याख्यां प्राप राजर्षिसत्तमः।' इति श्रीविष्णुपुराणप्रसिद्धायाः कथायाः संक्षेपः। प्रोषिता गता पत्रलेखा अलङ्कारविशेषो यासाम्। प्राप्ता पिनाकिनो वृषाधिष्ठानरूपा लीला येन। पिनाकिशब्देन धनुषः पिनाकसाम्यं गम्यते। अत्र पत्रलेखात्यागस्य कारणभूतः पतिविनाशः प्रतीयत इत्यप्रस्तुतप्रशंसा ॥

ऐरावतास्फालनविश्लथं यः
संघट्टयन्नङ्गदमङ्गदेन।
उपेयुषः स्वामपि मूर्तिमग्र्या-
मर्धासनं गोत्रभिदोऽधितष्ठौ ॥ ७२ ॥

**प्रका**—ऐरावतेति ॥ आस्फालनमुद्धर्षणायेत्युक्तचरम्। तेन विश्लथं शिथिलसंनिवेशम्। संघट्टयन्नाघ्नानः। एतदर्धासनाधिष्ठानक्रियास्वभावोक्तिः। स्वामग्र्यां मूर्तिमिति। महोक्षरूपं विहाय स्वमैश्वर्योर्जितं रूपं प्राप्तवत इत्यर्थः। अपिराख्यातेन संबध्यमानो वाक्यार्थं समुच्चिन्वन्नद्भुतस्योपर्यद्भुतमिदमिति द्योतयति। गोत्रभिद इति षष्ठ्या अर्धासनस्य दुर्लभत्वं ध्वन्यते ॥

**पदा**—ऐरावतेति ॥ यः स्वाम् अग्र्यां मूर्तिम् उपेयुषः गोत्रभिदः अर्धासनम् अधितष्ठौ अपि। यो वृषरूपं परित्यज्यात्मीयामग्र्यामैश्वर्योर्जितां मूर्तिं प्राप्तवतो महेन्द्रस्यार्धासनमधिष्ठितवांश्च। कोऽस्मादन्यो धन्यतम इति भावः। अङ्गदेन अङ्गदं संघट्टयन् आघ्नन्। अनेन परस्परसंमर्दनावस्थानमुक्तत्। तेन च शङ्कालेशस्याप्यभावो ध्वन्यते। ऐरावतस्यास्फालनेनोद्धर्षणार्थेन ताडनेन विश्लथं शिथिलसंनिवेशम् ॥

जातः कुले तस्य किलोरुकीर्तिः[1]
कुलप्रदीपो नृपतिर्दिलीपः।
अतिष्ठदेकोनशतक्रतुत्वे
शक्राभ्यसूयाविनिवृत्तये यः ॥ ७३ ॥

1 र्तिः।

प्रका—जात इति ॥ तस्येति किमित्याह—उरुकीर्तिरिति। कीर्तिशाली हि व्यपदेश्य इति भावः। अतिष्ठत् तत्पर्यवसितोद्यमोऽभूदित्यर्थः। शक्राभ्यसूयाविनिवृत्तये। न तु शक्तिवैकल्यादिति भावः॥

पदा—जात इति॥ तस्य कुले दिलीपः नृपतिः जातः किल। किलेति प्रसिद्धौ। उरुकीर्तिर्बहुतरयशसः। कुलप्रदीपः कुलस्य प्रदीप इव प्रकाशकः। यः शक्राभ्यसूयाविनिवृत्तये एकोनशतक्रतुत्वे अतिष्ठत्। शक्रस्याभ्यसूयाया असूयाया विनिवृत्तये निवृत्तये। न तु शक्तिवैकल्यादिति भावः। एकोनशतं क्रतवो यस्य तस्य भावस्तत्त्वम्। अतिष्ठत् निवृत्तोद्यमोऽभूत्॥

यस्मिन्महीं शासति वाणिनीनां
निद्रां विहारार्धपथे गतानाम्।
वातोऽपि नास्रंसयदंशुकानि
को लम्बयेदाहरणाय हस्तम् ॥ ७४ ॥

प्रका—यस्मिन्निति॥ वाणिनी मुग्धा। 'स्त्री विदग्धा च मुग्धा च वाणिनीत्यभिधीयते' इति हलायुधः। मत्तयोषिद्वा वाणिनी। 'मत्तयोषिति नर्तक्यां विदग्धायां च कीर्तिता' इति केशवः। विहारार्धपथे क्रीडामार्गमध्ये। 'विहारस्तु न स्त्रियाम्। सौगतालये परिक्रमे च क्रीडायाम्' इति केशवः। लम्बयेत् प्रसारयेत्। आहरणाय। 'क्रियार्थे'त्यादिना चतुर्थी। मुग्धतया मत्ततया निद्रया मार्गगतत्वेन च सुहरत्वं ध्वनितम्। अथवा—वाणिन्यो नर्तक्यः। विहारार्धपथे सङ्केतविहारस्थानमार्गमध्ये। कुलवधूभयेन हि नर्तकीभिश्छन्नमेव संगच्छन्ते राजानो राजमात्रा वा॥

पदा—यस्मिन्निति॥ यस्मिन् महीं शासति विहारार्धपथे निद्रां गतानां वाणिनीनाम् अंशुकानि वातः अपि न अस्रंसयत्। विहारस्य क्रीडाया अर्धपथे अर्धमार्गे। 'विहारस्तु न स्त्रियाम्। सौगतालये परिक्रमे च क्रीडायाम्' इति केशवः। वाणिनीनां मुग्धस्त्रीणाम्। 'स्त्री विदग्धा च मुग्धा च वाणिनीत्यभिधीयते' इति हलायुधः। अंशुकानि वस्त्राणि। 'वस्त्रमाच्छादनं वासश्चेलं वसनमंशुकम्' इत्यमरः। अस्रंसयदचलयत्। कः आहरणाय हस्तं लम्बयेत्। 'क्रियार्थे'त्यादिना चतुर्थी। आहरणं कर्तुमित्यर्थः। लम्बयेत्

प्रमार्ग्येत्। मुग्धतया निद्रया मार्गस्थितया च सुहराण्यपि वसनानि देवतात्मा वायुरपि यद्भयाच्चालयितुं न शशाक, कोऽन्यः पुमानाहर्तुं समर्थ इत्यर्थः। अनेन चोरभयनिरास उक्तः॥

पुत्रो रघुस्तस्य पदं प्रशास्ति
महाक्रतोर्विश्वजितः प्रयोक्ता।
चतुर्दिगन्तार्जितसंभृतां[1] यो
मृत्पात्रशेषामकरोद्विभूतिम् ॥ ७५ ॥

**प्रका—पुत्र इति**॥ पदमिति। हिमवद्दक्षिणसमुद्रान्तरं चक्रवर्तिक्षेत्रम्। महाक्रतोरिति बहुफलत्वम्। विश्वजित इति लोकोत्तरशक्तिसम्परसाध्यत्वम्। प्रयोक्तेत्यधीयमानस्यापि तस्य क्रतोरतिविरळप्रयोगत्वम्। चतुर्दिगन्तार्जितत्वेन विभूतेरपरिमितत्वम्। संभृतां कोशागारं प्रवेशितामिति दुस्त्यजत्वं च ध्वन्यते। मृत्पात्रशेषामिति लोकसिद्धं कौत्सवृत्तान्तं स्मारयति॥

**पदा—पुत्र इति**॥ रघुः पुत्रः तस्य पदं प्रशास्ति। तस्य दिलीपस्य। हिमवद्दक्षिणसमुद्रान्तर्गतं सर्वमपि स्थानं प्रकर्षेण शास्ति सम्यक् रक्षति। विश्वजितः महाक्रतोः प्रयोक्ता कर्ता। यः चतुर्दिगन्तार्जितसंभृतां विभूतिं मृत्पात्रशेषाम् अकरोत्। चतुर्भ्योऽपि दिगन्तेभ्य आर्जितामाहृतां संभृतां कोशागारे विनिक्षिप्ताम्। अनेन क्लेशार्जितत्वाच्च दुस्त्यजत्वं ध्वनितम्। मृन्मयं पात्रमेव शेषं यस्याः।

आरूढमद्रीनुदधीन्प्रतीर्णं[2]
भुजङ्गमानां वसतिं प्रविष्टम्।
ऊर्ध्वं गतं यस्य न चानुबन्धि[3]
यशः परिच्छेत्तुमियत्तयालम् ॥ ७६ ॥

**प्रका—कुल**वा तदपदानानां वर्णनाया उपयोग इत्याह—**आरूढमिति**॥ अत्राद्याभ्यां विशेषणाभ्यां यशसो भूमिगतो विस्तारः। तृतीयेन पाताळगतः,

1 व। 2 वि। 3 न्धि य।

चतुर्थेन स्वर्गगतश्चोक्तः। अनुबन्धात्सर्वत्रानुस्यवनात्। परिच्छेत्तुं निर्णेतुम्। इयत्तया परिमाणेन। अलं पर्याप्तम्। शक्यमित्यर्थः। अतस्तद्वर्णनाद्विरम्यत इति भावः॥

पदा—आरूढमिति॥ यस्य यशः अनुबन्धात् इयत्तया परिच्छेत्तुं नालम्। अनुबन्धात्सर्वत्रानुस्यूतेः। सर्वत्र व्याप्तेरित्यर्थः। इयत्तया परिमाणेन। परिच्छेत्तुं निर्णेतुम्। नालं न पर्याप्तम्। न शक्यमित्यर्थः। यस्य यशस्सर्वत्र व्याप्तत्वादेतत्परिमाणमिदमिति निर्णेतुं न शक्यमित्यर्थः। एतदेव प्रपञ्चयति—आरूढमित्यादिना। अद्रीन् आरूढम्। हिमवदादावपि गतमित्यर्थः। उदधीन् प्रतीर्णम्। प्रकर्षेण तीर्णम्। अनेन भूमिगतो विस्तारो दर्शितः। भुजङ्गमानां वसतिं प्रविष्टम्। अनेन पाताळगतः। ऊर्ध्वं गतम्। अनेन स्वर्गगतः॥

असौ कुमारस्तमजोऽनुजात-
त्रिविष्टपस्येव पतिं जयन्तः।
गुर्वीं धुरं यो भुवनस्य पित्रा
धुर्येण सम्यक्सदृशं बिभर्ति ॥ ७७ ॥

प्रका—असाविति। अनुजात इति। अनोः 'तृतीयार्थे' इति कर्मप्रवचनीयत्त्वात्तमिति द्वितीया। तृतीयार्थश्च सहार्थः। तमनु जातः तेन सह जातः। तेन सदृश इत्यर्थः। यथा श्रीरामायणे—'अनुजातो हि मां सर्वैर्गुणैर्ज्येष्ठो ममात्मजः।' इति। न केवलं तद्गुणानुगम एवात्र, किं तु तद्वदेव स्वधर्मेऽपि स्थितिरस्तीत्याह—गुर्वीमिति। धुरं निर्वाहम्। भुवनस्य, न मण्डलमात्रस्य। धुर्येण निर्वाहकेण। सम्यगित्यश्रमसावधानत्वादि द्योत्यते। अत्र दान्तचरेण सम गुर्वीं धुरं बिभ्रद्दम्यमानो वत्सतरो यथा विस्मयाय, तथायमपीति ध्वन्यते। 'दम्यस्सदृशम्' इति वा पाठः॥

1. दम्यः।

पदा—अनयेति ॥ असौ तम् अनुजातः अजः कुमारः। अनोः 'तृतीयार्थे' इति कर्मप्रवचनीयत्वात्तमिति तृतीयार्थे द्वितीया। तृतीयार्थश्चात्र सहार्थः। तेन सह जात इत्यर्थः। सहजाश्च सदृशा भवन्ति। तेन सदृश इति भावः। तथा श्रीरामायणेऽपि प्रयोगः– 'अनुजातो हि मां सर्वैर्गुणैर्ज्येष्ठो ममात्मजः।' इति। त्रिविष्टपस्य पतिं जयन्त इव। अनुजात इत्यनुषज्यते। त्रिविष्टपस्य पतिरिन्द्रः। तेन सदृशो जातो जयन्त इवेत्यर्थः। यः भुवनस्य गुर्वीं धुरं धुर्येण पित्रा सदृशं सम्यक् बिभर्ति। भुवनस्य लोकस्य, न तु स्वमण्डलमात्रस्य। धुरं भारम्। धुर्यो धुरो वोढा तेन पित्रा सदृशं यथा भवति तथा सम्यक् बिभर्ति। अत्र धुर्यपदसामर्थ्यान्महोक्षेण समं गुर्वीं धुरं बिभ्रद्वत्सतरो यथा विस्मयकरो भवति, तथायमपीति ध्वन्यते ॥

कुलेन कान्त्या वयसा नवेन
गुणैश्च तैस्तैर्विनयप्रधानैः।
त्वमात्मनस्तुल्यममुं वृणीष्व
रत्नं समागच्छतु काञ्चनेन ॥ ७८ ॥

प्रका—कुलेनेति ॥ तैस्तैरिति। न कैश्चिदेवेत्यर्थः। अत्र गोबलीवर्दन्यायेन पृथगुपादानेनैव कुलकान्तिवयोभिः समं विनयस्यापि प्राधान्ये सिद्धेऽपि पुनः प्रधानशब्दोपादानं तेभ्योऽपि विनयस्य प्राधान्यार्थम्। यतो 'नेता विनीतः' इत्युद्देशे आदावेव विनयमुपदिशन्ति। आत्मनस्तुल्यगुणमिति। अतोऽन्यस्तवानुरूपो न विद्यत इति सूचयति। रत्नमित्यादि तु निदर्शना। भर्तृवरणप्रस्तावे रत्नकाञ्चनसमागमस्यासंभवतो विधानात्तत्तुल्यो युवयोः समागम इति हि पर्यवसानम् ॥

पदा—कुलेनेति ॥ त्वम् अमुं वृणीष्व। अयमेव ते सदृश इति भावः। एतदेवाह—कुलेनेत्यादिना। कुलेन कान्त्या नवेन वयसा विनयप्रधानैः तैः तैः गुणैः च आत्मनः तुल्यम्। नवं वयो यौवनम्। विनयः प्रधानं येषाम्। गुणेषु विनय एव हि प्रधानम्, अविनयो हि सर्वानपि गुणानधःकरोति। विनयप्रधानैरुक्तैरनुक्तैश्च गुणैस्तव तुल्यमित्यर्थः। रत्नं काञ्चनेन समागच्छतु। रत्नेनैव हि काञ्चनस्य शोभा, रत्नस्य तु काञ्चनेनैवेति भावः। अत्र भर्तृवरण-

प्रस्तावे रत्नकाञ्चनसमागमस्यासंभविनो विधानात्तत्तुल्यो वां समागम इत्युपमापर्यवसानान्निदर्शनालङ्कारः ॥

ततः सुनन्दावचनावसाने
लज्जां मृदूकृत्य नरेन्द्रकन्या ।
दृष्ट्या प्रसादामलया कुमारं
प्रत्यग्रहीत्संवरणस्रजेव ॥ ७९ ॥

प्रका—तत इति ॥ लज्जां सहजप्रतिबन्धभूताम् । मृदूकृत्य यत्नेन शिथिलयित्वा । प्रसादो हर्षः तेनामलया उज्वलया । प्रत्यग्रहीत् प्रकटिताङ्गीकारं विलोकितवतीत्यर्थः । संवरणस्रजा वरणार्थया स्रजा । तस्यास्तु प्रसादः स्वच्छत्वम् ।

पदा—तत इति ॥ ततः नरेन्द्रकन्या सुनन्दावचनावसाने लज्जां मृदूकृत्य दृष्ट्या कुमारं प्रत्यग्रहीत् । सहजामपि लज्जां प्रयत्नेन शिथिलीकृत्य प्रकटिताङ्गीकारमवलोकयामासेत्यर्थः । संवरणस्रजा इव । संवरणं वरणं तदर्थया मालयेव । प्रसादेन हर्षेण स्वच्छत्वेन च, अमलया निर्मलया ॥

सा यूनि तस्मिन्नभिलाषबन्धं
शशाक शालीनतया न वक्तुम् ।
रोमाञ्चलक्षेण स गात्रयष्टिं
भित्वा निराक्रामदराळकेश्याः ॥ ८० ॥

प्रका—सेति ॥ यूनि । तस्यैव युवत्वं सफलमित्यर्थः । बन्धः स्थिरीभावः । शालीनतया अधृष्टतया । 'शालीनकौपीने अधृष्टाकार्ययोः' इति निपातः । लक्षो व्याजः । 'व्याजोऽपदेशो लक्षश्च' इति सिंहः । अत्र लक्षशब्दोपादानेऽपि नापह्नुतिरलङ्कारः । प्रकृताप्रकृतभावाभावात् । अपह्नवोक्तेस्तु निमित्तं रोमाञ्चस्य तत्कार्यत्वम् फलं चातिस्फुटत्वम् । अराळं कुञ्चितम् । 'अराळं वृजिनं जिह्ममूर्मिमत्कुञ्चितं नतम्' इति सिंहः ॥

1 तनू ॥

पदा—सेति ॥ सा तस्मिन् यूनि अभिलाषबन्धं शालीनतया वक्तुं न शशाक। अभिलाषस्य बन्धं स्थिरीभावम्। शालीनतया अधृष्टतया। 'शालीनकौपीने अधृष्टाकार्ययोः' इति निपातः। 'स्यादधृष्टे तु शालीनः' इत्यमरः। सः रोमाञ्चलक्षेण अरालकेश्याः गात्रयष्टिं भित्त्वा निराक्रामत्। सः अभिलाषबन्धः। अरालाः कुटिलाः केशा यस्याः। 'अरालं वृजिनं जिह्म-मूर्मिमत्कुञ्चितं नतम्। आविद्धं कुटिलं भुग्नम्' इति सिंहः। लक्षो व्याजः। 'व्याजोऽपदेशो लक्षश्च' इत्यमरः। निराक्रामत् निश्चक्राम। वचनेन विनैवानुरागः स्फुटोऽभूदिति भावः॥

तथा गतायां परिहासपूर्वं सख्यां सखी वेत्रभृता बभाषे।
आर्ये व्रजामोऽन्यत इत्यथैनां वधूरसूयाकुटिलं ददर्श ॥ ८१ ॥

प्रका—तथेति ॥ तथागतायां तत्प्रकारं गतायाम्। तथात्वं गतायां वा। त्वप्रत्ययो गतार्थत्वान्न प्रयुक्तः। तस्यामिति शेषः। परिहासपूर्वं परिहासं पुरस्कृत्य प्रयोजनीकृत्य। परिहासार्थमित्यर्थः। सख्या सखीति परिहास-हेतुं परस्परविस्रम्भं द्योतयति। आर्ये इत्यामन्त्रणेन सौजन्यात्प्रत्याख्यान-पारुष्यं कर्तुमशक्ता सती केवलमत्र तिष्ठसि चित्तं पुनस्तवारोचकिन्याः पूर्वव-दत्रापि न लग्नमिति व्यज्यते। तच्च वस्तु व्रजामोऽन्यत इत्येतत्सिद्ध्यङ्गतया गुणीभूतम्। सकलवाक्यार्थप्रतिपत्त्यनन्तरं तु, तत्तादृशं तवारोचकित्वमेकपदे कुत्र गतमिति परिहासो ध्वन्यते। सोऽप्यसूयाकुटिलदर्शनसिद्ध्यङ्गत्वाद्गुणीभूतः। यतः परिहासजनितमन्युसमुत्थात्रासूया। तस्याश्च कुटिलदर्शनमनुभावः। सा च परिहाससूचितलज्जयासहनम्। यदाह—'परोत्कर्षाक्षमासूया गर्वदौर्जन्य-मन्युजा' इति। परिहासपूर्वशब्दस्पृष्टत्वाच्च गुणीभावः। वरणस्य मनसि निर्वृत्तत्वाद्वधूरित्युक्तिः। वधूश्च नवोढा। 'वधूः स्त्रीमात्रभार्ययोः नवोढा-स्नुषयोः' इति केशवः॥

पदा—तथेति ॥ तस्यां तथागतायां वेत्रभृता सख्या सखी परिहास-पूर्वं बभाषे। बभाष इति कर्मणि लिट्। परिहासोक्त्युक्तेर्युक्ततां वक्तुं सखीपदम्।

1 स्यां॥

किमित्यत्राह — आर्ये वयम् अन्यतः व्रजाम इतीति। अन्यत इति सप्तम्यर्थे तसिः। अन्यत्रेत्यर्थः। अथ वधूः एनाम् असूयाकुटिलं ददर्श। वधूर्नवोढा। वरणस्य मनसैव कृतत्वात् वधूपदप्रयोगः। 'वधूः स्त्रीमात्रभार्ययोः नवोढयोषा-स्नुषयोः' इति केशवः। असूयया कुटिलं वक्रम्। एतच्च क्रियाविशेषणम्॥

सा चूर्णगौरं रघुनन्दनस्य
धात्रीकराभ्यां करभोपमोरूः।
आसञ्जयामास यथाप्रदेशं
कण्ठे गुणं मूर्तमिवानुरागम् ॥ ८२ ॥

प्रका—सेति॥ चूर्णगौरं रोचनादिमङ्गलचूर्णलोहितम्। करभो मणिबन्धकनिष्ठिकामूलयोर्मध्यस्थः करबहिर्भागः। 'मणिबन्धादाकनिष्ठं करस्य करभो बहिः' इति सिंहः। तदुपम ऊरुर्यस्याः। आसञ्जयामास अर्पयामास। यथाप्रदेशं स्थानानतिक्रमेण। गुणं तन्तुम्। तेन तद्ग्रथिता माला लक्ष्यते। मूर्त-मिवेत्युत्प्रेक्षायास्तद्गमकत्वं हेतुः। स्पृहणीयतातिशयप्रतीतिश्च फलम्। अत्राभिलाषिकशृङ्गारव्यभिचारिभूतव्रीडाजडतादिसद्भावेन स्तम्भकम्पादिपरवशा नायिका गुणासञ्जने धात्रीकरयोः करणत्वमङ्गीकृतवती। अन्यथा तदासञ्ज-नमेव दुःसंपादम्। किमुत यथास्थाननिवेशनम्। तच्च क्रियापौष्कल्यमादरं द्योतयति॥

पदा—सेति॥ सा रघुनन्दनस्य कण्ठे धात्रीकराभ्यां गुणं यथा-प्रदेशं आसञ्जयामास। धात्र्या उपमातुः कराभ्यामेव करणाभ्याम्। आभिला-षिकशृङ्गारव्यभिचारिभूतैर्व्रीडाजडतादिभिः स्तम्भकम्पादिसंभवो धात्रीकरयोः करणत्वोपादाने हेतुः। अन्यथा त्वर्पणमात्रमपि न सिद्ध्येत्। किं पुनर्यथाप्रदेशा-र्पणम्। गुणं तन्तुम्। तेन तद्ग्रथिता माला लक्ष्यते। 'गुणो मौर्व्यप्र-धानयोः। उपकारे सूपकारे तन्तुरज्ज्विन्द्रियेषु च॥ सत्त्वादौ भाग आवृत्तौ सन्ध्यादौ द्रव्यमाश्रिते। महाभूतेषु शौक्ल्यादौ दोषस्य प्रतियोगिनि॥' इति केशवः। यथाप्रदेशं प्रदेशानतिक्रमेण। आसञ्जनमर्पणम्। मूर्तम् अनुरागम्

इव। गुणार्पणस्य अनुरागगमकत्वादनुरागत्वोत्प्रेक्षा। मूर्तं मूर्तिमन्तम्। चूर्णैर्गोरोचनादिमङ्गलचूर्णैः गौरं लोहितम्। करभो मणिबन्धकनिष्ठिकामध्यबहिर्भागः। 'मणिबन्धादाकनिष्ठं करस्य करभो बहिः' इति सिंहः। तदुपमावूरु यस्याः। 'ऊरूत्तरपदादौपम्ये' इत्यूङ्प्रत्ययः ॥

तया स्रजा मङ्गलपुष्पवत्या[1]
विशालवक्षःस्थललम्बया सः।
अमंस्त कण्ठार्पितबाहुपाशां
विदर्भराजावरजां वरेण्यः ॥ ८३ ॥

प्रका — तयेति ॥ कण्ठार्पितबाहुपाशाम् आत्मायत्तामित्यर्थः। वरणाभावमात्रमेव तत्प्राप्तावन्तरायः पूर्वं शङ्कित इति बाहुस्पर्श इव स्रक्स्पर्शेऽपि सकलसात्त्विकोदयः सञ्जात इति च ध्वन्यते ॥

पदा—तयेति ॥ सः तया स्रजा विदर्भराजावरजां कण्ठार्पितबाहुपाशाम् अमंस्त। कण्ठे अर्पितौ बाहुपाशौ प्रशस्तौ बाहू यया। स्रक्स्पर्शेऽपि सकलसात्त्विकविकारः संजात इत्यनेन ध्वन्यते। मङ्गलार्थानि पुष्पाणि सन्त्यस्यामिति मङ्गलपुष्पवती। विशाले वक्षःस्थले लम्बत इति विशालवक्षःस्थललम्बा। वरेण्यः श्रेष्ठः ॥

शशिनमुपगतेयं कौमुदी मेघमुक्तं
जलनिधिमनुरूपं जह्नुकन्यावतीर्णा।
इति समगुणयोगप्रीतयस्तत्र पौराः
श्रवणकटु नृपाणामेकवाक्यं विवव्रुः ॥ ८४ ॥

प्रका —शशिनमिति ॥ मेघमुक्तं मेघेभ्यः पृथग्भूय प्रकाशमानम्। अत्र नायकः शशित्वेन, नायिका कौमुदीत्वेन, राजानो मेघत्वेन, चाध्यवसीयन्त

1 पुष्पमय्या।

इत्यतिशयोक्तिः । पुनश्च, नायको जलनिधित्वेन, नायिका जह्नुकन्यात्वेन चेति द्वितीया। समगुणयोर्नायकयोर्योगेन प्रीतिर्हर्षो येषाम्। तत्रेति स्वयंवरसमाजे। पौरा इति तटस्थजनोपलक्षणम्। तेषां हि गुणमात्रानुरगित्वादनुरूपसङ्गमो हर्षाय। इतिशब्दावच्छिन्नं चरणवाक्यं हर्षस्यानुभावः। तत्राप्यनुरूपमिति विभावतानुसन्धानं द्योतयति। तत्समागमस्य योऽपायः शङ्कितस्तन्निवृत्तिरुद्दीपनविभावः। सा च मेघमुक्तमित्यनुसंहिता। एकवाक्यमित्यत्रैकशब्दः केवलार्थः। अतटस्थैरपि तद्विपरीतं वाक्यं नोक्तमित्यर्थः। विवव्रुरुच्चैरुच्चारयामासुः॥

पदा — शशिनमिति॥ इयं कौमुदी मेघमुक्तं शशिनम् उपगता। मेघेभ्यो मुक्तं पृथग्भूय प्रकाशमानमित्यर्थः। अत्र नायिका कौमुदीत्वेनाध्यवसीयते, नायकः शशित्वेन, राजानो मेघत्वेन च, इत्यतिशयोक्तिः। जह्नुकन्या अनुरूपं जलनिधिम् अवतीर्णा। अत्र नायिका जाह्नवीत्वेन, नायकः समुद्रत्वेन इत्यतिशयोक्तिः। पौराः इति तत्र एकवाक्यं विवव्रुः। तत्र स्वयंवरसमाजे। विमतिपत्तिरहितं वाक्यमुच्चारयामासुः। समगुणयोर्योगेन प्रीतिर्येषाम्। नृपाणां श्रवणयोः कटु असह्यम्॥

प्रमुदितवरपक्षमेकतस्तत्
क्षितिपतिमण्डलमन्यतो वितानम्।
उषसि सर इव प्रफुल्लपद्मं
कुमुदवनप्रतिपन्ननिद्रमासीत् ॥ ८५ ॥

प्रका — प्रमुदितेति॥ वरपक्षा वरसहायाः। वितानं हर्षशून्येतरपक्षमित्यर्थः। 'वितानं क्रतुते शून्यम्' इति हलायुधः। कुमुदवनेन प्रतिपन्ना निद्रा यत्र। अहनीत्युपमेयेऽप्येककालतां द्योतयति। उपमया च क्षितिपतिमण्डलभागयोर्दूरवैषम्यं द्योत्यते। अत्रोत्तरसर्गप्रकंस्यमानसंग्रामबिन्दुरुपक्षिप्तः॥

इत्यरुणगिरिनाथस्य कृतौ रघुवंशप्रकाशिकायां
॥ षष्ठः सर्गः ॥

---

१ उषसि ॥

**पदा—प्रमुदितेति ॥** एकतः प्रमुदितवरपक्षम् अन्यतः वितानं तत् क्षितिपतिमण्डलम् अहनि प्रफुल्लपद्मं कुमुदवनप्रतिपन्ननिद्रं सरः इव आसीत्। एकतः एकस्मिन् भागे प्रमुदिताः वरपक्षाः वरस्य बन्धवो यस्मिन्। वितानं हर्षशून्यमित्यर्थः। 'वितानं ब्रुवते शून्यम्' इति हलायुधः। कुमुदवनेन प्रतिपन्ना प्राप्ता निद्रा यस्मिन्। उभयोरपि पक्षयोरत्यन्तभेद उपमया द्योत्यते। अत्र राजपक्षाणां वैलक्ष्येण वक्ष्यमाणो युद्धोद्यमः सूचित इत्युत्तरसर्गार्थबिन्दुरुपक्षिप्तः ॥

इति श्रीकृष्णशिष्यस्य नारायणस्य कृतौ रघुवंशव्याख्यायां पदार्थदीपिकायां षष्ठः सर्गः ॥

...............................................